राजा — सूत! दूरममुना सारङ्गेण समाकृष्टा वयम् ! अयमिदानीमपि

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ७ ॥

---

पिनाकमीश्वरम् । अत्र चक्षुषोऽनेकव वर्णनाद्विशेषालङ्कारः । विशिष्टराजदर्शनेनात्मनि पिनाकिदर्शनक्रियोत्प्रेक्षा च । आत्मावस्था हि नोत्प्रेक्ष्येति मते विशिष्टराजदर्शनयत्नेनाशक्यपिनाकिदर्शनकरणादन्यो विशेषः । इवेति वाक्यालङ्कारे अवधारणे वा । अनेन पिनाकिसाम्यद्योतनद्वारा राज्ञो लोकोत्तरं वीराग्रेसरत्वं मृगस्य पलायनेऽपि परिभूतप्रायत्वं च द्योत्यत इत्युत्साहोपोद्बलनम् । अहो मृगस्य वेगातिशयस्तन्निमित्तभूतस्तवाध्यवसायविशेषश्चेति विस्मयः, प्राधान्येन तदुपस्कृता राजविषयिका रतिश्च ध्वन्यते । मृगरूपो ब्रह्मापि कृष्णेन कळङ्केन सार इति च व्यज्यते । अत्र वृद्धिरादैजिति सूत्रे वृद्धिशब्दवदायुष्मान्निति मङ्गळार्थमपि । कृष्णसार इत्यत्रेश्वरस्मरणं चेत्यङ्कारम्भेऽपि मङ्गळमिति ॥

मृगस्य वेगातिशयेन विस्मयमनुवदन्नाह सूतेत्यादि । अमुना दूरे दृश्यमानेन सारङ्गेणेति पूर्ववद्वेगातिशयं सूचयति । समाकृष्टाः सम्यगाकृष्टाः । आकर्षणेनानयनं लक्ष्यते । तदायत्तगतित्वं व्यङ्ग्यम् । वयमिति सूतमप्यात्मन्यन्तर्भाव्योक्तिरभिगम्यगुणद्योतिका मृगयाकुशलत्वादिकं च सूचयति । वयमप्यमुना दूरं समानीता इति विस्मयः । तस्यैव परिपोषं मृगगतिस्वभाववर्णनेन दर्शयत्ययमित्यादि । इदानीमपि देहपातयोग्ये कालेऽपि न केवलं प्रयाणारम्भ एवेत्यर्थः । ग्रीवाया भङ्गेन पश्चादवलोकनार्थेन विवर्तनेन । भङ्गशब्द ऊर्मिसाम्यं द्योतयति, अभिरामं वलितग्रीवविलासिनीविभ्रमवीक्षणवन्म-

सूत — आयुष्मन् ! उत्खातिनी भूमिरिति मया रश्मिसंयमनाद्रथस्य मन्दीकृतो वेगः। तेन मृग एष विप्रकृष्टान्तरः संवृत्तः। सम्प्रति समदेशवर्तिनस्ते न दुरासदो भविष्यति ॥

---

नोऽरम् । मार्गावलोकनाय दृष्टः पुरोऽपि प्रेरणान्मुहुरिति । अनुपततीति दर्शने हेतुः । बद्धदृष्टिः बद्धपदेन संबन्धं लक्षयता दर्शने तात्पर्यातिशयस्तेन भयातिशयश्च द्योत्यते । भयादिति हेतूक्त्या "भयरुषोश्च तदिङ्गितबोधन"मित्यस्य राज्ञः सिद्धिरासीदिति गम्यते । भूयसा बाहुल्येन। विभक्तिप्रातिरूपकमव्ययम्। चीयतेऽन्नादिभिरिति काय इत्यनेन परिपुष्टधातुत्वं द्योत्यते । प्रविष्ट इत्यनेन संकोचो लक्ष्यते । निर्भयप्रदेशप्राप्तिर्व्यङ्ग्या । अत्यल्पमपि वैदूर्यं लब्धुं नितरां संकुचितपृष्ठ इत्यर्थः । अर्द्धमवलीढैश्चर्वितैरिति तत्समये राज्ञाभियुक्तत्वं द्योतयति । श्रमेण "श्रमः खेदोऽध्वरत्यादिजात" इति लक्षितेन विवृतादित्यनेनोर्ध्वश्वासादयो द्योत्यन्ते मुखात् भ्रंशिभिः पारवश्यातिशयेन स्वयं पतद्भिः दर्भैः । कीर्णवर्त्मेत्यनेन कादाचित्के मृगस्यादर्शने दर्भैस्तद्गतिर्ज्ञायत इति गम्यते । उदग्रं वेगातिशयशालि प्लुतं प्लवनं यस्य । प्लवने ह्युभयत्र गतिर्भवति । तत्र विशेषमाह वियतीति. बहुतरं कालप्रमाणतो देहसंबन्धाच्चातिशयेन बहु । स्तोकमल्पम् । उर्व्यामित्यन्वर्थं महत्यामपि भूमौ । आभ्यां लक्ष्यस्य वक्रत्वेन दुर्वेधत्वं च व्यज्यते । प्रयाति धावति । पश्य विस्मयालम्बनमेवं गमनमवलोकय । अत्र काव्यलिङ्गं स्वभावोक्तिश्च । तया परिपुष्टो भयानको रसः। स च प्राधान्येन व्यज्यमानस्याद्भुतस्याङ्गम् ।

अथ मृगमनुगच्छति रथे भूमिं विषमामवलोक्य झटिति रश्मिं संयम्य स्वापराधपरिहाराय विस्मयाविष्टं स्वामिनं निवेदयत्यायुष्मन्नित्यादि । उत्खातिनी विषमा । इतीति हेतौ । रश्मीनां प्रग्रहाणां संयमनात्संयमं कृत्वा । ल्यब्लोपे पञ्चमी । मन्दीकृतः, च्व्यर्थोऽविवक्षितः । तेन रथवेगमन्दीकरणेन । मृग इति मृग्यत इत्य-

राजा—तेन हि मुच्यन्तामभीशवः ।
सूतः—यदाज्ञापयत्यायुष्मान् (रथवेगं रूपयित्वा) आयुष्मन्! पश्य पश्य ।

...........................................................................................

न्वर्थम् । विप्रकृष्टं दूरमन्तरमवकाशो यस्य तथा । संवृत्तः दूरीभूत इत्यर्थः । अथातिक्रान्तप्रायविषमभूमिः समभूमिमवलोकयन्नाह सम्प्रतीति । न दुरासद इति निषेधमुखेनोक्ती राज्ञो दुरासदत्वशङ्कां स्वयं संभाव्यमानां सूचयति । अत्र राजानमित्यादिवाक्यानां भावमन्यथापि व्याचक्षते । राजानं मृगं चावलोक्य मृगस्य दूरस्थितिं ततश्चातिदीर्घमार्गलङ्घनेऽपि तत्समीपाप्राप्त्या राज्ञो रोषलेशं चावलोकनेनावगम्येत्यर्थः । अथाशङ्कितं रोषलेशं शमयितुं प्रोत्साहयितुं च राज्ञो वीर्यातिशयं मृगस्य परिभूतप्रायत्वं सूचयन् स्तौत्यायुष्मन्नित्यादिना । अथ राजा सूताशङ्कितं रोषलेशमासूचयन्नाह सूतेत्यादि । सारङ्गेण क्षुद्रमृगेन न तु सिंहादिमहासत्त्वेनेत्यनुचितत्वं द्योत्यते । समाकृष्टा इत्यनेनानयनस्यानिष्टत्वममृष्यत्वं च व्यञ्जयता रोषलेशोऽपि सूच्यते । अत्रामुमनुधावद्भिरस्माभिरतिदीर्घो मार्गो लङ्घितः, न चासादितोऽयं किमिति रथवेगो मन्दोऽभूदित्यनेन वाक्येन द्योत्यते । अथाद्याप्ययमस्मानाकर्षतात्याहायमिदानीमित्यादि । अनेनाद्याप्यस्य गतिवेगस्याव्याहतत्वादियता रथवेगेन दुरासदोऽयं, तेन तूर्णं चोदयाश्वानिति च द्योत्यते । सूतस्तद्भावमवगम्य स्वापराधं परिहरन्नाहोत्खातिनीत्यादीति ॥

सूतं प्रोत्साहयति तेन हीत्यादि । तेन हीति तर्हीत्यर्थेऽव्ययम् । अभीशवो रश्मयः । अत्र राज्ञ औत्सुक्यं व्यज्यते । यदाज्ञापयतीति समुदाचारः । तथानुष्ठीयत इति शेषः । स्वामिनियोगो हि भृत्यस्य परमो लाभ इति भावः । एवमुत्तरत्राप्यूह्यम् । रूपयित्वाभिनीय । अथ रश्मिमोचनेन चोदितानामश्वानां वेगातिशयं निर्वर्ण्य सविस्मयमाहायुष्मन्नित्यादि । संबुद्धिद्वैरुव्यवस्तुदर्शनत्वरण-

मुक्तेषु रश्मिषु निरायतपूर्वकाया
निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।
आत्मोद्धतैरपि रजोभिरलङ्घनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥ ८ ॥

---

तत्परा । पश्य पश्येति वीप्सापि विस्मयेन संभ्रमं द्योतयति । किं द्रष्टव्यमित्यत आह मुक्तेष्विति । रश्मिषु मुक्तेष्विति रथ्यानां तत्प्रतीक्षणपरत्वं द्योतयति । निरायतः रथाकर्षणवेगवशान्नितरामायतः । निष्कम्पा वेगवायुनाकर्णस्तम्भितत्वान्निश्चलाः । इदं पूर्वं कम्पसत्वं सूचयति । चामराः कर्णालंकाराः । निभृता निश्चला ऊर्ध्वा ऊर्ध्वाग्राः । अत्र विशेषणै रथ्यानां वेगस्य क्रमोत्कर्षः प्रतीयते । अत एवाहात्मेत्यादि । आत्मभिरुद्धतैरुत्क्षिप्तैः । रजोभिरपीति रजःपरमाणूनामतिलाघवेनोत्पतनस्वभावात्तल्लाघवोत्कर्षमपिशब्दो द्योतयति । अलङ्घनीयाः उत्पतनसमय एव धावनादप्राप्याः । लघिष्ठा इत्यर्थः । केचित्तु, रजोभिः वायुनानीतै रजोभिरप्यलङ्घनीया अतिक्रान्तुमशक्या इत्यनेन वायुवेगातिशयितवेगत्वं द्योत्यते । भाविशुभसूचकं वायोरानुकूल्यं चेत्याहुः । अमी भवदीया इति द्रष्टव्यत्वे संबन्धविशेषं दर्शयति । मृगजवाक्षमया मृगत्वसाजात्यात् संभाव्ययाऽसहनरूपेर्ष्यया । इव वस्तुतः सूतचोदनं हेतुः । रथ्या इत्यन्वर्थं रथं वहन्त एवैवं धावन्तीत्यतिचित्रमिदमिति द्योतयति । अत्र हेतूत्प्रेक्षा स्वभावोक्तिश्च । उत्प्रेक्षया झटिति मृगसमीपप्राप्तिर्व्यज्यते । तृतीयपादे संबन्धं द्योतयता आत्मशब्देन अनिवार्यार्थकालङ्घनीयपदेन च यथा कश्चित् कस्मिंश्चिदक्षान्त्या सहसोत्पतन्नात्मीयैर्निवारितोऽपि न तिष्ठति तथेत्युपमा ध्वन्यते, तया चाक्षमायाः परा काष्ठेति । अत्र मनोऽनुसारिणामिन्द्रियाणां विषयेषु प्रवर्तनस्य बन्धमुक्तस्य कस्यचिदुन्मत्तस्य च समाधिः । अत्र रथ्यविषयकप्रीतिभावादिभिरुपस्कृतो विस्मयो रसः ॥

राजा— सत्यमतीत्य हरितो हरींश्च वर्तन्ते वाजिनः । तथा हि—

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्द्धे विच्छिन्नं भवति कृतसंधानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथजवात् ॥ ९ ॥

---

तदनुमोदमान आह सत्यमित्यादि । सत्यमिदमत्यद्भुतमेव । कुत इत्यत्राहातीत्येत्यादि । हरितः सूर्यस्य हरीनश्वान् । हरित्सूर्येऽपि सूर्याश्व इति वैजयन्ती । चकारोऽप्यर्थस्तेषामुत्कर्षं व्यञ्जयति । अतीत्य वर्त्तन्ते अतिशेरते । गमनवेग इति यावत् । अत्र व्यतिरेकः । वाजिन इत्यनेन किं पक्षवन्त इत्युत्प्रेक्षा । पक्षिणः शरस्य वोपमा वा व्यज्यते । "वाजिनोऽश्वेषु पक्षिण" इत्यमरः । तथा हि तदेवोपपादयति । यदालोक इति । अत्र प्रथमपादः पुरोवीक्षणविषयः द्वितीयोऽर्थभेदेन पृष्ठवीक्षणविषयः, पुरोवीक्षणविषयो वा तृतीयः पृष्ठवीक्षणविषय इति विवेकः । यत् गिरिशृङ्गादि । आलोके दर्शने । तिङन्तं वेदम् । पश्यामीत्यर्थः । विपुलतां स्थूलत्वम् । व्रजति झटिति सामीप्यादिति भावः । अत्र सतः सिद्धस्यैव स्थूलत्वस्य प्रापणोक्तिः प्रतीत्यनुसारेण । यद्वननिकुञ्जादि । अर्द्धे मध्ये विच्छिन्नं सान्तरम् । कृतसंधानं केनापि कृतसंश्लेषमिवेत्युत्प्रेक्षया तन्निमित्तमविच्छिन्नत्वं गम्यते । झटिति दूरत्वादविच्छिन्नमालोक इत्यर्थः । यद्वा यन्नदीस्रोतःप्रभृति । अर्द्धे विच्छिन्नं समुन्नतासिकतादिप्रच्छादनात्सान्तरमालोके । तत् झटिति सामीप्यादविच्छिन्नं भवतीत्यर्थः । यत् सीमान्तप्रतिपादकवृक्षषण्डादि । समा रेखा पङ्क्तिराकृतिर्वा यस्य । झटिति दूरत्वादवक्रं पश्यामीत्यर्थः । उपपाद्यमाह न म इत्यादि । मे तत्तदालोकनकुतूहलशालिनो मम । अत्राद्यपादार्थो न मे दूर इत्यर्थे तृतीयपादार्थो न पार्श्वे इत्यत्र द्वितीयपादार्थश्चार्थभेदेन तत्र हेतु-

सूतः—आयुष्मन्! अस्य खलु ते बाणपातवर्तिनः कृष्णसारस्यान्तरे तपस्विन आगताः।

राजा—(ससंभ्रमम्) तेन हि प्रगृह्यन्तां वाजिनः।

सूतः—यथाज्ञापयत्यायुष्मान्। (रथं स्थापयति)

---

रिति काव्यलिङ्गम्। सूक्ष्मत्वेनालोकितस्य तत्क्षणमेव विपुलताप्राप्तेरुक्त्या पूर्वं दूरवर्तित्वं झटिति समीपवर्तित्वं च कारणं गम्यते। एवमन्यत्रापीति कार्यकारणयोर्द्वयोः प्रस्तुतत्वात् पर्यायोक्तं मतभेदेन प्रस्तुताङ्कुरो वा। आपाततो विरोधप्रतीतेर्विरोधाभास उत्प्रेक्षा स्वभावोक्तिश्च। अत्र प्रथमादिपदेषु क्रमात् शिवादिधरण्यन्ततत्त्वविचारजीवपरैक्यभावनादेः समाधिः। विश्वस्मिन् भावेऽपि मायावशाद्वस्तुत्वमवस्तुत्वं च रज्जुसर्पादिवत् काल्पनिकमेवेत्यर्थस्य ऐन्द्रजालिकक्रीडाप्रकारस्य च समाधिः। अत्रापि रसः पूर्ववत्॥

अथ सहसा समागतांस्तापसानवलोक्य सूतः ससंभ्रमं राजानमाहायुष्मन्नित्यादि। सूत पश्यैनं व्यापाद्यमानमिति शरसन्धानं नाटयति। नैपथ्ये भो भो राजन्नाश्रममृगोऽयं न हन्तव्यो न हन्तव्यः। सूतः आकर्ण्यावलोक्य चेति पाठश्च कचिद्दृश्यते। पतत्यस्मिन्निति पातः। पतनोचितो देशः कृष्णसारस्य अर्थादस्माकं च। बाणेत्याद्युक्तेर्बाणस्य वा अन्तरे मध्ये। आगता आगत्यावस्थिता इत्यागमनस्य बुद्धिपूर्वकत्वं द्योतयति। "विप्राग्न्योर्विप्रयोरग्न्योर्दम्पत्योरिषुलक्ष्ययोः। नान्तरा गमनं कुर्यान्न देवबलिपीठयो"रिति वचनेऽपि यदेषामिषुलक्ष्ययोर्मध्ये समागमनं तन्मृगरक्षार्थमिव प्रतिभाति। तत्सहसा शरविमोक्षं मा कार्षीरित्यनेन द्योत्यते। तत्रात्यन्तधार्मिकस्य राज्ञो व्यापारमाह ससंभ्रमं तेन हीत्यादि। प्रगृह्यन्तामित्यनेन स्थापनं लक्ष्यते। तस्य दुष्करत्वं व्यङ्ग्यम्। स्थापयतीति झटिति स्थापनात्सूतस्य शिक्षातिशयः प्रतीयते॥

(प्रविष्ट आत्मना तृतीयो वैखानसः)

वैखानसः—राजन्नाश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।
तत् साधु कृतसन्धानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥ १० ॥

---

आत्मना तृतीयस्त्रित्वसंख्यापूरकः । शिष्याभ्यां सहित इत्यर्थः । वैखानसस्तापसविशेषः । अथ समिदाहरणाय प्रस्थितो वैखानसो मध्येमार्गं जिघांसया कमप्याश्रममृगमनुसरन्तं राजानमवलोक्य वन्यबुध्यायं हन्तुमुद्युक्त इति निश्चित्य परमार्थमभिदधानस्तन्निषिद्धाचरणान्निवारयति राजन्नित्यादि । राजन्निति रञ्जनस्वभावस्य तवेदमनुचितमिति द्योतयति । यद्वा मृगया तव स्वधर्म एवेति द्योतयन्नविहितानुष्ठानशङ्कां परिहरति । अयं भवद्बाणलक्ष्यभूतः । आश्रममृगः न वन्य इति भावः । अतो न हन्तव्यः । प्रतिषेधस्य गौरवद्योतनाय हेतोः पूर्वनिर्देशः । हन्तव्य इत्यत्र विधिप्रधान एवार्थः । अवध्यवधे राज्ञो महापातकप्रसङ्गात् । कृत्यप्रत्ययेन स्वेषामपि राजनि वर्णाश्रमगुरुत्वेन गौरवं द्योतयति । वीप्सया प्रतिज्ञानिर्बन्धं च । आश्रममृग इत्यनेन मृगे वात्सल्यातिशयं सूचयता तद्वधे शोकाद्यतिशयं च । अथ राज्ञस्तद्वधे निर्बन्धमाशङ्क्य समूलमेव परिहर्तुं सोपपत्तिकमाह । तदित्यादि । तदाश्रममृगत्वेन हन्तव्यत्वाभावाद्वक्ष्यमाणाद्वा । साध्विति सन्धानक्रियाविशेषणेन वधाभिसन्धिर्व्यज्यते । प्रतिसंहरणस्य दुष्करत्वमनेन द्योत्यते । तदपि प्रधानधनुर्धरस्य ते सुकरमिति भाव इति केचित् । प्रतिसंहर विधौ लोट् । तेनैव नः कृतार्थता स्यादिति भावः । सायकं स्यति नाशयतीत्यन्वर्थम् । अथोक्तमर्थमन्वयव्यतिरेकाभ्यां समर्थयत्यार्त्तेति । आर्त्तत्राणाय आर्त्तांस्त्रातुम् । वः क्षत्रियाणाम् । अनेन जातिधर्मस्त्वयापि परिपाल्य इति द्योत्यते । अत्र कामन्दकः "पीडि-

राजा — एष प्रतिसंहृतः । (इति यथोक्तं करोति)

वैखा — जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि ॥ १२ ॥

उभौ — (बाहुमुद्यम्य) चक्रवर्तिनं पुत्रमाप्नुहि, चक्रवर्तिनं पुत्रमाप्नुहि ।

राजा — (सप्रणामम्) प्रतिगृहीताऽशीः ।

---

तानामनाथानां कुर्यादश्रुप्रमार्जनं''मिति । व्यङ्ग्यं प्रकृतोपयोगिनमर्थमाह नेति । अनागसि निरपराधे । अत्र तव सायको दीनममुं व्याघ्रादिभ्यस्त्रातुं सस्यभक्षणाद्यकरणेन निरपराधेऽस्मिन् प्रहर्तुं नेति प्रस्तुतो विशेषो गम्यत इति सामान्यनिबन्धनाप्रस्तुतप्रशंसा । काव्यलिङ्गं च । अत्र मतिर्मुनिनिष्ठा राजविषयिणी रतिश्च व्यज्यते ॥

एष इत्यादि । एष शरः प्रतिसंहृत इति भाविनोऽपि भूतत्वेनोक्तिर्नियोगकरणस्याविलम्बं द्योतयति । इतीत्यादिना क्षिप्रकारित्वलक्षणं दक्षत्वं तापसेषु भक्तिविनयादिकं च । अथ राज्ञ उचितकारित्वेन प्रीयमाणस्तत्प्रशंसापुरःसरमभिलषितं वस्त्वाशास्ते । जन्मेत्यादि । पुरोरित्यसमस्तेन तस्य पितृनियोगानिष्ठतया पित्रे स्वयौवनं दत्त्वा तदीयजरास्वीकाररूप इतरविलक्षण उत्कर्षो द्योत्यते । युक्तरूपं, प्रशंसायां रूपप् । पुरुवंशजस्य पूरुवद्वर्तनाद्युक्ततरमित्यर्थः । इदं स्वार्थं विहायास्मन्नियोगकरणम् । अत्र मुनेर्हर्षो व्यज्यते । तत्फलमाह पुत्रेत्यादि । पुत्रेत्यन्वर्थं तत्प्राप्तेरावश्यकत्वं द्योतयति । एवमेवंविधैस्त्वद्गुणतुल्यैरित्यर्थः, गुणैरुपेतमिति । इदमेव पूर्वमाशास्यं चक्रवर्तित्वस्यैतदव्यभिचारित्वादिति भावः । अत्रापि राजविषयरतिर्भावः । अत्राशिषो मुनिप्रयुक्तत्वादव्यभिचारः प्रतीयते । यदुक्तं भवभूतिना ''ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावती''ति । बाहुमुद्यम्येति । इयमाशीर्वादमुद्रा । चक्रवर्तिनमित्यादेर्द्विरुक्तिर्द्वयोर्वचनत्वात् । सप्रणाममित्यादिना राज्ञ आदरातिशयः कृतार्थता च द्योत्यते ॥

वैखा—राजन्! समिदाहरणाय प्रस्थिता वयम् । एष खलु कण्वस्य महर्षेः कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्यातिपातः, प्रविश्यात्र प्रतिगृह्यतामतिथिसत्कारः । अपि च—

रम्यास्तपोधनानामपगतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद् भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥ १२ ॥

---

अथ कार्ये त्वरमाणस्तन्निवेदयन् राजानमवसरोचितं सत्करोति राजन्नित्यादि । समिदाहरणायेत्यादिना भवद्भिः सहागन्तुं नायमवसर इति तेन विषादश्च व्यज्यते । एषः समीपतरवर्तीत्यनेन गमने श्रमाभावो महर्षेरित्यनेन माहात्म्यातिशयश्च । कुलपतेः "सर्वविद्यासु कुशलः सर्वाश्रमपदेश्वरः । मुनिः कुलपतिर्नामे"तिलक्षितः । यद्वा कुलस्य मुनिगणस्य पतिस्तस्येत्यनेन कण्वस्य तपःप्रभावातिशयः तदाश्रमस्य मुनिगणान्वितत्वं तेन तत्र गत्वातिथ्यपरिग्रहस्य सर्वानुग्रहहेतुत्वं च द्योत्यते । अनुमालिनीतीरं मालिनीति काचिन्नदी तस्यास्तीरे। अव्ययमित्यादिना विभक्त्यर्थेऽव्ययीभावः । अनेनाश्रमस्योत्कर्षो वाससौख्यं तेन प्रवेष्टव्यत्वं च सूच्यते । अन्यकार्यस्यातिपातोऽत्ययः । नचेदित्यनेन महाराजत्वादवश्यानुष्ठेयानां कार्याणां संभावनां सूचयता तत्सत्त्वे सम्प्रति तदेवानुष्ठेयमिति सूच्यते । राज्ञि बहुमानद्योतिका उपचारोक्तिरियमिति केचित् । अत्राश्रमे । प्रतिगृह्यतां प्रार्थनायां लोट् विधौ च । तेन प्रतिग्रहस्य महाफलत्वमावेद्यते । अथाश्रमं प्राप्यातिथ्यपरिग्रहे तापसप्रीत्या न केवलं श्रेय एव परं त्वन्यथापि ते गमनमुपकारिष्यतीत्याहापिच रम्या इत्यादि । रम्याः निर्विघ्नतया समुचितदेशकालद्रव्यसहायतयानुष्ठातॄणां नित्यपरिचयेन च यथावत् क्रियमाणत्वात् पश्यतां मनोहारिणीरित्यर्थः । समवलोकने हेतुरिदम् । तपोधनानां तपःक्षयं विना त्वद्रक्षावैभवेनैव क्रियाणां निर्विघ्नतया निर्वर्तनात् प्रभूततपसामित्यर्थः । अनेन निग्रहानुग्रहसामर्थ्यं व्यज्यते । उक्तार्थयोर्हेतुमाहापगतविघ्ना इति । क्रिया य-

राजा—अपि सन्निहितोऽत्र कुलपतिः? ।

वैखा—इदानीमेव दुहितरं शकुन्तलामतिथिसत्कारायादिश्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ॥

---

ज्ञादीः । बहुवचनेन नानाविधत्वमुक्तम् । समवलोक्य सम्यक्सावधानमवलोक्य । इदं विधिगर्भम् । तत्फलमाह ज्ञास्यसीत्यादि । कियत् किंपरिमाणकम् । भुजः भुज्यते रक्ष्यतेऽनेनेत्यन्वर्थकोऽयं त्वय्येव प्रयोक्तव्य इति द्योत्यते । एकवचनेनेतरानपेक्षत्वं च । मौर्व्या तदाघातेन जनितः किणः 'किणो रूढव्रणस्थान' इति केशवः स एवाङ्कश्चिह्नं, अङ्क इत्यनेन तस्य भूषणसाम्यं शब्दशक्त्या द्योत्यते । "अङ्को भूषणलक्ष्मणो"रिति हैमः । यस्मिन्नित्यनेन रक्षाजागरूकत्वं तेन तद्विषयः क्लेशश्च द्योत्यते । मौर्वीकिणाङ्को मे भुजः क्रियद्रक्षतीति त्वं ज्ञास्यसीति संबन्धः । न केवलं जनपदान्येव किन्तु दुर्गाणि तपोवनान्यपि, न केवलं प्रत्यर्थिभ्यो नरेभ्य एव किन्तु राक्षसेभ्योऽपीति रक्षणस्येयत्तां ज्ञास्यसीत्यर्थः । अनेन रक्षारूपप्रवृत्तेः साफल्यबुध्या तव परमानन्दः पुनरपि तस्यां तात्पर्यातिशयस्ततस्तपोधनादीनां प्रीतिस्तेन तवाभ्युदयश्चेति द्योत्यत इति प्रस्तुतात् कारणात् प्रस्तुतं कार्यं गम्यत इति प्रस्तुताङ्कुरः । पर्यायोक्तं वा । काव्यलिङ्गं च । वीरोपस्कृता राजरतिर्भावः ॥

अथ तन्निमन्त्रणेनाश्रमगमनं निश्चिन्वन् कुलपतिदर्शनौत्सुक्येन तत्सान्निध्यं पृच्छत्यपीत्यादि । अपीति प्रश्ने । अत्राश्रमे । भक्तिबहुमानादिकं द्योतयता कुलपतिरित्यनेन तत्सान्निध्यसंभावनापि सूच्यते । इदानीमित्यादि । इदानीमेवेत्यनेन कुलपतेः प्रत्यागमनस्य चिरकालभावित्वं तेन तद्दर्शनालाभं प्रत्यनुशोचनं च व्यज्यते । कुलपतावसन्निहितेऽप्यातिथ्यस्य न विच्छेद इत्याह । दुहितरमित्यादि । दुहितरमिति महर्षेस्तस्यां वात्सल्यातिशयं तदसन्निधाने तस्या एवातिथ्याद्यधिकारं, आदिश्येति तस्याः कन्यकात्वं गुणातिशयं

राजा— भवतु, तां द्रक्ष्यामि । विदितभक्तिं मां महर्षेः करिष्यति सा ।
वैखा— साधयामस्तावत् । (सशिष्यो निष्क्रान्तः)

---

च सूचयति । प्रतिकूलं दैवं पुरातनं दुरितविशेषम् । तद्धेतुकमसुखमिति केचित् । सोमतीर्थं तन्नामकसिद्धस्थानम् । अत्र प्रतिकूलं दैवमित्यादिना भाविनं विवाहं रम्या इत्यादिना विघ्ननिवर्तनायाश्रमगमनं च सूचयति । अथ तदसान्निध्यश्रवणेन दूयमानस्तस्य स्वभक्तिज्ञानोपायं विचिन्त्याश्रमगमनं निश्चिन्वन्नाह भवत्विति । भवत्वित्यव्ययं मनसा विचारितस्य निश्चयद्योतकम् । "भवत्वान्तरसंवादे निर्दोषे स्मरणेऽपि चे"ति यादवः । कर्तव्यं निश्चितमित्यर्थः । तदाह तामिति । भवत्वित्यङ्गीकारे । कुत इत्यत्राह तामितीति केचित् । तद्दर्शनफलमाह विदितेत्यादि । विदितं भक्तिर्यस्य । दृढभक्तिरित्यादिवत् विदितमिति सामान्ये नपुंसकम् । भक्तिपदस्य प्रियादित्वेन पुंवद्भावाप्राप्तेः । मतिबुद्धीत्यादिना वर्तमाने क्तः । तद्योगे क्तस्य चेति महर्षेरिति कर्तरि षष्ठी । सा मद्भक्तिं महर्षेर्निवेदयिष्यतीत्यर्थः । अत एव तत्र गच्छामीत्यनुक्त्वैवमुक्तिः । अत्र कुलपतिविषया राजनिष्ठा रतिर्व्यज्यते । स्वकार्यत्वरया राजानमामन्त्रयते साधयाम इति । गच्छाम इत्यर्थः । तदुक्तं "प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यत" इति । यथा रघौ "साधयाम्यहमविघ्नमस्तु ते" इति । अत्र वैखानसं प्रवेश्य तन्निमन्त्रणकल्पनमाश्रमप्रवेशोपायलाभाय । तदाशिषः कल्पनं पुत्रलाभस्य तद्धेतोर्नायिकालाभस्य चानुकूलदैवसंपादनाय आशिषो गौरवाय तत्प्रयोक्तॄणां बहुत्वसंपादनार्थं शिष्ययोः कल्पनम् । कण्वगमनकल्पनं नायिकाया दैवानुकूल्यसंपादनार्थमिव राज्ञः स्वाच्छन्द्येन तद्दर्शनसंल्लापार्थं द्वितीयाङ्के वक्ष्यमाणस्य पुनरप्याश्रमप्रवेशस्य लाभार्थं चेति सर्वं स्पष्टम् ॥

राजा— सूत, तूर्णं चोदयाश्वान् । पुण्याश्रमदर्शनेनात्मानं पुनीमहे ॥

सूतः— यदाज्ञापयत्यायुष्मान् । (भूयो रथवेगं रूपयति)

राजा- (समन्तादवलोक्य) सूताकथितोऽपि ज्ञायत एव यथायमाभोगस्तपोवनस्येति ॥

सूत— आयुष्मन्! कथमिव?॥

राजा— किं न पश्यति भवान्? । इह हि—

---

अथाश्रमप्रवेशे त्वरमाणः सूतं चोदयति सूतेत्यादि । तूर्णमित्यौत्सुक्यं सूचयति ॥ चोदय प्रेरय । पुण्यमित्याश्रमस्य दर्शनस्य वा विशेषणम् । आत्मानं मनः, "आत्मार्कचन्द्रवाताहिजीवेषु परमात्मनि । देहे यत्ने धृतौ कीर्तौ बुद्धौ मनसि च श्रुत" इति केशवः । पुनीमहे वर्त्तमानसामीप्ये भविष्यति लट् । एवमुत्तरत्रापि द्रष्टव्यम । बहुवचनेनात्मनि धन्यताबुद्धिर्द्योत्यते । अवलोक्येति अवलोकनादिदं तपोवनमिति निश्चित्येत्यर्थः । अकथितः अयमाभोगस्तपोवनस्येति केनाप्यनुक्तः । अपीति विरोधे । एवेति निश्चये सूतशङ्कानिवृत्त्यर्थम् । यथेति सम्यगर्थे । यथा "आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कल" इत्यादौ । आभोगः परिपूर्णता । सा च तपोवनसूचकतत्तद्वस्तुकृता । आभोग आभोगवद्देश इति वा अकथितोऽप्ययमाभोगस्तपोवनस्येति यथावत् ज्ञायत एवेत्यर्थः । अनेन राज्ञः सूक्ष्मदर्शित्वं सूच्यते । ज्ञानसाधनं पृच्छति कथमिवेति ॥

तद्विदर्शयिषुराह किन्नेत्यादि । यदि भवान् पश्यति तर्हि स्वयमेव जानीयादिति भावः । ज्ञानसाधनमाहेह हि नीवारा इति ।

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ १३ ॥

हीति हेतौ । शुकगर्भाणामिति कोटरेषु नीवाराणां शुकार्जितत्वं तेन तेषां तद्देशेषु बाहुल्यं च सूचयति । कोटराणां मुखेभ्योऽग्रेभ्यो भ्रष्टा इत्यधःसत्त्वे हेतुः । अनेन शुकानां निरातङ्कस्थितिस्तेन तद्देशस्य दुर्जनाप्रवेष्टव्यत्वं च सूच्यते । अथ ततोऽप्याश्रमसन्निहितं देशमुपगम्याह प्रस्निग्धा इत्यादि । प्रस्निग्धा इति हेतुगर्भम् । इङ्गुदीनां तापसतरूणां फलानि स्नेहोत्पादनार्थं भिन्दन्त्येभिरिति । इङ्गुदीतैलेन हि मुनीनामभ्यङ्गो दीपश्च । वक्ष्यति "इङ्गुदीतैलमिश्रेत्यादि," ता इङ्गुदीस्नेहकृतप्रदीपा इत्यन्यत्र । सूच्यन्ते ज्ञायन्ते । "सूच पैशुन्य" इत्यस्माच्चौरादिकात् कर्मणि लट् । यथा भेद्ये सूच्यन्तेन स्थिते तमस्यद्रयोऽपि सूच्यन्ते नेति । एवकारार्थः पूर्ववत् । क्वचिदुपलाः प्रस्निग्धत्वादिङ्गुदीफलभिद इति ज्ञायन्त एवेत्यर्थः । अथ सन्निहिततरं प्रदेशमागत्याह । विश्वासेत्यादि । विश्वासस्य हिंसाद्यभावविषयकस्य उपगमात् अभिन्ना विशेषमप्रापिता पूर्ववदेवावस्थितेत्यर्थः गतिर्यैः । शब्दं रथनेमिध्वनिम् । सहन्ते तमसहमाना न धावन्तीति भावः । अनेनाश्रमावृत्तिमृगव्यतिरेको दर्शितः । अथ ततोऽप्याश्रमसन्निहितमुद्देशमागम्याह । तोयेत्यादि । तोयाधारपथाः जलाशयेभ्यस्तत्तदुटजगमनमार्गाः । चकारः सर्वसमुच्चये । वल्कलानां शिखा अग्राणि ताभ्यस्तासां वा निष्यन्दा जलस्रावास्तद्रेखाभिरङ्किताः । वैखानसानां तथा तापसीनां च वस्त्रनिष्पीडनाभावान्निष्यन्दाः । अत्र काव्यलिङ्गमनुमानमाश्रमस्वभावोक्तिश्च । सुपरिपुष्टशुकादिमत्त्वेन

सूतः—सर्वमुपपन्नम् ।

राजा—(स्तोकमन्तरं गत्वा) सूत! तपोवनवासिनामुपरोधो मा भूत् । तदेतावत्येव रथं स्थापय । यावदवतरामि ।

सूतः—धृताः प्रग्रहाः । अवतरत्वायुष्मान् ।

राजा (अवतीर्य) विनीतवेषप्रवेश्यानि तपोवनानि नाम । इदं तावत् प्रतिगृह्यताम् । (इति सूतायाभरणानि धनुश्चोपनीय) सूत! यावदाश्रमवासिनः प्रत्यवेक्ष्याहमुपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः ।

सूतः—तथा करोमि । (इति निष्क्रान्तः)

---

मनोज्ञतया तपोवने राज्ञो रतिर्व्यज्यत इति भावध्वनिः । प्रस्निग्धा इत्यत्र प्रोपसर्ग इङ्गुदीफलानां सरसत्वमाचक्षाण आश्रमस्य सौन्दर्यातिशयं ध्वनयतीति लोचनकारः ॥

राजा शमप्रधानेत्यादिवक्ष्यमाणं मनसिकृत्याह सूतेत्यादि । एतावत्याश्रमावधिभूतेऽस्मिन् देशे । उपरोधः रथध्वनिश्रवणजनितसमाधिभङ्गादिः । "विनीतवेषाभरणः पश्येत् कार्याणी"त्यादिवचनं विचिन्तयन्नाह विनीतेत्यादि । अन्यथा तपस्विनामौद्धत्यसंभावना स्यादिति भावः । निराभरणेत्यनुक्त्वा विनीतेत्याद्युक्त्या त्ववश्यं धर्तव्यानां धारणे न विरोध इति सूचयन्त्याङ्गुलीयं सूतहस्ते न दत्तमिति सूच्यते । इदमित्यनेन धनुरादि परामृश्यते । उपनीय दत्वा । एतद्राजभावप्रच्छादने सोपयोगं च । सूतं तत्कृत्ये नियोजयति सूतेत्यादि । प्रत्यवेक्ष्य योगक्षेमपर्यालोचनपूर्वकमवेक्षणं कृत्वा । आर्द्राणि सिक्तानि पृष्ठानि येषाम् । पृष्ठप्रक्षालनमश्वानां हि विशेषतः श्रमहरम् । यथा कादम्बर्यां "स्नानार्द्रपृष्ठतया विगतश्रमेषु वाजिष्वि"ति ॥

राजा– (परिक्रम्यावलोक्य च) इदमाश्रमद्वारम् । यावत् प्रविशामि । प्रविश्य निमित्तं सूचयन्)

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १४ ॥

---

परिक्रम्येति नाटकाचारः । जिगमिषितदेशं प्रति परिक्रमणेन गमनमभिनीयेत्यर्थः । एवं धर्मावाप्तिमुद्दिश्यैवाश्रमपदं प्रविशतोऽपि राज्ञः कामावाप्तिसूचकं किमपि शुभनिमित्तं प्रादुरासीदित्याह निमित्तमिति । एष्यतः फलस्य ज्ञापकमित्यर्थः । तदत्र दक्षिणबाहुस्पन्दनरूपम् । अथ तन्निमित्तेन किञ्चिदुन्मिषितकलत्रैषणावासनस्तस्य देशानौचित्येन निष्फलत्वमाशङ्क्य परिहरति शान्तमित्यादि । शान्तं शमप्रधानम् । इदमित्यनेनाश्रमपदान्तराद्व्यतिरेकं दर्शयति । आश्रमपदमित्यनेन तत्रस्था लक्ष्यन्ते । मृगादीनामपि शान्तत्वं व्यङ्ग्यम् । स्फुरति अविच्छिन्नं स्पन्दते । लटा फलस्यासन्नत्वं द्योत्यते । बाहुरर्थाद्दक्षिणः । यथा विक्रमोर्वशीये "अयमास्पन्दितैर्बाहुराश्वासयति दक्षिण" इति । अत्र यौगपद्यं द्योतयता चकारेण वाक्यार्थयोः फलद्वारा विरोधो द्योत्यते । तमेवोद्घाटयन्नाह कुत इति । किंशब्दः क्षेपे । पञ्चम्यर्थे तसिः । इह शान्तेऽस्मिन्नाश्रमपदे । अस्य बाहुस्फुरणस्य । अस्य फलमत्र केनापि न संभवतीत्यर्थः । फलं कलत्रावाप्तिरूपम् । तदुक्तमद्भुतसागरे "वामेतरकरस्पन्दो वरस्त्रीलाभसूचकः" इति । रघावपि "तस्य स्फुरति पौलस्त्यः सीतासङ्गमशंसिनि । निचखानाधिकक्रुद्धः शरं सव्येतरे भुज" इति । तस्यां रघोः सूनुरुपस्थितायामित्यादि च । अथ निमित्तेषु शुभत्वेन प्रसिद्धमिदं किमपि समीहितमकृत्वा मुधैव न भवेदिति मन्यमान आहाथवेत्यादि । अथवेत्युक्तपक्षाक्षेपे । अस्य निमित्तस्यात्रापि फलं भवेदिति भावः । उक्तमुपपादयति भवितव्यानामित्यादि । भ

(नैपथ्ये) इदो इदो सहीओ (इतइतः सख्यौ) ।

राजा—(कर्णं दत्वा) अये दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते । यावदवगच्छामि । (परिक्रम्यावलोक्य च) अये एतास्तपस्विकन्याः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते ॥

---

वितव्यानां प्राप्तव्यानाम् । भू प्राप्तावित्यस्मात् कर्मणि तव्यः । भू सत्तायामित्यस्मात् कर्तरि तव्य इति केचित् । अवश्यंभाविनामित्यर्थः । द्वाराणि उपायाः । सर्वत्रेति विषयविशेषापेक्षा नास्ति भवितव्यताया बलवत्त्वादित्यर्थः । यथा मालत्याम् । "सर्वंकषा भगवती भवितव्यतैवे"ति । अनेन वैखानसप्रयुक्ताशिषः फलोन्मुख्यं दर्शितम् । अत्राथवेत्यनेन पूर्वोक्तस्य प्रतिषेधादाक्षेपालंकारः । भवितव्यानामित्यादेः अथवेत्यनेन गम्यमानस्य अत्राप्यस्य निमित्तस्य फलं भवेदित्यर्थस्य समर्थकत्वादर्थान्तरन्यासश्च । अथवेत्यनेन पूर्वोक्तप्रतिषेध एव । भवितव्यानामित्यादिसामान्योक्त्या च उक्तविशेषो गम्यत इति पक्षे च सामान्यनिबन्धनाप्रस्तुतप्रशंसा । तदर्थस्याक्षेपहेतुत्वात् काव्यलिङ्गं च । पूर्वार्द्धे वितर्कः उत्तरार्द्धे मतिश्च भावः ॥

एवं राज्ञः शकुन्तलायाश्च दैवानुकूल्यं प्रदर्श्य तत्सङ्गमे दृष्टहेतुं परस्परानुरागं दर्शयिष्यंस्तदङ्गभूतमन्योन्यसंदर्शनादिकं संपादयितुं सुनिमित्तस्यासन्नफलकताद्योतनाय तदव्यवधानेनैव दुहितरमिति पूर्वप्रस्तुतां शकुन्तलां सखीभ्यां सह प्रवेशयितुमारभते नैपथ्य इत्यादिना । नैपथ्ये स्थित्वा वदतीत्यर्थः । अये इत्यादि । अये इति सकौतुके स्मरणे । "अये क्रोधे विषादे च संभ्रमे स्मरणेऽपि चे"ति विश्वप्रकाशिका । दक्षिणेनेत्यव्ययम् । वृक्षवाटिकामिति "एनपा द्वितीये"ति द्वितीया । वृक्षवाटिकायाः सन्निकृष्टदक्षिणपार्श्वे इत्यर्थः । वाटः समूहः । "वाटः पुमान् वृत्तिश्रेण्यो"रिति यादवः ।

(निरूप्य) अहो मधुरमासां दर्शनम् ।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥ १५ ॥

---

स एव वाटिका । स्वार्थे कः । प्रत्ययस्थादित्यादिना इकारः । "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्त" इति स्त्रीत्वम् । आलापः परस्परसंभाषणम् । इवेति प्रतीतौ । आलापस्यास्पष्टताद्योतको वा वाक्यालंकारे वा । अथ जनितकुतूहलः कर्तव्यं निश्चिनोति यावदित्यादि । अये इति तपस्विकन्यानामभिमुखागमनस्यातर्कितोपनतत्वं द्योतयति । स्वप्रमाणस्य स्वशरीरप्रमाणस्यानुरूपैरित्यनेनाप्राम्यत्वं व्यज्यते । बालेत्यप्यानुरूप्यं द्योतयति । अभिवर्तन्ते अभिमुखमागच्छन्ति । अत्र बालकेभ्यः स्तन्यदानस्य समाधिः । अत्र राज्ञः प्रथमदर्शने मुनिकन्यकानां पूर्णकुम्भसहायतयाभ्यागमनकल्पनेन भावि महत्तरं मङ्गलं सूच्यते । वृक्षवाटिकायां राज्ञस्तासां च सान्निध्यकल्पनं राज्ञो गूढतया तद्दर्शनसंलापश्रवणाद्यर्थमुद्दीपनविभावतया दर्शयिष्यमाणरागपरिपोषार्थं च । शकुन्तलया स्वयमेव स्वागतसंलापस्वोत्पत्तिनिवेदनादेः करणे तस्या धाष्टर्यं वेश्याभावश्च प्रसज्येत, तच्च रसाननुगुणमिति सख्योः कल्पनम् । तत्सत्त्व एव शकुन्तलया विस्रम्भसम्भाषणाद्यवसरश्च । वृक्षसेचनव्यापारकल्पनं शकुन्तलाया राज्ञः सर्वावयवसंदर्शनार्थम् । स्रस्तांसावित्यादिवक्ष्यमाणरीत्यालम्बनविभावपरिपोषार्थं चेत्यूह्यम् ॥

निरूप्य विशेषतो विलोकनमभिनीय । अथ तासां संदर्शनेनानन्दित आहाहो इत्यादि । अहो इति विस्मयस्तथाविधस्य दर्शनस्याननुभूतपूर्वत्वात्नास्त्रसंभाव्यत्वाच्च । मधुरमाह्लादकरम् । अत्र विस्मयवर्णनेन नायके रागानुप्रवेशस्य मार्गपरिशोधनं कृतम् । विस्म-

यावदिमां छायामाश्रित्य प्रतिपालयामि (विलोकयन् स्थितः)।

---

यस्य रागपूर्वभावितां भवभूतिरप्याविष्कृतवान् । यथा मालत्याम् । "यद्विस्मयस्तिमितमस्तमितान्यभाव"मित्यादि । उक्तमुपपादयति शुद्धान्तेति । शुद्धान्तमन्तःपुरम् । अनेन तत्रस्था वधूजना लक्ष्यन्ते । सुलभाङ्गसंस्कारोपकरणत्वं तेन मलहानगुणाधानादिना संस्कृताङ्गत्वं च व्यङ्ग्यम् । तत्र दुर्लभमित्यनेनैतद्वपुषोऽतिशय उक्तः । वपुर्लावण्यम् । सौन्दर्यादीनामुपलक्षणमिदम् । दृष्टान्तवाक्ये गुणैरित्युक्तेः । वपुः शरीरमिति केचित् । "वपुः शरीरे लावण्य" इति केशवः । आश्रमवासिनो जनस्य तपस्विकन्यानाम् । अनेनाङ्गसंस्कारोपकरणराहित्यं व्यज्यते । तेन तत्पराङ्मुखत्वं च । यदीति सिद्धानुवादे । यथा "स्वर्गीयं यदि जीवितापहे"त्यादौ । अत्र तत्स्थलानुगुण्येन कल्पितं निदर्शनमाह दूरीत्यादि । दूरीकृता इत्यनेन वनलतागुणातिशय उक्तः । खल्वित्यवधारणे दृष्टान्ते वा । गुणैः सौरभ्यसौकुमार्यादिभिः करणैः । उद्यानपदेनानवरतदोहलादिसंवर्द्धितत्वं जात्युत्कर्षश्च व्यज्यते । वनपदेन लतानां तदभावश्च । अत्र मुनिकन्यकावपुषोऽन्तःपुरस्त्रीवपुरपेक्षया वनलतागुणस्योद्यानलतागुणापेक्षया चाधिक्यवर्णनादुभयत्र व्यतिरेकः । तथाविधस्य तद्वपुषस्तद्गुणस्य चार्थादैक्यारोपाद्वाक्यार्थवृत्तिनिदर्शना च । अत्रासंभाव्यत्वादिः साधारणो धर्मः । उपमा च व्यज्यते । वनलतानामुद्यानलतातिशायिनी गुणसंपदिवासंभावनीया मुनिकन्यकानामन्तःपुरवधूरत्नातिशायिवपुस्संपत्तिरिति । अहो आश्चर्यमेतदिति भावः । अत्र दृष्टान्तालङ्कार इति केचित् ॥

एवं तद्दर्शनेन विस्मितः कर्तव्यं निश्चिनोति यावदित्यादि । यावत् प्रतिपालयामि एतत्प्रवृत्तीरवगम्यात्मानं प्रकाशयितुमवसरं प्रतिपालयिष्यामि । यावत्पुरेति लट् । तत इत्यादि । यथोक्तव्यापारा बाल-

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला)

शकु—इदो इदो सहीओ (इतइतः सख्यौ) ।

एका—हळा सउन्दळे तुइत्तोवि तादकस्सवस्स अस्समरुक्खो पियदरत्ति तक्केमि जं णेण णोमालियाकुसुमपेळवा तुमंवि एदाणं आळवाळपूरणे णिउत्ता। (हला शकुन्तले, त्वत्तोऽपि तातकाश्यपस्याश्रमवृक्षाः प्रियतरा इति तर्कयामि। यदनेन नवमालिकाकुसुमपेलवा त्वमप्येतेषामालवालपूरणे नियुक्ता) ।

शकु—हळा पिअंवदे! ण केवळं तादणिओआत्ति ममवि सोदर-

---

पादपेभ्य इत्याद्युक्तवृक्षसेचनव्यापारा। सख्योरपि तद्व्यापारः सहशब्देन गम्यते। अथ विजने वर्तमानानां तासां मध्ये प्रियंवदा नाम सखी विस्रम्भातिशयेन शकुन्तलां प्रति नर्मालापं करोति हळेत्यादि। हळेति सख्या आह्वाने। "हण्डे हञ्जे हळाह्वाने नीचां चेटीं सखीं प्रती"-त्यमरः। संबोधनकाका तस्यां स्नेहविस्रम्भादयो द्योत्यन्ते। त्वत्तोऽपि प्रियतरा इति संबन्धः। अपिशब्दस्तस्यां काश्यपस्य स्नेहातिशयं द्योतयन्नन्येषां प्रियतरत्वासंभवं व्यञ्जयति। काश्यपः कण्वः। प्रियतरत्वे हेतुर्यदित्यादि। नवमालिकाकुसुमस्य मार्दवातिशयः प्रसिद्धः, तदिव पेलवा मृद्वी। अपीति संबन्धः। अपिशब्देनासंभावनां द्योतयता आलवालपूरणाशक्तत्वं द्योत्यते। आलवालानां पूरणे, न तु सेकमात्रे। नियुक्ता। कष्टमेवं क्लिश्यस इति भावः। अत्र दर्शनेन जनितजिज्ञासं राजानमियं कण्वदुहिता शकुन्तलेति बोधयितुमिदम्॥

नात्र क्लेशलेशोऽपीत्याह हळेत्यादि। संबुध्या मद्धृदयवेदिन्यास्तवेदं वचो न युक्तमिति द्योत्यते। इतीति हेतौ। "इति हेतुप्रकरणे"त्याद्यमरः। तातनियोग एवालवालपूरणे न हेतुरित्यर्थः।

सिणेहो एदेसु । (हला प्रियंवदे, न केवलं तातनियोग इति । ममापि सोदरस्नेह एतेषु) । (वृक्षसेचनं रूपयति)

राजा—कथमियं सा कण्वदुहिता । असाधुदर्शी खलु तत्रभवान् काश्यपः; य इमामाश्रमधर्मे नियुङ्क्ते ॥

इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति ।

---

किमपरमित्यत्राह ममापीति । पितुः पुत्रस्नेह इवेत्यपिशब्दार्थः । सोदरस्नेह एतेषु । अतः सोऽपि हेतुरित्यर्थः । यद्वा स्नेहोऽपीति संबन्धः । इतीत्यनुषज्यते । स्नेहमूलकत्वान्नात्र क्लेश इति भावः ॥

वृक्षसेचनं रूपयतीति । नटी तद्भावभावनया सहृदयहृदयचमत्कारकारित्वेन वृक्षसेचनमभिनयतीत्यर्थः । एवमन्यत्रापि । अथ विस्मितो राजा तद्वचनश्रवणेन संजातप्रत्यभिज्ञः सादरमाह कथमित्यादि । इयमेवंविधरूपलावण्याद्यतिशयवती । सा वैखानसमुखाच्छ्रुता कण्वदुहिता । कथमिति वितर्के । स च निश्चयासन्नः प्रायो निश्चिनोमीत्यर्थः । सखीवचनस्य प्रामाण्यबुद्धावपि "यथा बीजं तथा प्रजेति" न्यायेन कण्वपुत्रीत्वे त्वीदृशरूपाद्यसंभावनया वितर्कः । यद्वा कथमिति हर्षे । तत्सकाशादेवातिथ्यादिकमनुभोक्तव्यमिति । अथवा कथमिति विस्मये । इयं सा कण्वपुत्रीत्यतर्कितत्वेन विस्मयः । "कारणेऽपि कथं तर्के विस्मये सम्पदुद्भव" इति भावप्रकाशः । अथ विस्मयावेशवशेन तां दृश्यबुध्या विलोकयंस्तद्रूपामृतपानेन प्रीयमाणचक्षुष्कः कामकलापरिशीलनसमुचितेऽपि काले धर्मकलायां नियोजयतो मुनेरविमृश्यकारितां सकरुणमाहासाधुदर्शीत्यादि । असाधुदर्शी अविमृश्यकारी । खल्वित्यवधारणे । तत्रभवान् काश्यप इत्याभ्यामभिज्ञानादयो गुणाः सन्तोऽप्यस्मिन् विषयेऽनुपयोगिनो जाता इति द्योत्यते । तेन विषादश्च । असाधुदर्शित्वे हेतुर्य इत्यादि । इमां कामकलाप-

ध्रुवं स नीलोत्पलपत्रधारया
समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥ १६ ॥

भवतु, पादपान्तरित एव विस्रब्धां तावदेनां पश्यामि ।(तथा करोति)

---

रिशीलनयोग्याम् । आश्रमधर्मे वृक्षसेचनातिथ्यादावाश्रमकृत्ये । नियुङ्क्ते न तु कदाचिन्न्ययुङ्क्त । आश्रमभरण इत्यपि पाठः । एवं योग्यायोग्यविचारशून्यत्वरूपामविमृश्यकारितामुक्त्वा शक्याशक्यविचारशून्यत्वरूपामपि दर्शयतीदमित्यादि । इदमेवंविधसौन्दर्यसौकुमार्यादिगुणशालि । इदंपदार्थमेव किञ्चिद्विवृणोति अव्याजमनोहरमिति । अव्याजेन भूषणादिकं विना निसर्गत इत्यर्थः । अनेन वक्ष्यमाणकर्माशक्तिः सूच्यते । अत एव किलेत्यनुकम्पायामसहने वा । तपसः मुनिवधूजनोचितस्य वृक्षसेचनादेः । क्षमं शक्तम् । साधयितुं संपादयितुम् । यद्वा तपस्साधयितुं क्षममिति संबन्धः । अत्र मुनिजनानुरोधेन समुचितं निदर्शनं संभावयन्नाह ध्रुवमिति । ध्रुवमिति संभावनायाम् । नीलोत्पलेति खड्गादिसाम्याय । तत्पत्रमित्यनेन सौकुमार्यं समित्पदेन काठिन्यं च सूच्यते । ऋषिर्ज्ञानवृद्धः । "ऋषिस्तु वेदे भृग्वादौ ज्ञानवृद्ध" इति वैजयन्ती । अनेन ज्ञानवृद्धत्वमप्यत्रानुपयोगीति पूर्ववद्व्यज्यते । व्यवस्यति प्रयतते ; अस्या एवं प्रवर्तनेन मुनेः कदाचित्तद्व्यवसायमपि संभावयामीत्यर्थः । अत्र तादृशेच्छातद्व्यवसाययोरर्थादैक्यारोपान्निदर्शना । तया तद्व्यवसायवदसाध्यविषयिका तदिच्छेत्युपमा व्यज्यते । ततो मुनेः शक्याशक्यविचारविधुरत्वं च ; असाधुदर्शीत्यादिनिन्दायाः सौकुमार्याद्यतिशयशालिनीयमेतत्कर्मानर्हेति शकुन्तलास्तुतौ पर्यवसानाद्व्याजस्तुतिर्मतभेदेनाप्रस्तुतप्रशंसा वा । पूर्वार्द्धे केदं वपुः क तप इत्यर्थव्यञ्जनात्

शकु— अणसूए आअदविणद्धेण वक्कलेण पिअंवदाए णिअंतिदं म्हि । ता सिढिलेहि दाव णं । (अनसूये! आयतपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रितास्मि । तच्छिथिलय तावदेनम्)

(अनसूया शिथिलयति)

---

विषमध्वनिश्च ; अथ कर्तव्यं निश्चिन्वन्नाह भवत्वित्यादि । पादपान्तरित एव न तु प्रत्यक्षीभूतः । तथासत्यस्या विस्रब्धरूपदर्शनं विस्रम्भालापानुभवश्च न भवेत् कदाचिल्लज्जादिना तिरोधानसंभवादिति भावः । विस्रब्धामाश्वस्तां सखीजनैकसान्निध्यादव्याकुलामित्यर्थः । अनेन तस्याः स्वैरालापसविलाससञ्चारादीनामनुभवावसरः स्यादिति सूच्यते । तावदित्यनेनावसरप्राप्तावात्मानं प्रकाशयिष्यामीति च । तेन तत्सन्निधौ प्रकाशीभूय सन्दर्शनसल्लापादावौत्सुक्यं च । पश्यामि दर्शनेन प्रीतिमनुभवामि । अत्र कथमित्याद्येतदन्तेन चक्षुःप्रीतेः स्फुटप्रतीत्या राज्ञः शकुन्तलायां रतिरुद्बुद्धा गम्यत इति बीजवाक्यमिदम् । अहो मधुरमित्यादौ तासां रूपदर्शनेनानन्दितस्य राज्ञो विस्मय एव आसामाश्रमवासितो जनयेति च सामान्येनोक्तेः । अन्ये तु तदुक्तेः शकुन्तलापर्यवसायित्वं प्रकल्प्य तत्रैव रत्युद्बोधमामनन्ति । केचित्तु प्रतिकूलं दैवमिति वैखानसवचने प्रतिकूलमननुकूलमनुरूपवरघटनाविमुखमित्यर्थः । तेन अनुरूपवरालाभः प्राप्तयौवनत्वं च सूच्यते; पुनस्तत्र गच्छामीत्यनुक्त्वा तां द्रक्ष्यामीति वचनेन राज्ञः शकुन्तलादर्शनौत्सुक्यं गम्यत इति तत्रैव श्रवणेन रतेरुद्बोधः अहो इत्यादिना च क्रमेण तत्परिपोषः प्रदर्श्येत इत्याचक्षते ॥

अथाभिनवेन यौवनेन स्तनयोः प्रतिक्षणप्रवृद्ध्या तन्निबद्धस्य वल्कलस्य सातिशयसंश्लेषणेन परवशाङ्गलतिका तत्त्वं संविदानापि असंविदानेवाहाणसूए इत्यादि । तत्त्वमसंविदानैवाहेति केचित् । नानु-

प्रियं०— एत्थ पओहरवित्थारइत्तअं अत्तणो जोव्वणं उपालभ ।
(अत्र पयोधरविस्तारयितृकमात्मनो यौवनमुपालभस्व)

राजा— काममननुरूपमस्या वयसो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति । कुतः ॥

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ १७ ॥

---

नयसंबोधनेन पीडावैक्लव्यं द्योत्यते । आयतं दृढम् । यथान्यत्रापि । स च वधमत्यायततस्नेहात्सेऽववन्ध्देकमत्यायतत इति । पिनद्धेन बद्धेन । अदिदिणद्धेणेत्यपि पाठः । प्रियंवदया परिचितयापि सख्येयपराधोद्घाटनम् । नियन्त्रिता निरुद्धप्रसरा । तावत्सद्यः । अत्र राज्ञो रागवृद्धये निरावरणतया स्तनमुकुलप्रत्यक्षीकरणार्थमिदम् । भङ्ग्या परमार्थमभिदधाना स्वापराधं परिहरति एत्थ इत्यादिना । अत्र नियन्त्रणे । पयोधरेऽनेन परिपोषः प्रदर्श्यते । यौवनमुपालभस्व न तु मामिति भावः । अनेनालम्बनविभावपरिपोषविधायिषु मूर्द्धाभिषिक्तो यौवनारम्भ उक्तः ॥

एवं पादपान्तरितस्तां चिरमालोकयंस्तस्या नवयौवनेन प्रतिक्षणप्रवर्द्धमानयोस्तनयोरननुरूपं वल्कलमालक्ष्यापि तस्यालङ्कारत्वं साधयंस्तदाकृतेर्लोकोत्तरतां सकौतुकं प्रतिपादयति काममित्यादिना । काममित्यकामानुमतौ । अननुरूपमलङ्कारवस्तुष्वननुप्रवेशात् । अस्या एवंविधरूपलावण्याद्यतिशयवत्याः । वयसोऽलङ्कारार्हस्य यौवनस्य । आस्यामन्यस्या वा अस्या वा परिणतावस्थायामनुरूपं स्यादिति द्योत्यते । “वयः पक्षियौवनयोरि”ति केशवः । वल्कलं स्तनाच्छादनम् । अ-

कामानुमतौ हेतुर्नेत्यादि । पुनश्शब्दो विशेषे । तमाहालङ्कारेति । अलङ्कारेण हारादिना या श्रीः शोभा ताम् । न पुष्यतीति न किं तु पुष्यत्येव । संभाव्यनिषेधनिवर्त्तनं नञ्द्वयस्यार्थ इति व्यक्तिविवेके । उक्तमर्थमुपपादयति सरसिजमित्यादि । विद्धमित्यनेन संबन्धो लक्ष्यते । तदतिशयो व्यङ्ग्यः । स एव सातत्यवाचिनानुनानूद्यते । रम्यमधिकरम्यं तदसंपृक्तावस्थातोऽधिकमनोहरमित्यर्थः । अधःस्थं दृष्टान्तमुक्त्वोर्ध्वस्थमाह मलिनमिति मलिनमसितम् । लक्ष्मापीति संबन्धः । लक्ष्मीं शोभाम् । तनोति विस्तारयति । मलिनेन कलङ्केनापि संबद्धश्चन्द्रः पूर्वस्मादधिकदर्शनीय इत्यर्थः । सरसिजं हिमांशोरित्याभ्यां तयोः स्वभावत एव चारुत्वं सूच्यते । लक्ष्मणो लक्ष्मीकरत्वोक्त्या चन्द्रस्य पूर्णत्वं च । अत्र मलिनमित्यस्य शैवलवल्कलयोरपि विपरिणामेन संबन्धः । तथानुविद्धमित्यस्यान्यवाक्ययोरपीति केचित् । दार्ष्टान्तिकवाक्यार्थं बुद्धौ स्थिरीकर्तुं प्रथममेव दृष्टान्तद्वयमुक्तम् । अथ दार्ष्टान्तिकमाहेयमित्यादि । तन्वी कृशा निसर्गसुन्दरीति यावत् । इयमिति शकुन्तलापरामर्शेऽपि दृष्टान्तबलात् प्रकरणाच्च स्तनरूपतदवयवे पर्यवस्यति । वल्कलेन स्तनाच्छादनेनापि । अधिकमनोज्ञेति । स एव ह्यलङ्काराणां धर्मः, यत् स्वत उत्कृष्टस्यापि स्वान्वये उत्कर्षातिशयाधानमिति वल्कलेनापि पूर्णस्मादधिकदर्शनीयत्वादलंकारश्रियं पुष्यत्येवेति संबन्धः । अत्रापिशब्दाः समुच्चयार्थाः स्वस्वोपपदविपरीतान्मधुकरकिरणपट्टांशुकानर्थान् दृष्टान्तविधया द्योतयन्ति । यथा सरसिजादीनि मधुकरादिभिरधिकमनोज्ञानि तथा शैवलादिभिरपीति । यथा कुमारे "यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् । न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासंगमपि प्रकाशत" इति । वक्ष्यति च "अहो सर्वावस्थासु रमणीयत्वमाकृतिविशेषाणा"मिति । अथवा शैवलादीनामपकर्षं व्यञ्जयन्तोऽपिशब्दाः शैवलादिभिः कमलाद्यलङ्करणे विरोधमुन्मीलयन्ति । तानि च शैवलादीनि सरसि-

शकु—एसो वादेरिदपल्लवंगुलीहिं तुवरावेदि विअ मं केसररुक्खो जाव णं संभावेमि । (एष वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षः । यावदेनं संभावयामि) (परिक्रामति)

---

जादीनां सौन्दर्यबलात्तत्परिभवं कर्तुमशक्नुवन्ति सन्ति तामेव सौन्दर्यशोभामुपस्कुर्वन्तीति भावः । अथ शैवलादिभिरधिकमनोज्ञत्वोक्त्या प्राप्तमलङ्कारभावं सामान्येन समर्थयति किमित्यादि । इवेति वाक्यालङ्कारे । हीति प्रसिद्धौ । मधुराणां "अव्याहतं मनः पुंसामदुःखजनकं तथा । हरेदन्यपदार्थेभ्यो मधुरं वस्तु तद्भवे"दिति दिवाकरः । अत्र मधुरशब्देन सर्वविषयरञ्जकत्वतर्पकत्वादिकं लक्षयता सातिशयाभिलाषविषयत्वमिति वक्त्रभिप्रेतं ध्वन्यत इति लोचनकाराः । किन्न मण्डनं सर्वमपि मण्डनमित्यर्थः । यथा "रम्याणां विकृतिरपि श्रियं तनोती"त्यन्यत्र । अत्रार्थान्तरन्यासः । पूर्ववाक्यत्रयेऽधिकरम्यत्वरूपैकधर्मस्य भिन्नशब्दैः प्रतिपादनान्मालाप्रतिवस्तूपमा च । तया पद्मादिकं शैवलादिनेवेयं वल्कलेनाधिकरम्येत्युपमा व्यज्यते । पद्मोपमया स्तनयोः संस्थानसौष्ठवं चन्द्रोपमया लावण्यबाहुल्यादिकं च सूच्यते । केचित्तु नायिकाया एवोपमेयत्वं, पद्मोपमया पद्मिनीत्वं च सूच्यत इत्याहुः ॥

अथ वल्कलशिथिलीकरणेनाश्वस्ता कमपि केसरमवलोक्य तत्सेचने त्वरमाणा भङ्ग्यन्तरेणाह एसो इत्यादि । पल्लवेष्वङ्गुलीत्वारोपात् केसरे बालत्वारोपो व्यङ्ग्यः ; सखीत्वारोपो व्यङ्ग्य इति केचित् । त्वरयतीत्यनेन त्वराकार्यमाह्वानं लक्ष्यते । इवेति संभावनायाम् । एतत्केसरवृक्ष एव बालः पयोदानाय पल्लवाङ्गुलीरूपसंज्ञया मामाह्वयतीति सम्भावयामीत्यर्थः । अत्रैकारोपस्यार्थत्वादेकदेशविवर्तिरूपकम् । सम्भावयामीत्यनेन सेचनं लक्ष्यते । आदरा-

प्रियं—हला सउंदले! एत्थ एव्व मुहुत्तं चिट्ठ। जाव तुए उवणदाए लदासणाहो विअ केसररुक्खो पढिभादि। (हला शकुन्तले! अत्रैव मुहूर्तं तिष्ठ। यावत्त्वयोपनतया लतासनाथ इव केसरवृक्षः प्रतिभाति)

शकु—अदो खु सि पिअंवदा। (अतः खल्वसि प्रियंवदा)

राजा—न पुनः प्रियमपि तथ्यमाह। अस्याः खलु।

---

द्यतिशयः सूच्यते। अत्र केसरे त्वरयितृपुरुषत्वारोपस्तेन त्वरयति सम्भावयामीत्याभ्यां च कश्चिदत्रागत्य गान्धर्वेण मामुद्वोढुं त्वरायिष्यति तदिच्छापूरणेनाहमप्येनं सम्भावयिष्यामीत्यर्थः शकुन्तलया अज्ञातोऽपि प्रतायित इत्याहुः। परिक्रामति। केसरान्तिकगमनमभिनयति॥

तदन्तिकगतां तां चाटु भाषते हलेत्यादि। आदरद्योतिकया संबोधनकाका विस्रम्भस्य परा काष्ठा द्योत्यते। तिष्ठेत्यत्र हेतुर्यावदित्यादि। यावद्यस्मात्। त्वया हेतुना। इवेत्युत्प्रेक्षायाम्। प्रतिभाति प्रकाशते। लतासाहित्य इव त्वत्साहित्येऽप्यस्य शोभाविशेषादावयोस्तद्दर्शनार्थं तिष्ठेति भावः। उत्प्रेक्षया लतासाम्यबोधनद्वारा तस्याः सौन्दर्यातिशयो द्योत्यते। तवाप्यनुरूपभर्तृलाभस्य कालः प्राप्त इति गूढार्थश्च। अयमालापोऽपि राज्ञो रतिवृद्ध्यर्थः॥

प्रत्यक्षस्तुतिमसहमानाहादो इत्यादि। अतः एवं प्रियभाषणात्। प्रियंवदा प्रियंवदतीत्यन्वर्थनामधेयेत्यर्थः। अतस्तवेदं नैसर्गिकमिति नात्र तवापराधमुद्भावयामीति भावः। अथ तस्या लतासाम्यं प्रत्यक्षतोऽनुभवंस्तया कृतं प्रियंवदावचनापलापमसहमान आह न पुनरित्यादि। प्रियंवदेति शेषः। प्रियं पुनः प्रियमेव न किं तु तथ्यं सत्यमपि। पुनरित्याक्षेपप्रश्ने। नाह पुनः आहैवेत्यर्थ इति केचित्।

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ १८ ॥

अन—हला सउन्दले! इअं सअंवरवहू सहआरस्स तुए किदणामहेआ वणजोसिणित्ति णोमालिआ । णं विसुमारिदासि ॥
(हला शकुन्तले! इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका । एनां विस्मृतासि)

---

प्रियंवदावचनस्यानया प्रियत्वमात्रमङ्गीकृतं न तावता पर्याप्तं सत्यत्वमप्यस्तीत्यर्थः । तदुपपादयत्यस्या इत्यादि । खल्विति हेतौ । किसलयस्य राग इव रागो रक्तिमा यस्य सः । रागेण किसलयतुल्य इति भावः । अकोमलस्यापि विटपस्य सत्त्वात् कोमलेति । अनुकारिणौ तुल्यौ । लोभनीयमुपभोगयोग्यत्वात् स्पृहणीयम् । अङ्गेष्विति बहुवचनेन यौवनकार्यस्य माधुर्यसौकुमार्यादेः सर्वाङ्गीणता व्यज्यते । यदुक्तं राजशेखरेण "विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमे"ऽति । सन्नद्धं संजातम् । यथा रघौ "लतेव सन्नद्धमनोज्ञपल्लवे"ति । सन्नद्धपदेन सकलहृदयोन्माथकत्वं व्यज्यते । अत्र राज्ञ औत्सुक्यं गम्यते । अधरादेः किसलयादिसाम्यकथनेन शकुन्तलाया लतासाम्यं गम्यत इत्येकदेशविवर्तिन्युपमा ॥

अथान्तिकस्थं सहकारं स्वयमेवोपपन्नं कुर्वतीं नवमालिकामुद्दिश्याह हलेत्यादि । स्वयंवरवधूः तत्त्वेन परिकल्प्य त्वया वर्द्धिता । स्वप्रयत्नं विना दैवादद्य तथाभूतेत्यर्थः । वने ज्योत्स्नेव प्रकाशत इति तथा नामकरणम् । अत्र नवमालिकाया वधूत्वारोपेण सहकारस्य वरत्वं गम्यत इत्येकदेशविवर्तिरूपकम् । एनां विस्मृतासि । काका प्रश्नः । विशेषणाभ्यां विस्मरणस्यासम्भाव्यत्वं व्यज्यते । एनामपि सम्भावयेति भावः ॥

शकु—जइ अत्ताणं विसुमरिस्सं । (यद्यात्मानं विस्मरिष्यामि) (लतामुपेत्यावलोक्य च) हला रमणीओ इमस्स पाअवमिहुणस्स व्यइअरो संवुत्तो । णवकुसुमजोव्वणा वणजोसिणी बद्धफलदाए उपभोगक्खमो सहआरो । (हला रमणीयोऽमुष्य पादपमिथुनस्य व्यतिकरः संवृत्तः । नवकुसुमयौवना वनज्योत्स्ना बद्धफलतया उपभोगक्षमः सहकारः) (इति पश्यन्ती तिष्ठति)

---

जइ इत्यादि । यदीति एनां विस्मरिष्यामीति शेषः । अत्र निदर्शना । एतद्विस्मरणमात्मविस्मरणवदसंभाव्यमित्युपमा ततो लताया आत्मसदृशप्रेमास्पदत्वं च व्यज्यते । अथ नवमालिकासहकारयोः सख्या समारोपितं वधूवरत्वमनुस्मृत्य सकौतुकमाह हलेत्यादि । पादपमिथुनस्य नवमालिकासहकारयोः । व्यतिकरः संश्लेषः । नायकपक्षे विवाहलक्षणः संबन्धश्च । रमणीयः संवृत्त इति योजना । अत्र हेतुर्नवेत्यादि । नवकुसुमानां यौवनं विकासो यस्याम् । यद्वा नवानि कुसुमानि यस्मिंस्तादृशं यौवनं तत्तुल्यावस्था यस्याः । नवं कुसुमं स्त्रीरजा यस्मिंस्तादृशं यौवनं यस्या इति नायिकापक्षे । फलं कुसुमपरिणामः रेतश्च । "लाभनिष्पत्तिभोगेषु फले बीजे धने फल"मिति यादवः । अत्र व्यतिकरादिपदैर्नवमालिकासहकारयोर्नायकव्यवहारसमारोपप्रतीतेः श्लेषमूला समासोक्तिः । तद्बलात् पश्यन्ती तिष्ठतीत्यनेन च शकुन्तलायाः प्रथमचित्तविकारारम्भरूपो भावो गम्यते । "निर्विकारात्मकात्सत्त्वात् भावस्तत्राद्यविक्रिये"ऽति तल्लक्षणं दशरूपके । एतेन कस्मिंश्चिद्यूनि रागानुप्रवेशावसरश्च । केचित्तु अथानसूया कर्तव्यान्तरं स्मारयति हलेत्यादि । स्वयंवरवधूस्तत्त्वेन परिकल्प्य वर्द्धिता । एनां विस्मृतासि । एतयोर्व्यतिकरविधौ किमुदासीनासीति भावः । लतामुपत्येत्यनेन व्यतिकरः संवृत्त इत्युक्त्या च तदा तयोर्व्यतिकरस्तया कृत इति गम्यते । एतद्योजनेनास्या

प्रियं—(सस्मितम्) अणसूए जाणासि किं सउंदला वणजोसिणिं अतिमत्तं पेक्खदि? (अनसूये! जानासि किं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यति)

अन—ण खु विभावेमि। कहेहि। (न खलु विभावयामि कथय)

प्रियं—जह वणजोसिणी अत्तणो सदिसेण पाअपेण संगदा अपि णाम एव्वं अहं वि अत्तणो अणुरूपं वरं लहेयत्ति। (यथा वनज्योत्स्ना आत्मनः सदृशेन पादपेन संगता अपि नामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेति)।

---

मनसि रागानुप्रवेशावसरः सूच्यते। यथानर्घराघवे "पाञ्चालिकामिथुनयोजनवर्णनेन सीतायाः" इत्याहुः। पश्यन्तीति। सकौतुकमवलोकयन्तीत्यर्थः॥

सस्मितमिति तस्यास्तथास्थित्या तन्मनोगतस्य यथातत्त्वसंवेदनात् स्मितम्। अणसूए जाणासीति काका प्रश्नः। किं किन्निमित्तम्। अथ तन्निमित्तं जानन्त्यपि प्रियंवदया विवक्षितं तन्मुखेन शकुन्तलां श्रावयितुमाह णेत्यादि। विभावयामि जानामि। खल्विति जिज्ञासायाम्। अत एवाह कथयेति। अनेन श्रवणावहितत्वं सूच्यते। तन्मनोगतं विशदीकरोति जहेत्यादि। आत्मनः अनुरूपं रूपादिगुणैः सदृशम्। लभेयेतीति ममापि वरः एवमनुरूपो भवत्विति प्रार्थनयेत्यर्थः। पश्यतीति संबन्धः। इतीति हेतौ वा। इदं हेतुरित्यर्थः। वरप्रसङ्गेन लज्जमाना तथ्यमपि तद्वचनमन्यथयति एसो इत्यादि। तवान्तर्गतः न ममेत्यर्थः। मम परस्परसंगतयोरनयोः शोभाविशेषदर्शने तात्पर्यं, त्वया तु त्वन्मनसि स्थितोऽयं मय्यारोप्यत इति भावः। भावगोपनमिदं लज्जानुभावः। इदमपि राज्ञो रतिवृद्धये कल्पितम्। केचित्तु वात्सल्येनैव वनज्योत्स्नां सावधान-

शकु—एसो णूणं तुह अत्तगदो मणोरहो । (एष नूनं तवात्मगतो मनोरथः) (कलशमावर्जयति)

राजा—अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात्?। अथवा—

असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥ १९ ॥

तथापि तत्त्वत एनामुपलप्स्ये ॥

---

मवलोकयन्त्यां शकुन्तलायामसतीमपि वरप्रार्थनामारोप्य प्रियंवदा सपरिहासमाहाणसूए इत्यादि । लज्जया वरप्रसङ्गमसहमानाह एसो इत्यादीत्याहुः । कलशमावर्जयत्यधोमुखं करोति । पादपमिथुनतल इति शेषः ॥

अथ नायिकायाः प्रथमलब्धेन दर्शनमाधुर्येण पश्चात्तदनुगृहीतेन यौवनेन तदनन्तरं सखीमुखात्तत्सङ्कल्पश्रवणेन यत्राकृतिस्तत्रगुणा वसन्तीति न्यायाद्रूपानुरूपानां सौशील्यादिगुणानामुपलब्ध्या च तां प्रति क्रमेण वर्द्धमानरतिर्नायकस्तस्या गम्यागम्यत्वे विचिन्तयन्मुनिकन्यकाया अपि पाक्षिकं गम्यत्वमवधार्य तत्पक्षं प्रार्थनापूर्वं सम्भावयन्नाहापि नामेत्यादि । अपि नामेति दैवप्रार्थनायाम् । कुलपतेरिति नानाक्षेत्रसम्भवस्योपपत्तिं सूचयति । समानो वर्णो जातिर्यस्य तन्न भवतीत्यसवर्णं तादृशं क्षेत्रं कलत्रं तस्मिन् सम्भवो यस्याः सा ब्राह्मणस्य चातुर्वर्ण्ये विवाहस्य विहितत्वात् कुलपतेरसवर्णक्षेत्रस्यापि सम्भवात्तदुत्पन्नेत्यर्थः । "शूद्रस्य भार्या शूद्रैव सा च स्वा च विशः स्मृते । ते च स्वा च क्षत्रियस्य ताश्च स्वा चाग्रजन्मन" इति स्मृतेः । क्षत्रियस्य त्रिषु वर्णेषु विवाहो विहित इति सवर्णक्षेत्रमात्रसम्भवत्वस्यापोहः । स्यादिति सम्भावनायाम् । अत्रापि नामेयं मम गम्या स्यादिति प्रस्तुतं कार्यं गम्यत इति कारणनिबन्धनाप्रस्तुतप्रशंसा । एवं सत्यस्या-

मभिलाषो युक्त इति भावः । पुनर्विचिन्तयन्नाहाथवेति । अलं संभावनया प्रार्थनया वेत्यर्थः । कुत इत्यत्राहासंशयमित्यादि । असंशयं नात्र संशयः । निश्चय एवेत्यर्थः । इयमित्यनुषज्यते । क्षत्रस्य क्षत्रियस्य परिग्रहो भार्या तत्त्वेन स्वीकारो वा । तस्मै तस्य वा क्षमा योग्या । अत्र सामान्यनिबन्धनयाप्रस्तुतप्रंशसया नायकगतमौचित्यं प्रतीयते । इयं मत्परिग्रहयोग्या ध्रुवमिति भावः । अत्र हेतुर्मे मनः अस्यामभिलाषि यदिति । मे विद्याविनयधार्मिकत्वादिगुणशालिनः । मन इत्यन्वर्थं विचारसामर्थ्यं सूचयति । ननु "मुनेरपि मनो वश्यं सरागं कुरुतेऽङ्गने"ति नीत्या सर्वेषामपि वनितायामभिलाषो जायते तत्र तव मनसः को विशेष इत्यत आहाऽर्यमिति । आर्यं श्रेष्ठं निषिद्धाचरणप्रवृत्तिविमुखामित्यर्थः । अर्थान्तरं न्यस्यति । सतामित्यादि । सन्देहपदेषु संशयास्पदेषु । प्रमाणं निर्णयहेतुः । अन्तःकरणस्य मनसः प्रवृत्तयः । धारारूपेण स्वरसतः प्रवृत्तिर्बहुवचनेन सूच्यते । सन्तो हि मनःप्रवृत्तिं प्रमाणत्वेनाङ्गीकुर्वन्तीत्यर्थः । तदुक्तं "वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृत"मिति । अनेनात्मतुष्टिप्रमाणं दर्शितम् । अत्र स्वेनैव स्वसज्जनत्वकथनं न दोषः तस्य तथ्यत्वात् । तदुक्तं "स्वगुणाविष्क्रिया दोषो नात्र भूतार्थशंसिन" इति । यथा श्रीरामायणादौ "अद्य रामस्य रामत्वं पश्यन्त्वि"त्यादि । किन्त्वात्मस्तुतिरेव दोषः । अत्रायं स्वयंविचारः । अत्र मतिर्भावः । अत्र कथमियं सेत्यादिना गम्यमाना राज्ञः शकुन्तलारतिरत्र नाटके बीजम् । अधर इत्यत्र कुसुममिव लोभनीयमित्यनेनौत्सुक्यस्य गम्यमानत्वादारम्भो नाम प्रथमावस्था इति बीजारम्भसमन्वयान्मुखसन्धिः । अयमेतदङ्कसमाप्तिपर्यन्तः । द्वितीयतृतीययोः प्रतिमुखं, चतुर्थपञ्चमयोर्गर्भः, षष्ठेऽवमर्शः, सप्तम उपसंहृतिः । अत्र पद्येऽभिलाषरूपबीजन्यासादुपक्षेपो नाम मुखसन्धेरङ्गं चेति केचित् । परे तु कथमियमित्यादिनाधर इति पद्यपर्यन्तेन नयनप्री-

**शकु—** सलिलसेअसंभन्तो णोमलिअं उज्झिअ महुअरो वअणं मे अहिपडइ । (सलिलसेकसंभ्रान्तो नवमालिकामुज्झित्वा मधुकरो वदनं मे अभिपतति) (भ्रमरबाधां रूपयति)

---

तिरेव प्रतीयते । अत्रैवानुरागरूपबीजस्यारम्भावस्थायाश्च प्रदर्शनमिति तत्समन्वयान्मुखसन्धिः । द्वितीये प्रतिमुखं, तृतीये गर्भः, चतुर्थपञ्चमषष्ठेषु सप्तमे मारीचाश्रमप्रवेशपर्यन्तं चावमर्शः, तत्र प्रायो व्यसनस्यैव वर्णनात् । तथा हि । चतुर्थे सख्योः शापादिना शकुन्तलायाः प्रियजनवियोगेनाङ्गुलीयरक्षारूपसखीवचनेन च कण्वस्य दुहितृवियोगेन, पञ्चमे राज्ञः शकुन्तलापरिग्रहापरिग्रहप्रसङ्गेन च व्यसनं स्पष्टम् । षष्ठे तत् पूर्णमेवेति । ततः परं निर्वहणसन्धिः । अस्मिन् पद्ये बीजन्यासादुपक्षेपश्चेति व्याचक्षते । राघवभट्टादयस्त्वन्यथैव सन्धितदङ्गानि योजयन्ति । "अभिलाषस्तथा चिन्तानुस्मृतिर्गुणकीर्तनम् । तथोद्वेगो विलापश्चाप्युन्मादो व्याधिरेव च । जडतापि मृतिश्चेति" रतेर्दशावस्था इति केचित् । "दृङ्मनस्सङ्गसंकल्पा जागरः कृशताऽरतिः ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश" त्यपरे । अत्र मतद्वयेऽप्याद्यावस्थैवेत्यलम् । एवं मनःप्रवृत्त्या गम्यत्वे निश्चितेऽपि तन्मुखेन तत्त्वाज्ञानादपरितुष्यन्नत्यन्तधार्मिको नायकस्तत्प्रकारं जिज्ञासुराह तथापीत्यादि । तथापि मनःप्रवृत्त्या गम्यत्वनिश्चयेऽपीत्यनेनापरितोषो द्योत्यते । तत्त्वतः याथार्थ्येन । एनां शकुन्तलाम् । उपलप्स्ये ज्ञास्यामि । सखीमुखादस्या यथास्थितमवगमिष्यामीत्यर्थः ॥

अथालम्बनाभिनवीकरणेन नायकरतिं परिपोषयितुं तत्प्रकाशावसरं संपादयितुं च नायिकाया अवस्थान्तरं वर्णयति शकुन्तलेत्यादि । मधुकर इत्यनेन मधुपानोद्युक्तत्वं द्योत्यते । अत्र नवमालिकाकुसुमापेक्षया तन्मुखस्य सौरभ्यातिशयो व्यज्यत इति केचित् । अत्र नायिकाश्रयाः शङ्कादयो भावाः ॥

राजा—(सस्पृहम्)

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधून्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती ॥ २० ॥

---

अथ मधुकरपीडापर्याकुलां तत एव विशेषदृश्यां शकुन्तलां तथा नवमालिकां विमुच्य तन्मुखाभिमुखं गच्छन्तं तया कातरया तरलतारकमवलोकितं तत एवेन्दीवरधिया तद्दृष्टिं पुनःपुनः स्पृशन्तं दृष्टेः कर्णान्तविश्रान्तत्वात्तदन्तिकेऽपीन्दीवरबुध्यैव मधुरझंकारमुखरं चरन्तमभिनवसौरभलोभादधरीकृतकुसुमामोदं बन्धूकबन्धुरमधरमभिमृशन्तं कामुकायमानं मधुकरं चावलोक्य देदीप्यमानमदनो नायकस्तमभिमुखीकृत्य तस्मिन् कामुकवृत्तान्तमारोपयन्नात्मनो व्यतिरेकं दर्शयन्नाह सस्पृहं चलेत्यादि । सस्पृहं वयमपि कदाचिदेवमपाङ्गवीक्षणादीनां पात्रीभूयास्मेत्यौत्सुक्यसहितम् । आहेति शेषः । चलो लोलतारकः अपाङ्गो यत्र तत्तथा । तारल्यं भयस्यानुभावः । कामुकपक्षे रागस्य तरलाख्यस्य । तथादर्शनस्य रागानुभावत्वात् । "तरलं तदिति प्राहुर्लोलत्तारकनीनिक"मिति तल्लक्षणम् । दृष्टः सन् अनयेत्यादिः दर्शनेनेत्यर्थः । स्पृशसि दृष्टिमित्यादिः नीलोत्पलधियेति भावः । चलापाङ्गां दृष्टिमिति लोचनकारादीनां पाठः । तत्पक्षे चलेत्याद्यनुवाद्यविशेषणम् । बहुश इति पौनःपुन्यमन्तरान्तरा निवारणकृतम् । वेपथुमतीं भयेन कम्पातिशयवतीमिति स्पर्शकालविशेषणम् । कामुकपक्षे विशिष्टवीक्षणेन विदितानुरागस्तत्सुखमनुभवन् कम्परूपसात्त्विकभावयुक्तां दृशं पुनःपुनश्चुम्बतीत्यर्थः । दृष्टिचुम्बनस्य कामतन्त्रे विहितत्वात् । अत्र पौनःपुन्यं कामुकस्य रागातिशयान्नायिकाया मौग्ध्येन निवारणाच्च । यद्वा एनामित्यध्याहा-

रः नायिकामित्यर्थः । स्पृशसि दृष्टौ स्पृशसि । कामुकपक्षे स्पृष्टके- नालिङ्गतीत्यर्थः । अथातोऽपि विशेषमाह रहस्याख्यायीति । इवेन्यु- पमायां सम्भावनायामवधारणे वा । कर्णान्तिकचरो मृदु स्वनसीति नेत्रयोः कर्णान्तविश्रान्तत्वादिन्दीवरबुद्ध्यैवेति भावः । कामुकपक्षे चु- म्बने वाऽलिङ्गने सात्त्विकविकारेण नायिकाया रागोत्कर्षमवधार्य कर्णा- न्तिके रहस्यं मन्त्रयतीत्यर्थः । अनेन व्याजेन कपोलचुम्बनेच्छापि प्रतीयते । अथातोऽप्यत्यन्तमतिशयितमाह कराविन्यादि । व्याधून्व- त्या निवारणाय कम्पयन्त्या अस्याः । पिबसि स्पृशसि । रतेः प्रीतेः सर्वस्वं मूलधनं प्रधानहेतुमित्यर्थः । तत्त्वन्नैसर्गिकसौरभ्यातिरेकादि- ति सौरभ्यानुभवलोभः सौरभ्यलौहित्यादिना पुष्पविशेषभ्रमो वाधर- स्पर्शे हेतुः । कामुकपक्षे रहस्यमाख्यायास्मदभिलाषितानुकूलेयमिति मत्वा मौग्ध्यान्निवारणाय करौ कम्पयन्त्याः रतेः सुरतस्य सर्वस्वं प्र- धानाङ्गभूतमधरामृतमास्वादयतीत्यर्थः । व्याधून्वत्या इति पानसमयवि- शेषणेन माधुर्यातिशयप्रयुक्ताग्रहातिशयेनाधरस्य निर्दयग्रहणं तेन रस- सर्वस्वादानं च ध्वन्यते । रतिसर्वस्वमित्यनेन कर्तव्यावशेषाभावश्च । एवं मधुकरस्य वृत्तिं परामृश्य तत एव तस्य धन्यतां प्रतिपादयिष्य- न्नात्मनस्तदलाभादधन्यतां विषादातिशयात् प्रथममाह वयमित्यादि । वयं कथमस्याः कटाक्षगोचरं भवेम, कथं ललितसुकुमारमदसीयमङ्गमा- लिङ्गेम, कथमस्मदभिप्रायव्यञ्जकं रहोवचनमेषा समाकर्णयेत्, कथन्नु ह- ठादनिच्छन्त्या अप्यस्या अधरामृतमास्वादयेमेति नानाविधमनोरथशा- लिनो वयमित्यर्थः । बहुवचनेन विशेषज्ञत्वमहाराजत्वादिना समुत्क- र्षश्च सूच्यते । तत्त्वान्वेषादियं गम्या वा न वेति वस्तुतत्त्वान्वेषणाद्ग- म्यत्वनिश्चिचीषयेत्यर्थः । हताः निरुद्धप्रसराः । तत्तन्मनोरथानाम- लाभादायासमात्रपात्रीभूता इत्यर्थः । अधन्या इति यावत् । त्वं खलु कृतीति । मधुकरेति संबुध्या तिर्यग्जातित्वं, त्वमित्येकवचनेनापकर्षश्च द्योत्यते । कृती कृतबहुकृत्यः । भूमार्थे इनिः । धन्य इति यावत् ।

खल्विति निपातेनायत्नसिद्धं तव चरितार्थत्वमिति सूच्यते । अत्र भ्रमरस्वभावोक्तिः । तथा कामुकवृत्तान्तारोपप्रतीतेः समासोक्तिः । यद्यप्यत्र द्वितीयपादे रहस्याख्यानरूपोपमानोपादानादपुष्टार्थत्वं पुनरुक्तत्वं वा समासोक्तिदोषः । यथोक्तं काव्यप्रकाशिकायां "साधारणविशेषणवशादेव समासोक्तिरनुक्तमप्युपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावादनुपादेयत्वं यत्तदपुष्टार्थत्वं पुनरुक्तत्वं वा दोषः यथा "स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया । अतनुमानपरिग्रहया स्थितं रुचिरयाचिरयापि दिनश्रिया"।। अत्र तिग्मरुचेः ककुभां च यथासदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया नायिकात्वेन च व्यक्तिस्तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेने"ति । तथापि यथा स्पृशत्यादेर्मनुजचेष्टायां स्वरसतः प्रयोगः तथा न स्वनतेराख्यान इत्यप्रस्तुतस्यात्र स्फुटप्रतिपत्त्यलाभेन रहस्याख्यानरूपोपमानोपादानमिति नात्र दोषः । तथा चात्रोपमोत्प्रेक्षा रूपकं वालङ्कारः । रहस्याख्यायीवेति कर्तरि विशेषणमपि तदाख्यानं स्वनसीति क्रियायामुपमीयत उत्प्रेक्ष्यत आरोप्यते वा । रूपकपक्षे त्विवशब्दो वाक्यालङ्कारेऽवधारणे वा । समासोक्तिश्चात्र पादे प्रकाशिकोदाहृतश्लेषोपमास्थल इव निवर्तत इति रसविदो विदाङ्कुर्वन्तु । कटाक्षादीनां लाभात्त्वं कृती वयं हता इति व्यतिरेकश्च । समासोक्त्या व्यतिरेक उत्थाप्यते । स पुनरुत्थापिकायाः समासोक्तेः शोभामावहति । पूर्ववाक्यत्रयार्थस्य कृतीत्यत्र हेतुत्वात् काव्यलिङ्गं च । तथाविधदर्शनस्पर्शनादीनामुत्तरोत्तरोत्कर्षप्रतीतेः सारालङ्कारः । दृष्टिस्पर्शादिक्रियया तद्धेतोर्भ्रमरगतनीलोत्पलादिभ्रान्तेः प्रतीत्या भ्रान्तिमदलङ्कारश्च ध्वन्यते । समासोक्तिवलाच्छृङ्गारश्च । अत्र नायकगताश्चिन्ताविषादौत्सुक्यादयो रतेर्व्यभिचारिणो भावाः प्राधान्येन व्यज्यन्ते । बीजस्य बहुलीकरणात् परिकरो नामाङ्गमिदम् ॥

शकु—हळा परित्ताअह मं परित्ताअह इमिणा दुव्विणीदेण महुअरेण अभिभूअमाणं। (हला परित्रायेथां मां परित्रायेथाममुना दुर्विनीतेनाभिभूयमानाम्)

उभे— (सस्मितम्) का अंहे परित्तादुं। दुस्सन्दं एव्व अक्कन्द। राअरक्खिआणि तपोवणाणि णाम। (के आवां परित्रातुम्। दुष्षन्तमेवाक्रन्द। राजरक्षितानि तपोबनानि नाम)

राजा— अवसरोऽयमात्मानं दर्शयितुम्। न भेतव्यम्। न भेतव्यम्। (इत्यर्द्धोक्ते) अथवा राजभावस्त्वभिज्ञातो भवेत्। भवत्वेवं तावदभिधास्ये॥

---

अथ मधुकरपीडया पर्याकुला तन्निवारणं प्रार्थयते हळेत्यादि। सम्बोधनकाका स्नेहव्यञ्जिकया मामीदृशीमवलोकयन्त्योर्वामौदासीन्यं न युक्तमिति द्योत्यते। परित्रायेथामिति द्विरुक्तिः सम्भ्रमद्योतिका। दुर्विनीतेन दुष्टेन। सस्मितमिति भ्रमरनिराकरणापाटवसमुद्भूतवैक्लव्यदर्शनात्सोपहासमित्यर्थः। केत्यादि। के आवां परित्रातुं वैरिनिराकरणरूपरक्षणे आवां न शक्ते इत्यर्थः। यतो वयं स्वतास्त्रियः तत्रापि मुनिकन्यकाः। तर्हि मम का गतिरित्यत आह दुष्षन्तमित्यादि। महाराजं दुष्षन्तमित्यर्थः। रोदनसंभिन्नमाह्वानमाक्रन्दनम्। कथमत्र तपोवने तदाक्रन्दनौचित्यमत आह राजेत्यादि। न केवलं जनपदान्येवेति भावः। नामेति प्रसिद्धौ॥

अवसर इत्यादि। प्राप्तावसरत्वमभयप्रदानार्थत्वेनापदेश्यत्वात्। अवसरलाभजनितप्रमोदपरवश आह न भेतव्यमिति। द्विरुक्तिस्त्वरां द्योतयति। इत्यर्द्धोक्त इति। न भेतव्यं दुष्षन्तोऽहं भयाद्भवतीः परित्रास्य इति विवक्षितस्य न भेतव्यमित्येकदेशे कथिते सतीत्यर्थः। पुनस्तथावचनस्य दोषमालोचयन्नाहाथवेति। एवं न वक्तव्यमित्यर्थः। कुत इत्यत्राह राजभावस्त्वभिज्ञातो भवेतिति। तच्च स्वैरसल्लापादेर्विघातकं भवेदिति भावः। पुनर्विचार्य निश्चिन्वन्नाहैवमित्यादि। तावदित्यनेन यथावसरं वास्तवमपि स्फुटं वदिष्यामीति द्योत्यते॥

शकु—एसो दुट्ठो न विरमइ । ता अण्णदो गमिस्सं ॥ (एष दुष्टो न विरमति । तदन्यतो गमिष्यामि) (पदान्तरे स्थित्वा सदृष्टिक्षेपम्) कहं इदोपि मं अणुसरदि! ॥ (कथमितोऽपि मामनुसरति)

राजा—(सत्वरमुपेत्य)

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥ २१ ॥

---

अथ सख्योः सकाशाद्रक्षामलभमाना सवैक्लव्यमाह एसो इत्यादि । न विरमति बाधनादिति शेषः । अत आह तदित्यादि । पदान्तरे स्थानान्तरे । कहं इत्यादि । कथमिति वितर्के सम्भ्रमे वा ॥

अथ परमार्थं जानन्नप्यजानन्निव तदन्तिकगमनार्थं परपरिभवबुद्ध्या व्यवहरति क इत्यादि । कोऽयमविनयमाचरतीति संबन्धः । अविनयं तत्कार्यमकृत्यम् । वर्तमाननिर्देशेनाद्य मम पुरतोऽपीति निश्शङ्कतातिशयो द्योत्यते । तदप्यस्थान इत्याह मुग्धासु तपस्विकन्यास्विति । मुग्धासु प्रतिपत्तिमूढास्वित्यनेन प्रतिकरणाशक्तत्वं तेनाविनयाचरणस्य सुकरत्वं तपस्विकन्यास्वित्यनेनात्याहितत्वं च द्योत्यते । ननु कोऽयमिति कः पृच्छति को वा मम शासितेत्यत्राह पौरवे वसुमतीं शासतीति । षष्ठी चानादर इति सप्तमी । शासतं पौरवमनादृत्येत्यर्थः । पौरव इत्यनेन धर्मतः शासनं वसुमतीमित्यन्वर्थेन शासनफलं च द्योत्यते । शासति परिपालयति । नन्वेवमपि तमनादृत्याकृत्यानुष्ठाने किं मम स्यादित्यत्राह शासितरीति । शासितरि दण्डयितरि । अत्र तपस्विकन्यास्विति सामान्यनिबन्धनाप्रस्तुतप्रशंसा परिकरश्च । अत्र कोऽयमित्यपकारिप्रश्नेन तद्ज्ञानमेव तद्दण्डनायामपेक्षितमिति द्योत्यते ।

(सर्वा राजानं दृष्ट्वा किञ्चिदिव सम्भ्रान्ताः)

जन— अॲअ णक्किं वि अच्चाहिदं । इयं णो पिअसही महुअरेण आउळीकरिअमाणा कादरीभूदा ॥ (आर्य! न किमप्यत्याहितम्। इयं नौ प्रियसखी मधुकरेणाकुलीक्रियमाणा कातरीभूता)

(शकुन्तलां दर्शयति)

राजा—(शकुन्तलाभिमुखीभूत्वा) अपि तपो वर्द्धते? ॥

---

तेन मुनिकन्यकानां भयलेशस्याप्यनवकाशश्च । आवेगामर्षादिभिरुपस्कृतः क्रोधोऽत्र व्यज्यते । कोऽयमित्युक्तिरपि तदनुभावः । अत्र पौरवइत्याद्युक्तिरधिकारिपुरुषभावेनात्मतिरोधानार्थाप्यर्थान्तरसङ्क्रमितवाच्यध्वनिन्यायेन परमार्थं न व्यभिचरतीति न मृषावादित्वदोषः॥

किञ्चिदित्यादि । इवेति वाक्यालङ्कारे । किञ्चित्सम्भ्रमस्तद्दर्शनेन लज्जासाध्वसाभ्याम् । तदानीं रक्षणगौरवं परिहर्तुं तन्निदानभूतस्य परिभवस्यातितुच्छत्वमाह अॲअ इत्यादि । किमपि युष्मत्प्रतिविधेयम् । अत्याहितं महान् परिभवः । "अत्याहितं महाभीति"रित्यमरः । तर्हि किंहेतुकमस्याः परित्राणार्थमाक्रन्दनमित्यत आहेयमित्यादि । नौ प्रियसखीत्यनेन लीलापरिहासोक्तियोग्यत्वं द्योत्यते । तस्याः प्राधान्यं च । अत एव तदाभिमुख्येन राज्ञः प्रश्नः । मधुकरेणेत्येकवचनेन परिभवस्य लाघवं द्योत्यते । अत एवाकुलीक्रियमाणा न त्वन्यैः परिभूयमाना । अत एव कातरीभूता । तन्निवारणासामर्थ्यात्त्रस्ता च । शकुन्तलां दर्शयतीति । एतत्सत्यमेव न तूपचारपदमित्यनेन द्योत्यते ॥

शकुन्तलाभिमुखीभूत्वेति । तत्प्राधान्यबोधनादिति बहिः । वस्तुतस्तद्धृदयजिज्ञासया तदभिमुखीभवनम् । अथ मुनिजनानुरूपं

शकु—(साध्वसादवचना तिष्ठति)

अन—दाणीं अदिहिविसेसळाहेण । हळा सउन्दळे गच्छ उड-
जं फळमिस्सं अग्घं उपहर । इदं पादोदअं भविस्सादि ॥
(इदानीमतिथिविशेषलाभेन । हला शकुन्तले गच्छोटजं, फल-
मिश्रं अर्घ्यमुपहर । इदं पादोदकं भविष्यति)

राजा—भवतु, भवतीनां सूनृतयैव गिरा कृतमातिथ्यम् ।

---

पृच्छत्यपीत्यादि । वर्द्धत इति राज्ञो रक्षावैभवेन तपोलेशस्यापि व्यया-भावात् प्रतिदिनं वृद्धिरेव स्यादिति दर्शयति । साध्वसादतर्कितोपन-तमहापुरुषसंदर्शनजनितेन मनःसंक्षोभेणाङ्कसादात् । अवचना अप्र-तिवचना । तस्यां तथास्थितायामनसूया स्वयं प्रतिवक्ति । दाणीमि-त्यादि । विशिष्टोऽतिथिरतिथिविशेषस्तस्य लाभेन प्राप्त्या । लाभेनेत्य-नेन प्रीत्यतिशयो द्योत्यते । तपो वर्द्धत इत्यनुषङ्गः । विशिष्टाति-थिसत्कारो हि तद्वृद्धिहेतुः । अतिथिविशेषेत्युक्तिः कः पौरव इ-त्यादिसापह्नववचनस्य तत्त्वानुसंधानेन तस्मिन् राजभावसंभावनामपि सूचयति । अथ प्रतिपत्तिमूढां शकुन्तलामतिथिसत्काराय त्वरयति हलेत्यादि । अर्घः पूजा तदर्थं जलमर्घ्यं तस्य फलमिश्रत्वमागमप्रसि-द्धम् । पाद्यमत्रास्तीत्याहेदमिति । इदं वृक्षसेचनार्थमानीतं घट-जलम् ॥

तदा शकुन्तलासक्तस्तस्याः क्षणिकमप्यदर्शनमसहमान आह भवत्वित्यादि । भवतु अर्घ्यपाद्यादिरास्ताम् । कुत इत्यत्राह भवती-नामित्यादि । सूनृता "प्रियं तथ्यं च सूनृत"मिति यादवः । तदा प्रियंवदातिथिविषयोचितमासनदानादिकमारभते तेन हीत्यादि । तेन हि वाङ्मात्रेणातिथ्यं कृतमिति मन्यसे तर्हीत्यनेनातिथ्याकरणादपरि-तोषो द्योत्यते । प्रकृष्टा छाया प्रच्छायं तेन । यद्वा प्रकृष्टा छाया यस्याम् । अत एव शीतलायामित्यनेन परिश्रमापनोदनसामर्थ्यं स-

प्रियं—तेण हि इमास्सिं दाव पच्छाअशिअळाअं सत्तवण्णवेदिआअं अॲओ उपविसिअ परिस्समविणोअणं करेदु । (तेन ह्यमुष्यां तावत् प्रच्छायशीतलायां सप्तपर्णवेदिकायामार्य उपविश्य परिश्रमविनोदनं करोतु)

राजा—ननु यूयमप्यनेन कर्मणा परिश्रान्ताः ।

प्रियं—हळा सउन्दळे उइदण्णो पज्जुपासणं अदिहीणम् । एत्थ उपविसह्म ॥ (हला शकुन्तले! उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः) (सर्वे उपविशन्ति)

शकु—(स्वगतम्) किण्णुखु इमं पेक्खिअ तपोवणविरोधिणो वि-

---

प्तपर्णवेदिकायामित्यनेन लोभनीयत्वमुपवेशनयोग्यत्वं च द्योत्यते । तावदिति तदनन्तरं खलु संलापाद्यवसर इति भावः । परिश्रमस्याऽवक्लेशस्य विनोदनमपनयनम् । ताभिः सह स्वैरासिकां काङ्क्षन्नाह नन्वित्यादि । नन्विति प्रश्ने अवधारणे वा । यूयमपि न केवलं वयमेव । अनेन कर्मणा वृक्षसेचनेन । परिश्रान्ता इति । अतो युष्माकमपि परिश्रमविनोदनावसरोऽयमित्युपवेष्टव्यमिति भावः । चित्तज्ञा प्रियंवदा तदुक्तिमनुमोदमाना ससाध्वसां शकुन्तलां सहोपवेशनेऽनुकूलयति हलेत्यादि । इदन्तेणहीत्यादि चानसूयावचनमिति केचित् । नः तपस्विकन्यानामस्माकम् । पर्युपासनं समीहिताचरणरूपं पूजनम् । अतिथीनामिति किमुत तद्विशेषस्येति भावः । सर्व इत्यादि । सर्वे राजा ताश्च । पुमान् स्त्रियेत्येकशेषः ॥

स्वगतमिति । "सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम्"-मिति दशरूपके । अथ दर्शनीयस्य राज्ञो दर्शनेन झटित्यङ्कुरितरतिभावा स्वयं निरूपयति किण्णुखुइत्यादि । किन्विति वितर्के । खल्विति जिज्ञासायाम् । इमं सौन्दर्यादिविशिष्टम् । दृष्ट्वेति हेतुग-

**आरस्स गमणीआ अंह्मि संवुत्ता** । (किन्तु खल्विमं दृष्ट्वा तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता)

राजा—(सर्वा विलोक्य) **अहो समवयोरूपरमणीयं सौहार्दं भवतीनाम्** ॥

प्रियं—(जनान्तिकम्) **अणसूए कोणु खु एसो चउरगंभीराकिदी**

---

र्भम् । तपोवनविरोधिनः तपस्विजनानां प्रतिकूलस्य । बिषयपराङ्मुखं हि तेषां मनः । विकारस्य विषयानुभवौन्मुख्यरूपस्य मनोविकारविशेषस्य । "कृत्यानां कर्तरि वे"ति षष्ठी । गमनीया प्राप्या । योग्यत्वोक्त्या विकारस्याङ्कुरावस्था तस्य कर्तृत्वोक्त्या हठात्कारश्च द्योत्यते । अनेन नायिकायाः प्रथमचित्तविकारारम्भरूपो भावः स्फुटं दर्शितः । अभिलाषश्चक्षुःप्रीतिर्वा रतेः प्रथमावस्था च ॥

तासां मुखप्रसादादिकमालक्ष्य प्रसन्नस्ताः समावर्जयितुं चाटु भाषणं करोत्यहो इत्यादि । अहो इति कौतुके । "अहो बतासि स्पृहणीयवीर्य" इतिवत् । समान्यन्योन्यतुल्यानि वयः, रूपाणि च । रूपपदेनाकृतिः सौन्दर्यं स्वभावश्चेति त्रयोऽर्था विवक्षिताः । "अथ रूपं नपुंसकं स्वभावाकृतिसौन्दर्येत्या"द्यमरः । तै रमणीयम् । सौहार्दं परस्परमैत्री । भवतीनामिति प्रसंशागर्भमभिधानम् ॥

जनान्तिकमिति नाट्यसमयः । त्रिपताकाकरेणान्यानित्यादि तल्लक्षणं दशरूपके । अथ राज्ञो रूपादिभिः प्रलोभिता तत्तत्त्वजिज्ञासुराहाणसूय इत्यादि । नुशब्दो वितर्के । खल्विति जिज्ञासायाम् । चतुरा सामुद्रिकोक्तगुणविशिष्टत्वेन दर्शनीया । गम्भीरा "गाम्भीर्यं यत् प्रभावेण विकारो नोपलक्ष्यत" इति लक्षितस्याकृतावुपचारः । तद्व्यञ्जिकेत्यर्थः । आभ्यामभिगम्यत्वाधृष्यत्वे व्यज्येते आकृतिर्यस्य मनःप्रह्लादनहेतुर्गुणो माधुर्यम् । मधुरं यथा तथा । प्रियं

**महुरं पिअं आळवन्तो पहवन्तो दक्खिणंवि करेइ ।** (अनसूये! को नु खल्वेष चतुरगम्भीराकृतिर्मधुरं प्रियमालपन् प्रभवन् दाक्षिण्यमपि करोति)

अन—**सहि ममवि कोदूहळं । पुच्छिस्सं दावणं ।** (सखि! ममापि कौतूहलम् । प्रक्ष्यामि तावदेनम्) (प्रकाशम्) **अॲअ! महुराळावजणिदो विस्सासो मं मन्तेदि, कदमो राआसिवंसो अंएण अळंकरीअदि, कदमो विरहपॲउस्सुअजणो किदो देसो, किण्णिमित्तं वा सुउमारो तपोवणपरिस्समस्स अत्ता पत्तदं णीदो? ।** (आर्य! मधुरालापजनितो विश्वासो मां मन्त्रयति कतमो राजर्षिवंश आर्येणालङ्क्रियते, कतमो विरहपर्युत्सुकजनः कृतो देशः, किन्निमित्तं वा सुकुमारस्तपोवनपरिश्रमस्यात्मा पात्रतां नीतः)

---

प्रीतिकरमर्थम् शब्दश्रवणेऽप्यर्थज्ञानेऽप्यानन्द इत्यर्थः । प्रभवन् प्रभुः । दाक्षिण्यं परच्छन्दानुवर्तनम् । प्रायः प्रभूणां दाक्षिण्याभावात् प्रभुत्वदाक्षिण्ययोर्विरोधमपिशब्दो द्योतयति । यद्यस्य रूपाद्यनुरूपमाभिजात्यमपि स्यात्तदास्मत्सख्या वरत्वेनायं गृहीतुमुचित इति प्रियंवदाभिप्रायोऽत्र गूढः प्रतीयते ॥

प्रष्टुमवतारं तावद्रचयति अॲअ इत्यादि । आर्य इति संबोधनं न केवलं समुदाचारपरिरक्षार्थं, किन्तु तस्य वैशिष्ट्यद्योतनार्थं च । विश्वासः "यद्यत्स्वचित्ते स्फुरति तत्तत् परिचितान् प्रति। निश्शेषं बोधयन् भावो विश्वास इति कथ्यते" इति दिवाकरः । मन्त्रयति वचनेन योजयतीत्यनेनानुयोगस्यावश्यकत्वं द्योतयता तत्पूर्वदृष्टेन तेन सह संभाषणे प्रसक्तमनौचित्यं भङ्ग्या परिहृतम् । कुमारसंभवे देवीं प्रति "प्रत्युक्तसत्कारविशेष"मित्याद्युक्तिरप्येतत्समकक्षा । अथ

शकु— (आत्मगतम्) हिअअ, मा उत्तम्म। एसा तुए चिन्तिदं णिमन्तेदि अणसूआ ॥ (हृदय! मा उत्ताम्य। एषा त्वया चिन्तितं निमन्त्रयते अनसूया)

राजा— कथमिदानीमात्मानं निवेदयामि। कथं वात्मानमपहरामि। भवत्वेवं तावदेनां वक्ष्ये। (प्रकाशम्) भवति यः पौ-

---

लोकोत्तरैस्तदाकारादिभिस्तस्य राजर्षित्वं संभाव्य तदपि प्रकाशयन्ती वंशविषयादीन् पृच्छति कतमो इत्यादि। राजर्षिवंश इति भवज्जन्मनः पूर्वतपोबाहुल्यहेतुकत्वात् यद्वंशे जातस्तेषां राजर्षित्वं सिद्धमेवेति भावः। विरहपर्युत्सुक इत्यनेन जनानुरागो दर्शितः। सुकुमार इत्यनेन परिश्रमानर्हत्वं, तपोवनेत्यनेन यथावत् पानभोजनादेरलाभश्च सूच्यते। आत्मा देहः। "आत्मा यत्नो धृति"रित्याद्यमरः। अत्र क्रमाद्वंशदेशावागमनहेतुश्च भङ्ग्या पृष्टाः॥

नायिका राज्ञस्तत्त्वजिज्ञासया प्रष्टुमशक्त्या च खिन्नं हृदयं प्रत्याह हिअअ इत्यादि। मा उत्ताम्य सन्तापं मा कृथाः। अत्र हेतुरेषेत्यादि। चिन्तितं प्रष्टव्यत्वेन निरूपितम्। निमन्त्रयते भङ्ग्या पृच्छति। अनेन हावलक्षणो विकारो दर्शितः। "भावादीषत्प्रकाशो यः स हाव इति कथ्यत" इति तल्लक्षणम्॥

अथैवं पृष्ट आत्मापहारस्याधर्मत्वादात्मनिवेदनं तस्य ग्राम्यत्वात् प्रकृतविघातकत्वाच्चात्मापहारमित्युभयमपि चिकीर्षुस्तस्योपायं विमृशति कथमित्यादि। कथमिति विमर्शे। वाशब्दः समुच्चये। अपहारो निगूहनमन्यत्वेन कथनं तदधर्म्यम्। "योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते। स पापकृत्तमो लोके स्तेन आत्मापहारक" इति स्मृतेः। विमृश्य कञ्चिदुपायमवधार्याह भवत्वित्यादि। अवधारितमाह भवतीत्यादि। भवतीति संबुद्धिस्तिङन्तं वा। पौरवेण राज्ञा

रवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमाश्रमिणामविघ्नक्रियोपलम्भाय धर्मारण्यमिदमागतः ॥

अन-- सणाहा दाणीं धम्मआरिणो । (सनाथा इदानीं धर्मचारिणः)

शकु—(शृङ्गारलज्जां नाटयति)

---

दुष्षन्तेन । धर्माधिकारे धर्मरक्षारूपेऽधिकारे । अविघ्नक्रियोपलम्भाय क्रिया निर्विघ्ना न वेति ज्ञातुमित्यर्थः । राज्ञो दुष्षन्तस्य धर्मसचिवोऽहं धर्मरक्षार्थमिहागत इति आत्मापहारानुगुणो बाह्यार्थः । पौरवेण राज्ञा इलिलनाम्ना मत्पित्रा धर्माधिकारे धर्मस्वरूपे प्रजापरिपालनलक्षणेऽधिकारे । नियुक्तः अभिषेकपूर्वं स्थापितः । दुष्षन्त इति प्रसिद्धोऽहमित्यर्थः । शेषं समानमिति आत्मनिवेदनानुगुणोऽन्तर्गतार्थ इत्युभयाविरुद्धमिदम् । अत्र सोऽहमित्यनेन कदमो इत्यादि प्रश्नद्वयस्याश्रमिणामित्यादिनान्यस्य चोत्तरमुपन्यस्तं । धर्मारण्यमित्यनेन फलान्तराभावेऽप्यागमनस्य धर्मलाभो भविष्यतीति सूच्यते ॥

तद्वचनं सादरमनुमोदते सणाहा इत्यादि । सनाथाः नाथेन रक्षित्रा सहिताः । इदानीमिति पूर्वं सनाथत्वमस्पष्टमिति भावः । धर्मचारिण इत्यनेन राजैकशरणत्वं सूच्यते । उपरि प्रार्थयिष्यमाणस्य यज्ञरक्षणस्य निदानं चैतत् । अनेन स्वानुमितं राजभावं प्रकाशयता भवानिदानीं जन्मदेशादिकथनेनास्मत्सख्या वरत्वेनाभिमत इति च द्योत्यते । अथ रूपदर्शनेनाङ्कुरितायाः पश्चादभिजात्यादिश्रवणेन परिपोषं प्राप्नुवन्त्या रतेरवस्थान्तरमनुभावद्वारेण दर्शयति शकुन्तला शृङ्गारेत्यादि । रतिरेव प्रकृष्टा शृङ्गारः । यदुक्तं "प्रमोदात्मा रतिः सैव यूनोरन्योन्यसक्तयोः । प्रकृष्यमाणा शृङ्गार" इति । शृङ्गारो

सख्यौ— (उभयोराकारं विदित्वा जनान्तिकम्) हळा संउदले! जइ अज्ज तादो सण्णिहिदो भवे ॥ (हळा शकुन्तले! यद्यद्य तातः सन्निहितो भवेत्)

शकु— (सरोषम्) तदो किं भवे? ॥ (ततः किं भवेत्)

........................................................................................................

नाम विषयेषु यथास्वमिन्द्रियाणां प्रवृत्तावात्मनः सुखानुभवाभिमान इति भोजराजः। तेन या लज्जा कन्याजनसुलभा। "दुराचारादिभिर्व्रीडा धाष्ट्र्याभावस्तमुन्नयेत । साचीकृताङ्गावरणवैवर्ण्याधोमुखादिभिः" इत्याद्युक्तप्रकारेण तामभिनयतीत्यर्थः । यथान्यत्रापि लज्जा ह्यन्तरुद्भिन्नमान्मथविकारजुगोपायिषारूपा मदनविजृम्भैव शृङ्गाररसतरङ्गिणी हि ययावरुद्धा निर्भरतया तांस्तान् विलासान्नेत्रविकारपरम्परारूपान् सूत इति । अनेन हेला नाम विकार उक्तः। "हेलात्यन्तसमालक्ष्यविकारः स्यात् स एव तु" इति तल्लक्षणम् ॥

तदा विदग्धयोः सख्योः प्रवृत्तिमाहोभयोरित्यादि । आकारं "आकाराविङ्गिताकृती" इत्यमरः। बुद्धिकारिताश्चक्षुर्विकारा इङ्गितम्। अबुद्धिकारिता स्तम्भस्वेदादय आकाराः। यदुक्तं भरतसंग्रहे "तारापुटभ्रूदृष्ट्यादेर्विकारानीङ्गितं विदुः । आकाराः सात्त्विका भावाः पूर्वे बुद्ध्या परेऽन्यथे"ति । विदित्वा परस्पराभिलाषमनुभावैरवधार्येत्यर्थः । अथावधृतं सूचयन्त्यौ सोपहासमाहतुर्हळेत्यादि । अद्य अतिथिविशेषलाभे । त्वदनुरूपवरलाभ इति चान्तरोऽर्थः । सरोषमिति । सख्योर्वाक्यसमाप्तेः पूर्वमेव तद्विवक्षितस्यान्तरार्थस्य मनसि स्फुरणाल्लज्जया तच्छ्रवणस्यासह्यत्वाद्रोषः । तदो इति तदेत्यर्थः । किमित्याक्षेपे । प्रश्ने वा । अथ विवक्षितमर्थं गोपयित्वा प्रकृतानुसारेण शेषमाहतुरिममित्यादि । तात इत्यनुषज्यते । इमं लोकोत्तरगुणविशिष्टम् । जीवितस्य सर्वस्वेन सारांशेन तपसा तपःप्रभावानीतैर्लोकोत्तरपदार्थैरिति

सख्यौ - इमं जीविदसव्वस्सेण वि अदिहिं किदत्थं करउ ॥
(इमं जीवितसर्वस्वेनाप्यतिथिं कृतार्थं कुर्यात् )

शकु-- अपेहि । किंवि हिअए करिअ मन्तेह । ण वो वअणं सुणिस्सम् ॥ (अपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न वां वचनं श्रोष्यामि )

राजा -- वयमपि तावद्भवत्योः सखीगतं किञ्चित् पृच्छामः ।

---

यावत् । न केवलमर्घ्यादिनेत्यपिशब्दार्थः । कृतार्थं कुर्यात् यथार्हं संमानयेत् । वयं तु तद्दाक्षिण्यश्रवणेनार्घ्यादिकमपि नाकुर्मेत्ययमेव विवक्षितार्थः । ततः कोपस्यानवकाश इति भावः । व्यङ्ग्यार्थस्तु इममतिथिं अतिथित्वेनागतं त्वदनुरक्तं महाराजम् । जीवितसर्वस्वेन तथाभूतया त्वया । वक्ष्यति च । सा हि कुलपतेरुच्छ्वसितमिति । न केवलमातिथ्येनेत्यपिशब्दार्थः । कृतार्थं पूर्णमनोरथं कुर्यात् ॥

अथ नायकसमक्षं प्रस्तुतां सखीवचनवक्रतां जानन्ती लज्जया पुनरपि सकोपमाह अपेहीत्यादि ; अपेतं मत्समीपादपसरतम् । कुत इत्यत्राह किमपीति । किमपि कन्यकानामवाच्यं लज्जाकरं किञ्चिद्वस्तु । वां परिहासशीलयोः युवयोः । वचनमेकामपि वाचम् । इत्यवचना तिष्ठतीति शेषः । अत्र हळेत्याद्येतदन्तं नायिकामनस्यङ्कुरितस्य रागस्य बहिः स्फुटीकरणार्थम् ॥

अथ तथाविधां नायिकामालोक्य समुच्छ्वसिताभिलाषस्तस्याः क्षत्रपरिग्रहयोग्यतां द्रढयितुं तथापि तत्त्वत इत्यादिपूर्वप्रस्तुतया जिज्ञासया प्रेरितस्तदुत्पत्तिं प्रष्टुमारभते वयमपीत्यादि । वयमपि यथा यूयमस्मत्कुलनामाद्यपृच्छत तथेत्यपिशब्दार्थः । तावत् प्रथममित्यनेन पश्चात् प्रष्टव्यान्तरमस्तीति द्योत्यते । सति हि कुड्ये चित्रकर्मेति भावः । सखीगतं सखीसंबन्धि । भवत्योः सखीत्यनेन तद्वृत्तान्तज्ञानं

सख्यौ — अज्ज अणुग्गहो विअ अब्भत्थणा ॥ (आर्य! अनुग्रह इवाभ्यर्थना)

राजा — भगवान् काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रकाशम्। इयं च वः सखी तदात्मजेति कथमेतत्? ॥

---

भवत्योरस्त्येवेति द्योत्यते । अत्रानेन बीजस्य दृढीकरणात् परिन्यासो नामाङ्गम् । पूर्वं विकारस्य गमनीयास्मीत्यनेन नायिकाया अप्यनुरागोक्त्या द्वयोः परस्परानुरागनिष्पत्तिप्रदर्शनात् तत्र वा परिन्यासः । तद्वचनं सादरमभ्युपगच्छतः अज्ज इत्यादि । इवेति संभावनायाम् । अभ्यर्थना जिज्ञासा । भवत्प्रश्नस्य सखीवृत्तान्तविषयकत्वेन तस्याः परमाभ्युदयहेतुत्वादनुग्रहात्मना संभावयाव इत्यर्थः । इवेत्यवधारणे वा । तद्वचसा संतुष्टः पृच्छति भगवानित्यादि । भगवानैश्वर्यादिषड्गुणपरिपूर्णः । "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवा"निति वा । प्रशंसापरमिदं ब्रह्मस्थित्यर्हतां सूचयति । शाश्वते ब्रह्मणि परब्रह्मणि । स्थितः योजितात्मा । यद्वा शाश्वते ब्रह्मणि नैष्ठिकब्रह्मचर्ये । परिग्रहराहित्यादूर्ध्वरेता इति यावत् । यथा महाभारते "ऊर्ध्वरेता महाभागो भगवा"नित्यादि । इतीति प्रकारे । प्रकाशं प्रसिद्धम् । व इति द्व्यर्थे । पूजायां बहुवचनम् । चकारो यौगपद्ये विरोधं द्योतयति । एतदित्यनेन विरुद्धं पूर्वोक्तवाक्यार्थद्वयं परामृश्यते । कथं संगच्छत इति शेषः । तत्प्रकारः कथ्यतामिति भावः । ननु पूर्वं "अपि नाम मुने"रित्यादिना काश्यपस्यासवर्णक्षेत्रं शकुन्तलायास्तज्जन्म च राज्ञा संभाव्योक्तमद्य तु नित्यब्रह्मस्थितिः प्रसिद्धतयोक्तेति पूर्वापरविरोध इति चेन्न । यतो "दुहितरं शकुन्तला"मिति वैखानसवचसा प्रमाणभूतेन "त्वत्तोऽपि तातकाश्यपस्ये"ति सखीवचसा च प्रसिद्धाया अपि ब्रह्मस्थितेरयथार्थत्वं काचित्कं भङ्गं वा

अन— सुणादु अज्जो । अत्थि कोसिअत्ति गोत्तणामहेओ महापवाहो राएसी । (शृणोत्वार्यः । अस्ति कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः)

राजा— अस्ति, श्रूयते ।

अन— तं सहीए णो पहवं अवगच्छ । उज्झिअसरीराए वड्ढणादिहिं उण तादकस्सवो से पिदा ॥ (तं सख्या नौ प्रभवमवगच्छ । उज्झितशरीराया वर्द्धनादिभिः पुनस्तातकाश्यपोऽस्याः पिता)

---

संभाव्य पूर्वमपि नामेत्युक्तम् । अद्य पुनस्तत्त्वान्वेषणाय प्रवृत्तत्वात् प्रसिद्ध्यनुरोधेनैव वक्तव्यमिति ॥

पृष्टयोर्द्वयोरुपपत्तये तदुत्पत्तिसंबन्धिनीं कथां कथयितुमुपक्रमते सुणादु इत्यादि । शृणोत्वादरेण श्रवणं करोत्वित्यनेन कथाया रमणीयत्वं विस्तरश्च द्योत्यते । कौशिक इति गोत्रनामधेय इति । कुशिकस्य गोत्रापत्यं कौशिकः । विश्वामित्र इत्यर्थः । कौशिक इत्यनेन पूर्ववंशप्रभवत्वं महाप्रभाव इत्यनेन त्रिशङ्कुस्वर्गनयनकौशिकीनिर्माणाद्यनेकाद्भुतकथानिमित्तत्वं ततो लोकप्रसिद्धिश्च द्योत्यते । राजर्षिः पूर्वं राजा पश्चाद्वसिष्ठस्पर्द्धया सञ्चितनिरतिशयप्रभावाद्दषिश्च । राजत्वोक्त्या वक्ष्यमाणशकुन्तलोत्पादनं राजभाव एवेति द्योत्यते । तेन राजपरिग्रहयोग्यता च । श्रवणौत्सुक्यं द्योतयितुं तदुक्तमनुमोदते अस्तीति । श्रवणेन तत्सत्तां जानामीत्यर्थः । तदौत्सुक्यमवधार्य सादरमाह तमित्यादि । तं कौशिकम् । प्रभवं जनकम् । कथं तर्हि कण्वपुत्रीति व्यपदेश इत्यत आहोज्झितेति । उज्झितं प्रसवानन्तरं जनन्या त्यक्तं शरीरं यस्याः । वर्द्धनादिभिः शरीरपोषणादिभिः आदिना विनयाधानादि गृह्यते । पुनरिति विशेषे । स च कौशिप्रतियोगिकः । पिता

राजा — उज्झितशब्देन जनितकुतूहल आमूलाच्छ्रोतुमिच्छामि ।

अन — सुणादु अॅओ । पुरा किळ तस्स राएसिणो उग्गे तपसि वट्टमाणस्स किंवि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा णिअमाविग्घआरिणी पहिदा ॥ (शृणोत्वार्यः । पुरा किल तस्य राजर्षेरुग्रे तपसि वर्त्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सरा नियमविघ्नकारिणी प्रहिता)

---

पातीत्यन्वर्थ, न तु जनक इति भावः । यथोक्तं "शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते । क्रमेणैते त्रयः प्रोक्ताः पितरो धर्मसाधने" इति । "कन्यादाताऽन्नदाता च ज्ञानदाताभयप्रदः । जन्मदो मन्त्रदो ज्येष्ठभ्राता च पितरः स्मृताः" इति च । एवं संक्षेपेणोक्तिर्नायकानुरागपरीक्षार्थो ॥

अथ राजर्षिबीजभूतत्वात्तां राजपरिग्रहयोग्यां मन्यमानस्तत एव प्रवर्द्धमानानुरागस्तन्मातरमपि ज्ञातुं तदुत्पत्तिं विस्तरेण श्रोतुकामो भङ्ग्या पुनरप्याहोज्झितेत्यादि । उज्झित इति शब्दस्तेन । शब्दग्रहणं तदर्थस्य सम्यग्ज्ञानाभावात् परित्यागरूपार्थस्यासंभाव्यत्वात् । कुतूहलं श्रवणेच्छाप्रेरको मनोव्यापारविशेषः । उज्झितशब्देनेत्यनेन न त्वनुरागेणेति स्वानुरागगोपनं गम्यते । आमूलादादित आरभ्य । सुणाद्वित्यादि । राजर्षेरिति नियमेत्यत्रान्वेति । उग्र इत्यादि शङ्कायां सा च प्रेषणे हेतुः । किमप्यत्यर्थम् । जातशङ्कैः स्वर्गभ्रंशभीरुभिः । नियमविघ्नकारिणी सती तपोविघ्नं कर्तुमित्यर्थः । प्रेषिता । किलेत्यैतिह्ये । अप्सरसां मध्ये मेनकायाः प्रेषणेन लावण्यादिगुणोत्कर्षो द्योत्यते । "स्त्रियां बहुष्वप्सरसः" इत्यमरवचनस्य अतचि चेति सूत्रे अप्सरा इति महाभाष्यप्रयोगात्, "स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपी"ति शब्दार्णवाच्च प्रायिकत्वादत्रैकवचनम् ।

**राजा— अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् । ततस्ततः ।**

**अन— तदो वसन्तावदारसमए ताए उम्मादइत्तअं रूपं दक्खिअ ।**

(ततो वसन्तावतारसमये तस्या उन्मादयितृकं रूपं दृष्ट्वा)

(इत्यर्द्धोक्ते लज्जया विरमति)

**राजा— परस्ताद्गम्यत एव । सर्वथाप्सरःसंभवैषा ।**

**अन— अहकिम् ॥** (अथकिम्)

---

अथ देवा अपि तपोविघ्नं कर्तुमयतन्त इति वादिन्यां मयि किमयं मृषावादमाशङ्केतेति सख्याः शङ्कामपनेतुकामस्तदुक्तस्योपपत्तिं दर्शयत्यस्तीत्यादि । ततस्तत इति पुनरपि तत्कथाश्रवणौत्सुक्यं द्योतयति । अथावशिष्टमप्याह तत इत्यादि । ततः मेनकाप्रेषणानन्तरम् । वसन्तावतारसमय इति उदारसमय इत्यपि पाठः । कुन्दमाकन्दमन्दमारुतादिभिरुत्कृष्टसमय इत्यर्थः । उत्कर्षश्च कामोद्दीपनविभावप्रधानत्वात् । तस्या मेनकायाः । लज्जया विरमतीति । अवशिष्टकथनादिति शेषः । तच्च स राजर्षिस्तस्यामासक्तस्तामङ्गीचकारेति । कन्यकानामवाच्यस्य वचनोपक्रमो लज्जाहेतुर्विरामस्तदनुभावः । परस्तादिति । परस्तादवशिष्टमित्यर्थः । गम्यते प्रस्तावाद् ज्ञायते । अतो न वक्तव्यमिति भावः । अनेनातः परं कन्यकाहं कथं वच्मीति विषादो मा भूदिति द्योत्यते । अवगतमाह सर्वथेत्यादि । सर्वथा पूर्वं संक्षेपेण पश्चाद्विस्तरेण चोक्तेन प्रकारेणेत्यर्थः । सर्वथा कण्वपुत्रीत्वेऽपि विश्वामित्रपुत्रीत्वेऽपीत्यर्थ इति केचित् । अप्सरस्संभवा अप्सरःपदेन सामान्यवाचिना मेनकारूपो विशेषो लक्ष्यते । तेन तत्संभवाया अप्सरस्तुल्यसौन्दर्यादिकं द्योत्यते । एतेन मानुषीष्वदृष्टाश्रुतस्य सौन्दर्याद्यतिशयस्येदानीमुपपत्तिर्ज्जातेति च । अथकिमित्यव्ययमङ्गीकारे । तदुक्तं "अङ्गीकृतौ स्यादथकि"मिति । अत्रानुरक्ता-

राजा— उपपद्यते ।

मानुषीषु कथं वा स्यादस्य रूपस्य संभवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातले ॥ २२ ॥

---

याः कस्याश्चित्स्वानुरक्तमपरिचितं प्रति स्वोत्पत्तिनिवेदने धृष्टताद्यापत्त्या रसविरोधः स्यादित्यनसूयया तदुत्पत्तेर्निवेदनं कल्पितमिति न विस्मर्तव्यम् ॥

अथ तदुत्पत्तिश्रवणेन संतुष्टो गाढाभिलाषस्तद्वर्णनार्थमुक्तमनुवदन्नाहोपपद्यत इत्यादि । उपपद्यते अस्या अप्सरस्संभवत्वं युज्यत इत्यर्थः । कुत इत्यत्राह मानुषीष्वित्यादि । अधिकरणत्वविवक्षया सप्तमी । मानुषीभ्य इत्यपि पाठः । बहुवचनेन तास्वेकापि नास्याः समुत्पादनयोग्येति द्योत्यते । कथं वेति निषेधे । स्यादिति संभावनायाम् । अस्य लोकोत्तरसौन्दर्यादिविशिष्टस्य । रूपस्याकृतेः । यद्वा रूपपदेन सौन्दर्यवती लक्ष्यते, रूपाधिक्यं व्यङ्ग्यम् । एवंविधसौन्दर्यवत्या अस्या मानुषीषु संभवस्य संभावनापि नास्तीत्यर्थः । उक्तमर्थं दृष्टान्तेन द्रढयति नेत्यादि । प्रभातरलं ज्योतिः विद्युत् । चन्द्र इति केचित् । वसुधातलादित्यपि पाठः । अत्र रूपप्रभयोर्नायिकाविद्युतोर्मानुषीवसुधातलयोर्बिम्बप्रतिबिम्बभावेऽपि संभवोदेतिशब्दार्थयोरैक्यात् प्रतिवस्तूपमा । तयोर्भेदे दृष्टान्तः । यथा विद्युद् भूमेर्नोदेति तथेयं मानुष्या न संभवतीत्युपमा गम्या । विद्युदुपमया प्रभापटलदुर्निरीक्षत्वादि द्योत्यते । वसुधातलोपमया सामान्येन मानुषीणां तादृक्सौन्दर्यराहित्यं च । पूर्वार्धे क मानुष्यः केयमिति विषमालङ्कारो व्यज्यते । विस्मयो हर्षश्च भावः । अत्र नायिकागुणवर्णनेन नायकानुरागबृंहणाद्विलोभनं नामाङ्गम् । पूर्वं भगवान् काश्यप इत्यादिना कथमेतादित्यन्तेनाद्भुतस्य गम्यमानत्वात् परिभवो नामाङ्गम् । यद्यप्यु-

शकु—(अधोमुखी तिष्ठति)

राजा—(आत्मगतम्) लब्धावकाशो मे मनोरथः । किं तु सख्या परिहासोदाहृतां वरप्रार्थनामस्याः श्रुत्वा कृतद्वैधीभावकातरं मे मनः ॥

---

"पक्षेप: परिकर: परिन्यासो विलोभनम् । युक्तिः प्राप्तिः समाधानं विधानं परिभावना । उद्भेदभेदकरणानी"त्येवाङ्गानां क्रमस्योक्ततया व्युत्क्रमेण तत्प्रदर्शनमनुचितम् । तथापि "यथौचित्यं प्रयोगेन स्यादङ्गानां क्रमो मत:" इत्यादिवचनेन व्युत्क्रमेणाभिधानेऽपि न दोषः । एवं नायकयोरन्यतराश्रयत्वेनाभिधानेऽपीति ध्येयम् ॥

अधोमुखी तिष्ठतीति । प्रत्यक्षस्तुतिनिमित्ताया नायकभावज्ञाननिमित्तायाश्च लज्जाया अनुभावोऽयम् । अनेन रतेरुत्कर्षो गम्यते । अथ स्वाभिलाषानुकूलां शकुन्तलोत्पत्तिमाकर्ण्य गम्येयमिति निश्चिन्वन् स्वयं परामृशति । लब्धेत्यादि । लब्धः अवकाशः प्रवेशद्वारं येन तत्त्वं विषयौचित्यात् । मनोरथोऽभिलाषः । अभिलाषोऽयमुचितविषयो जात इत्यर्थः । अनेन धार्मिकाग्रेसरस्यास्य संतोषो गम्यते । अथापायदर्शी, स्नेहः पापशङ्की इति नीत्या पुनरपायमाशङ्कमान आह किन्त्वित्यादि । सख्या प्रियंवदया । परिहासोदाहृतां 'जह अणजोसिणी"त्यादिना पूर्वोक्ताम् । श्रुत्वेति हेतुगर्भम् । कृत उत्पादितः, द्वैधीभावः संशयः । सखीवचनेन प्रार्थ्यमानवरस्य रूपानुरूप्यनिश्चयेऽपि तस्य परिहासरूपतया तदंशे अप्रामाण्यशङ्कोदयात् प्रार्थ्यमानो वरो राजादिरूपो वा तापसो वेति संशय इति यावत् । अत एव वैखानसमित्यादिप्रश्नस्तदुत्तरं चैतदनुरोधेन संगच्छते । तेन कातरमनिष्टाशङ्कि । मे मन इत्यन्वर्थं तत्त्वान्वेषणशीलत्वं सूचयति । तदेनां भङ्ग्या पृच्छामीति भावः । सुखदुःखयोर्गम्यत्वाद्विधानं नामाङ्गम् ॥

प्रियं— (सस्मितं शकुन्तलां विलोक्य नायकाभिमुखीभूत्वा) किं पुणोवि वत्तुकामो अअ्ओ? । (किं पुनरपि वक्तुकाम आर्यः)

शकु— (सखीमङ्गुल्या तर्जयति)

राजा— सम्यगुपलक्षितं भवत्या । अस्ति सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम् ॥

प्रियं— अळं विआरिअ । अणिअन्तणाणुओओ तपस्सिजणो णाम ॥ (अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम)

---

सस्मितमिति । नायिकाया रागहेतुकस्य तादात्विकवैलक्ष्यस्य दर्शनं, तदानीं राज्ञो विवक्षुत्वावगमेन पुनरपि तत्परिहासोपायस्य मनसि स्फुरणं च सस्मितावलोकने हेतुः । एवं परिहासप्रवृत्तापि कार्यज्ञा नायिका विषयमपि नायकानुरागं निर्णेतुं विवक्षितार्थानुयोजनद्वारेणारभते किमित्यादि । किमिति प्रश्ने । पुनरपीत्यनेन विवक्षाया अनवकाशः सूच्यते । तर्जयतीति । इदानीमपि मत्संबन्धि यत्किञ्चन वाचयितुमस्मिन्महापुरुषे विवक्षुत्वमनयारोपितमिति सखीहृदयकौटिल्यं जानन्ती रोषेण भर्त्सयतीत्यर्थः । अथ वरप्रार्थनायास्तत्त्वं निश्चिचीषुः स्वाभिप्रायमपह्नुत्य नायिकायाः सख्योर्गुरोर्वा तत्सङ्कल्पं प्रष्टुं लोकवृत्त्या प्रथमं प्रियंवदां श्लाघमान आह सम्यगित्यादि । उपलक्षितं लक्षणैरुन्नीतम् । भवत्येति प्रशंसागर्भम् । ओष्ठपरिस्पन्दादिरूपेण सूक्ष्मविकारेणानुमितं यत्तत्समीचीनामित्यर्थः । अत्र हेतुरस्तीत्यादि । सच्चरित्रश्रवणलोभात् न त्वन्यपरत्वादिति भावः । निपुणतरा प्रियंवदा नायकहृदयमपह्नुतमपि तत्त्वतो विजानन्ती तदनुसारेणाहाळमित्यादि । अलमिति निषेधे । इदं प्रष्टव्यं न वेति विचारो मा भूदित्यर्थः । निश्शङ्कं सर्वमनुयुज्यतामिति भावः । अत्र हेतुरानियन्त्रणेत्यादि । देशकालादिभिः प्रतिबन्धो नियन्त्रणा । राजादिभुजनानिव मुनिज-

राजा—इति सखीं ते ज्ञातुमिच्छामि ।

वैखानसं किमनया व्रतमाप्रदाना-
द्व्यापाररोधि मदनस्य निषेवितव्यम् ।
अत्यन्तमेव मदिरेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥ २३ ॥

---

नान् प्रति प्रश्नस्य देशकालादिभिः प्रतिबन्धो नास्तीत्यर्थः । अनेन भवन्तं प्रति प्रश्ने विचारः कार्य इति द्योत्यते ॥

अथ तद्वचसा संतुष्टः स्वानुरागं गोपयन् भङ्ग्या पृच्छतीतीत्यादि । इतीति हेतौ । त्वदुक्तन्यायेनानुयोगनियन्त्रणाभावादित्यर्थः । इति वक्ष्यमाणप्रकारेणेत्यर्थो वा । ते सखीमित्यनेन तद्वृत्तान्तज्ञता सूच्यते । कथं जिज्ञासेत्यत्राह वैखानसमित्यादि । वैखानसमित्यनेन व्रतस्य महनीयत्वं व्यज्यते । किमिति प्रश्ने । अनया मुनिकन्यकात्वेन तपश्चरणार्हया शकुन्तलया । वैखानसं व्रतं मुनिकन्यकोचितं तपश्चरणम् । प्रकृष्टं दानं प्रदानं विवाहः तस्मादा तदवधि । व्रतं स्तौति व्यापारेत्यादि । मदयति चित्तमुन्मादयतीति मदन इत्यनेन तद्व्यापाराणां दुर्निवारत्वं व्यज्यते । तस्य ये व्यापारा मनसः कामसुखोन्मुखीकरणादयस्तद्रोधीत्यनेन व्रतस्य प्रभावातिरेको व्यज्यते । तथाविधं व्रतमनया विवाहावधि यथावदनुष्ठेयं किमित्यर्थः । अनेन तापसव्यतिरिक्ताय रूपानुरूपाय कस्मैचिन किमस्याः प्रदानमित्यर्थो भङ्ग्या पृष्टः । पक्षान्तरं पृच्छत्यत्यन्तमित्यादि । इयमिति विपरिणामेनानुषङ्गः । अत्यन्तमामरणम् । यथा रघौ "किंवा तवात्यन्तवियोगमोघ" इति ; न तु विवाहपर्यन्तमित्येवकारार्थः । मदिराणि हर्षकराणि । मदी हर्ष इत्यस्मादिषिमदीत्यादिना औणादिकः किरच् । ईक्षणानि नयनान्यवलोकनानि वा तैः वल्लभाः सामान्यतस्तपस्विनां प्रिया विशेषतोऽस्याः

स्वेक्षणसदृशेक्षणत्वादत्यन्तं प्रिया इत्यर्थः । ताभिः आहो इति विकल्पे। निवत्स्यति निवासं करिष्यति । समं सह । इयं यावज्जीवमेव तादृशीभिर्हरिणाङ्गनाभिः सह निवत्स्यति किमित्यर्थः । अत्र वनवासरूपमृगीसहवासो वैखानसव्रताङ्गमिति तेन तदङ्ग्याक्षिप्यते । यावज्जीवमनया तद्व्रतमनुष्ठेयं किमिति यावत् । अनेन तापसाय वा प्रदानमिति पृष्टम् । अत्र पूर्वार्द्धे व्रतस्तुत्या, उत्तरार्द्धे सखीभिरिव मृगीभिः सहवासे शकुन्तलायाः सन्तोषं तेन तत्सहवास एव कार्य इति च सूचयन्त्या मदिरेत्यादिविशेषणोक्त्या च यावज्जीवं व्रतस्यानुष्ठेयत्वबोधनद्वारा तापसायैवेयं दातव्येत्यर्थः स्वानुरागगोपनायापाततो बहिः प्रकाश्यते। उक्तार्थसूचनार्थमेवात्यन्तमेवेत्येतावन्मात्रमनुक्त्वा भङ्ग्यन्तरेण मदिरेत्याद्युक्तम् । आन्तरो व्यङ्ग्यार्थस्तु वैखानसमित्यनेन कठिनशरीरैस्तापसैरेवैतादृशं व्रतमनुष्ठेयमिति अनया सौकुमार्यादिशालिन्येत्यनेन तपश्चरणायोग्यत्वम् । यथा प्रागुक्तम् । "इदं किलाव्याजमनोहर"मित्यादि । प्रकृष्टं दानं प्रदानं प्रकर्षश्च "कन्या वरयते रूप"मित्याद्युक्तगुणविशिष्टसंप्रदानकत्वमित्यनेन वरस्य रूपगुणः पूर्वं चिन्त्य इति, मदनस्येति व्यापाराणां स्वरसतः प्रवृत्तिः, तद्रोधीति तेषां तपश्चरणादिना कथञ्चिन्निगूहनमनया क्रियत इति, तेनास्याः कामसुखौन्मुख्यं, तत एवेदानीमेवैषा रूपानुरूपाय कामकलाकुशलाय कस्मैचिद्दातव्येति च । निषेवितव्यमित्यत्र न्युपसर्गेण व्रतानुष्ठाने विश्रमाभावव्यञ्जनद्वारा कष्टमियमेवं क्लिश्नातीति शोकश्च द्योत्यते । मदिरेक्षणवल्लभेति भिन्नमियमित्यस्य विशेषणम् । मदिराभ्यामीक्षणाभ्यां वल्लभा अथवा मदिरेक्षणा च वल्लभा चेति वा न तु मदिरेक्षणानां वल्लभेति षष्ठीसमासः पुंवद्भावाप्राप्तेः । समं तुल्यम् । मदिरेत्यादिना मृगीनिर्विशेषत्वात्सत्वादनर्हत्वं सूच्यते । अनेनात्यनुरूपायैवेयं दातव्या न तु तापसायेत्यर्थश्च । मदिरेत्यादिना स्वानुरागश्चेति । अत्र विशेषणस्य साभिप्रायत्वात् परिकरः ॥

प्रियं— अॅअ धम्मआरणे वि परवसो अअं जणो । गुरुणो उण अणुरूपवरप्पदाणे सङ्कप्पो ॥ (आर्य! धर्माचरणेऽपि परवशोऽयं जनः । गुरोः पुनरनुरूपवरप्रदाने संकल्पः)

राजा —दुरापेयं खलु प्रार्थना । (स्वगतम् )

........................................................................................................

अथात्यन्तचतुरा सखी नायकाभिप्रायं सर्वमवगम्य समुचितमुत्तरमाहाॅअइत्यादि । आर्येति प्रशंसागर्भं भवतो गूढार्थचातुरी ज्ञातेति सूचयति । धर्माचरणेऽपीति । धर्माचरणस्य पितृनियोगानपेक्षत्वं द्योतयताऽपिशब्देन किमुत कामाचरण इति द्योत्यते । परवशो गुर्वधीनः । अयं जनः शकुन्तला आवां च । एतेनास्या अत्यन्तगुर्वायत्ततया व्रतस्याऽप्रदानत्वमत्यन्तत्वं वा गुरुनियोगापेक्षं तत्र नास्या आवयोर्वा स्वातन्त्र्यमित्युक्तम् । किं चात एवानया तापसो वान्यो वा न कश्चिद्वरत्वेन सङ्कल्पितः, तदन्यानुरागशङ्का मा भूदस्यां तवानुरागो युक्त इति च द्योत्यते । तर्हि गुरोर्मतं किमित्यत्राह गुरोरित्यादि । गुरोः काश्यपस्य । पुनश्शब्दो विशेषणे । अनुरूपः रूपादिगुणैः सदृशो यो वरस्तत्प्रदाने । सङ्कल्पः इमामनुरूपाय दास्यामीति । अनेन व्रतमाप्रदानमेव गुरुणा संकल्पितमित्युक्तम् । संकल्पपदेन गुरुणापि वरत्वेन न कोऽपि निश्चित इति ततस्तवानुरागो युक्त इति च द्योत्यते । अत्र गूढवृत्तान्तप्रदर्शनादुद्भेदो नामाङ्गम् ॥

अथ स्वानुकूलवचनश्रवणेन प्रहृष्टः स्वस्य तदनुरूपतानुसन्धानेऽपि स्वानुरागगोपनार्थं तटस्थवृत्त्या नायिकागुणोत्कर्षद्योतकेन प्रियवचनेन प्रियंवदां प्रमोदयति दुरापेत्यादि । प्रार्थ्यत इति प्रार्थना प्रार्थ्यमानोऽर्थः । रूपादिभिरनुरूपो वर इत्यर्थः । दुरापा खलु एतदनुरूपस्यादर्शनाद् दुर्लभैव । एतेन नायिकागुणोत्कर्षो द्योत्यते । अथादावसवर्णक्षेत्रसंभवा स्यादिति सन्दिहानः पश्चादात्मप्रत्ययेन नि-

भव हृदय! साभिलाषं सम्प्रति सन्देहनिर्णयो जातः।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ २४ ॥

---

अयेऽपि परप्रत्ययमिच्छुस्तत्त्वान्वेषणाय प्रवृत्तः सर्वमपि तत्त्वं सखीवचनेनावगम्य गम्यैवेयमिति निश्चिन्वंस्तदाशङ्काकातरं हृदयमभिमुखीकृत्य सहर्षमाह भवेत्यादि । हृदयेति संबुद्धिस्तदभिलाषस्योचितविषयकत्वेन तस्मिन् प्रीतिबहुमानादिकं द्योतयति । साभिलाषं भव यथेष्टमेनामभिलष । अनुमतौ लोट् । पूर्वमभिलाषस्यानुचितविषयकत्वशङ्कयानुमतिर्न कृतेत्यनेन गम्यते । यद्वा विधौ लोट् । तथा सत्येव परमानन्दलक्षणं श्रेयस्तव कदापि स्यादिति भावः । उक्तार्थे हेतुं स्फुटमाह सम्प्रतीत्यादि । सम्प्रति अस्या जन्मनि वरसङ्कल्पादौ च सखीवचनेनावगते सतीत्यर्थः । अस्य पूर्वोत्तरवाक्ययोः संबन्धः । सन्देह· पूर्वोक्तसंशयः, तत्पूर्वो निर्णय इति मध्यमपदलोपी समासः । यद्वा सन्दिह्यत इति सन्देहस्तद्विषयः, तस्य निर्णयः। निर्णयस्य सन्देहपूर्वकत्वोक्त्या तस्याऽव्यभिचारो द्योत्यते । सन्देहनिर्णययोः स्वरूपं हृदयंगमेन दृष्टान्तेनाहाशङ्कस इत्यादि । आशङ्कसे वर्तमानसामीप्ये भूते लट् । यत् पुरो दृष्टं रात्रौ प्रकाशमानं यद्वस्तु । अग्निं स्पर्शायोग्यमङ्गाररूपं वह्निम् । कान्त्यादिसादृश्याद्विशेषाज्ञानादिदं स्पर्शाक्षमो वह्निः स्पर्शक्षमं रत्नं वेति यदाशङ्कितवा इत्यर्थः । तदिदं तथाशङ्कितमिदं वस्तु । स्पर्शक्षमं रत्नं विशेषदर्शनात्तथा निश्चितमित्यर्थः। यामगम्यां मुनिकन्यकामाशङ्कितवान् सम्प्रति सेयं गम्या राजकन्यकेति निश्चितेति प्रस्तुतार्थोऽनेन गम्यत इति सादृश्यनिमित्ताप्रस्तुतप्रशंसा । अत्राग्निमित्यनेन "शमप्रधानेषु तपोधनेष्वि"ति वक्ष्यमाणरीत्या तपस्विनां तेजोविशेषं सूचयता नाभिभवनीयत्वं तत्स्पर्शस्य स्प्रष्टुर्महानिष्टहेतुत्वं च । रत्नमित्यनेनोपभोगे नायिकायास्तदुपभोक्तुश्च युगपत् परभागलाभो रत्नहारी तु पार्थिव इति स्वस्यावश्यमुपादेयत्वं च सूच्य-

शकु—(सरोषमिव) अणसूए! गमिस्सं अहं। (अनसूये! गमिष्याम्यहम्)

अन—किण्णिमित्तम्? (किन्निमित्तम्)

शकु—इमं असंबद्धप्पलाविणीं अज्जाए गोदमीए णिवेदइदुं॥ (इमामसंबद्धप्रलापिनीमार्यायै गौतम्यै निवेदयितुम्)

अन—सहि ण जुत्तं अकिदसक्कारं अदिहिविसेसं उज्झिअ अ-

---

ते। केचिदत्र रूपकातिशयोक्तिमाहुः। अन्ये तु यत् शकुन्तलारूपं यद्वस्त्वित्यर्थकल्पनया रूपकमिच्छन्ति। अत्र काव्यलिङ्गं च। हर्षौत्सुक्यादयो भावाः। सुखस्य गम्यमानतया प्राप्तिर्नामाङ्गम्॥

एवं नायकाश्रयाया रतेः क्रमेण प्रकर्षं प्रदर्श्य नायिकाश्रयाया अपि तस्यास्तं प्रदर्शयितुं नायिकायाः कामपि प्रणयकोपचेष्टां प्रदर्शयति सरोषमित्यादि। वरालापजनितया लज्जया नायकसन्निधौ स्थातुमसामर्थ्यात् प्रियंवदां प्रति रोषः। इवेति प्रतीतौ रोषमभिनीयेत्यर्थः। मनसि हर्ष एवेतीवशब्देन द्योत्यते। अथ गमनहेतुं जानन्त्यपि तन्निरोधार्थं पृच्छति किण्णिमित्तमिति। निमित्तमाहेमामित्यादि। असंबद्धप्रलापिनीमश्राव्यभाषणशीलाम्। गौतमी नाम शकुन्तलामातृस्थानीया कण्वस्य स्वसा॥

तदा नायकाभिप्रायं गूढमपि सख्या औत्सुक्यं च जानन्ती प्रस्थानाध्यवसायिनीं तां धर्मलोपोपन्यासव्याजेनोपहासगर्भं पुनरपि निषेधति सहीत्यादि। सखीति संबुद्ध्या त्वं तत्र श्रेयसि सदा जागृषस्ततस्त्वास्मद्वचनानुरोधनमेवोचितमिति द्योत्यते। आश्रमवासिन इत्यनेन धर्मनिरतत्वं सूच्यते। स्वच्छन्दतो गमनं न युक्तमिति। अतो मा गा इति भावः। अत्र साभिलाषमेनं हृदयवल्लभमनादृत्य स्वच्छन्दगमनं तव न युक्तमित्युपहासार्थो व्यङ्ग्यः। न किंचिदुक्त्वेति वचनाभावोऽनसूयां प्रत्यपि रोषस्यानुभावः। प्रस्थिता प्रस्थातुमा-

स्समवासिणो जणस्स सच्छन्ददो गमणं ।। (सखि! न युक्तमकृतसत्कारमतिथिविशेषमुज्झित्वाश्रमवासिनो जनस्य स्वच्छन्दतो गमनम्)

शकु—(न किञ्चिदुक्त्वा प्रस्थिता)

राजा—कथं गच्छति (गृहीतुमिच्छन्निगृह्यात्मानम्।) अहो चेष्टाप्रतिरूपिका कामिनां मनोवृत्तिः। अहं हि ॥

---

रुन्धवती। आदिकर्मणि क्तः। न तु प्रस्थानं कृतवतीत्यनेन नायकदर्शनौत्सुक्यात् प्रस्थानस्यानिष्टत्वं द्योत्यते। तथापि तदारम्भेण लज्जायाः प्राबल्यं च। गमनारम्भोक्तिर्नायकस्यापि गमनाग्रहत्वप्रदर्शनद्वारा रतिपरिपोषप्रदर्शनार्थेत्यनुपदं स्फुटीभविष्यति। कुपिता प्रस्थितेत्यपि पाठः ॥

कथं गच्छतीति। कथमिति किमित्यर्थे। सविषादसम्भ्रमद्योतकम्। अनेन नायकस्यापि तद्रूपामृतपानमहोत्सवविच्छेदाद्गमनस्यानभिमतत्वं द्योत्यते। अत एवाह ग्रहीतुमिच्छन्निति। अनेन धारावाहिनः कालाक्षमत्वलक्षणौत्सुक्यस्य प्राबल्यं ध्वन्यते। ग्रहीतुमिच्छन्न तु सा गृहीता। अत्र हेतुर्निगृह्येति। विनयादिनेति शेषः। आत्मानं मनः। अथ सामान्यतः कामिनामवस्थां सविस्मयमनुसंदधात्यहो इति। चेष्टा शरीरव्यापारः। तस्याः प्रतिरूपिका सदृशी चेष्टायां सत्यां यादृशी प्रतीतिर्मनोव्यापारेऽपि तादृशीति तत्तुल्येत्यर्थः। सति मनोव्यापारेऽसतोऽपि शरीरव्यापारस्य सत्त्वेन स्फुरणादाश्चर्यम्। उक्तं सामान्यं स्ववृत्तान्तेन प्रकृतेन समर्थयतेऽहं हीत्यादि। अनुयास्यन् अनुयानमिच्छन्नित्यनेन ग्रहीतुमिच्छन्नित्येतदर्थ उच्यते। मुनितनयां न तु यां काञ्चिदित्यनेन तस्या बहुमानास्पदत्वमनुयानस्यात्यन्तमनौचित्यं च द्योत्यते। सहसेति पूर्वोत्तरयोः संबध्नाति। विनयेन "इन्द्रियाणां जयं प्राह विनयं भरतो मुनि"रिति केचित्। इन्द्रिय-

अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्थानादनुच्चलन्नपि गत्वैव पुनः प्रतिनिवृत्तः ॥ २५ ॥

प्रियं— (शकुन्तलामुपरुध्य) हळा ण जुत्तं गन्तुम् । (हला न युक्तं गन्तुम)

शकु—(सभ्रूभङ्गम) किण्णिमित्तम्? । (किन्निमित्तम् )

प्रियं - रुक्खसेअणे मे दुवे धारेसि । एहि दाव अत्ताणं मोइअ तदो गमिस्ससि ।। (वृक्षसेचने मे द्वे धारयसि । एहि ताव-

---

जयादिजन्यप्रह्वत्वादिकारणभूतश्चित्तवृत्तिविशेषो विनयः । अत एव "जितेन्द्रियत्वं विनयस्य कारण"मित्युक्तम् । "विनयो लोकमर्यादाशास्त्रार्थानतिलङ्घन"मिति भावप्रकाशश्चेत्यपरं । वारितः प्रसरोऽनुयानात्मको यस्य इत्यनेन निगृह्यात्मानमित्येतदर्थ उक्तः । अतः स्थानाद्विश्रमस्थानात् स्थितेर्वा । अनुच्चलन्नपीति विरोधे । मनश्शरीरयोरभेदोपचारात्तत्परिहारः । गत्वैवेत्येवकारेण "धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गति"रितिवद् गमनस्य विशृङ्खलत्वं पुनश्शब्देन प्रतिनिवर्त्तने मान्द्यं च द्योत्यते । प्रतिनिवृत्तः तथा मे प्रतिभातीत्यर्थः । गत्वेवेति पाठे प्रतीताविवशब्दः । अत्र चेष्टेत्यादिसामान्यस्यानेन समर्थनादर्थान्तरन्यासः । काव्यलिङ्गम् । विरोधाभासश्च । अत्र वा विस्मयावेशात् परिभावना नामाङ्गम् ॥

अथ गमनोद्युक्तां तामपदेशान्तरेण निरुणद्धि हळेत्यादि । सभ्रूभङ्गमिति । अयमसूयानुभावः । अपदेशमाह रुक्खसेअणे इत्यादि । मे मह्यम् । "धारेरुत्तमर्ण" इति संप्रदानता । धारयासि ऋणत्वेन धत्से । त्वं यावतो वृक्षान् सिञ्चसि तावतोऽहमपीति पूर्वप्रतिज्ञानुरोधेन । यद्वा अयमनेन जनेन सेचनीयोऽयमनेनेति नियमस्यास्माभिः क्लृप्ततया त्वया सेचनीययोः सेचनस्य मया कृतत्वेन मया

दात्मानं मोचयित्वा ततो गमिष्यसि) (इति बलादेनां निवर्तयति)

राजा—भद्रे! वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षयामि । तथा ह्यस्याः ।

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।

---

सेचनीययोस्तत्प्रतिनिधित्वेन त्वया सेचनीयतया वृक्षद्वयसेचनं तवावशिष्टं तदृणत्वेन मह्यं धारयसीत्यर्थः । तावत्तस्मात् । ततस्तदृणात् । बलादेनां निवर्तयतीति । अनेन पूर्वोक्तवाङ्मात्रेण निषेधः शकुन्तलया लज्जादिना नाङ्गीकृत इति गम्यते । एवमुपायकल्पनं वक्ष्यमाणरीत्या नायिकारूपालम्बनपरिपोषद्वारा नायकानुरागप्रवर्धनार्थं मुद्रादानोद्यमावसरसम्पादनार्थं चेत्यादि स्फुटम् । बलादेनां निवर्तयतीत्यनेन प्रोत्साहनस्य गम्यमानत्वाद् भेदो नामाङ्गम् ॥

तदानीमृणमोचनप्रसङ्गेन विक्लवां नायिकामृणान्मोचयितुं कारुणिकत्वव्यपदेशेन रागप्रकर्षमपह्नुत्य सखीमाह भद्र इत्यादि । भद्र इति संबुद्ध्या मदभिप्रायविरोधिनी मा भूरिति प्रार्थना द्योत्यते । वृक्षसेचनात् पूर्वमनुष्ठितादित्यर्थात् । एवकारेण बहुवृक्षसेचनपरिश्रमं सूचयता पुनर्वृक्षद्वयसेचनेनास्या ऋणमोक्षणाशक्तत्वं द्योत्यते । किं च तस्या मदनसन्तापपरिश्रमगोपनमपि गम्यते । परिश्रान्तां परितः श्रमयुक्ताम् । अत्रभवतीमिति प्रशंसागर्भम् । स्वत एव परिश्रमसहनाशक्तत्वं द्योतयति । लक्षयामि लक्षणैरूहे । तान्येव लक्षणान्याह स्रस्तेत्यादिना । स्रस्तांसौ "उन्नतांसः पुमान् पूज्यः सन्नतांसा तु सुन्दरी"-त्यादिवचनेन स्वत एव सन्नतत्वेन अत्यन्तसन्नतांसावित्यर्थः । अतिमात्रेति । नैसर्गिकलौहित्यापेक्षया । घटोत्क्षेपणादिति सर्वत्र हेतुः । अद्यापि वृक्षसेचनेऽवसितेऽपीति सर्वत्र संबद्ध्यते । अनेन परिश्रमाति-

बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ।। २६ ।।
तदहमेनामनृणां करोमि । (अङ्गुलीयकं दातुमिच्छति)

---

शयः प्रकाश्यते । प्रमाणाधिकः दीर्घः । प्रमाणं चोक्तम् । "देहं व्याप्य स्वनाडीभिः प्रमाणं कुरुते बहिः । द्वादशाङ्गुलमानेन तस्मात् प्राणः समीरित" इति । बद्धं संजातम् । कर्णशिरीषरोधि कर्णालंकारमागण्डविलम्बिकेसरं शिरीषपुष्पं श्रमातिशयेन पतनायोन्मुखमपि रोद्धुं शीलवत् । घर्माम्भसां सम्पर्केण तस्य सातिशयसक्तत्वात् पतनाभाव इत्यनेन घर्माम्भसां व्याप्तिः प्रकाश्यते । जालकं, 'क्षारको जालक'मित्यमरादस्फुटकालिकावाचिना जालकपदेनाऽशोकादिनवकलिकावृन्दाकारं बिन्दुकदम्बकं लक्ष्यते । सातिशयोद्दीपकत्वं व्यङ्ग्यम् । जालमेव जालकं समूह इति केचित् । स्रंसिनि शिथिले, एकहस्तेन यमिता बद्धाः । अत एव पर्याकुला अंसावलम्बिनः । अत्र स्वभावोक्तिः । तया रतिकेलिविरतिपरिश्रममनुस्मारयन्त्याऽऽलम्बनविभावोऽभिनवीक्रियते । एवं श्रमातिशयमनुभावमुखेन प्रदर्श्य तदृणमोचनोपायं निरूपितमाह तदित्यादि । यस्मादियमिदानीमपि परिश्रमानुवृत्त्या त्वदृणमोचनाशक्ता तस्मादित्यर्थः । अङ्गुलीयकं दातुमिति । लोके प्रतिनिधिवस्तुदानेनापि ऋणनिवृत्तिदर्शनादिति भावः । इच्छति नात्रारम्भो लक्ष्यते । असाधकत्वं व्यङ्ग्यम् । यथा "उद्धर्तुमैच्छत् प्रसभोद्धृतारि"रित्यादौ । अत्राङ्गुलीयदानोपक्रमकरणनमयं दुष्यन्त इति ज्ञानेन तद्दाक्षिण्यदर्शनेन च नायिकाया रागोद्दीपनार्थम् । यावानालम्बनोत्कर्षस्तावान् हि रागप्रकर्षः । अत्र शकुन्तलायां प्रस्थितायां तत्प्रसङ्गे किंचिद्विच्छिन्ने पुनः स्रस्तांसावित्यादिना तत्प्रसङ्गात् करणं नामाङ्गम् ।।

उभे—(नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः । )

राजा—अलमन्यथा संभाव्य । राज्ञः परिग्रहोऽयम् ॥

प्रियं—तेण हि णारुहादि एदं अङ्गुळीअं अङ्गुळीविओअस्स । तव वअणेण एव्व अणिरिणा णाम एसा । (तेन हि नार्हत्येतदङ्गुलीयमङ्गुलीवियोगस्य । तव वचनेनैवानृणा नामैषा । )

---

नामेत्यादि । नाम दुष्यन्तेति । मुद्राङ्गुलीयकम् । "मुद्रा मुकुलने बन्धे लिङ्गे चिह्नेऽङ्गुलीयके" इत्यजयः । नामयुक्ता मुद्रा नाममुद्रा तस्यामक्षराणि । नामरूपाणि मुद्राक्षराणीति वा । अनुवाच्य पुनःपुनर्वाचयित्वा । परस्परमवलोकयत इति । अयं महाराजो दुष्यन्तो न त्वधिकारिपुरुष इति तदभिप्रायः । अत्रानेनाधिकारिपुरुषव्यपदेशेन गूढस्य नायकस्योद्भेदादस्य बोद्भेदो नामाङ्गम् । तदानीमिङ्गितज्ञो नायकस्तदभिप्रायमवगम्य पुनरप्यात्मनिगूहनायाऽहाऽलमित्यादि । अन्यथा मदुक्तप्रकारातिरिक्तप्रकारेण । राजत्वेनेति यावत् । संभाव्यालं सम्भावना मा भूत् । अलंखल्वोरिति क्त्वा । अहमधिकारिपुरुष एवेति भावः । तर्हि कथमिदमङ्गुलीयकं तव करे लब्धमित्यत आह राज्ञ इत्यादि । राज्ञ इति पञ्चमी । परिगृह्यत इति परिग्रह आदत्तः । अयमिदमङ्गुलीयकम् । अधिकारिपुरुषज्ञापनाय राज्ञा मुद्रारूपेण दत्तमिदं राजकीयमित्यर्थः । अत्राप्यान्तरार्थस्तु, अन्यथा नाममुद्रादर्शनाधिगतप्रकारातिरिक्तप्रकारेण । राज्ञः राज्ञो ममेति ॥

अथ विदग्धा प्रियंवदा तदर्थं सम्यगवगम्य भङ्ग्या प्रतिवक्ति तेण हीत्यादि । तेन हि राजपरिग्रहत्वात् । वियोगस्येति सम्बन्धे षष्ठी । वियोगस्य नार्हतीत्यनेन किमुत दानस्येति व्यज्यते । स्वीयमेव दातव्यं, न तु राजप्रसादलब्धं तस्यादेयत्वादिति भावः । राज्ञस्तवाङ्गुलिवियोगं नार्हत्यन्येषामेतद्धारणानर्हत्वादित्यपि व्यङ्ग्यार्थः । क-

(किंचिद्विहस्य) हळा सउन्दले मोइदासि अमुणा अणुकम्पिणा अऍएण । अहव महाराएण । गच्छ दाणीम् । (हला शकुन्तले! मोचितास्यमुनानुकम्पिना आर्येण । अथवा महाराजेन । गच्छेदानीम ।)

शकु—(स्वगतम) जळ अत्तणो पहविस्सम् (यद्यात्मनः प्रभविष्यामि)(प्रकाशम) का तुवं विसज्जिदव्वस्स रुज्झिदव्वस्स वा? । (का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा)

---

थं तर्हि अस्या ऋणमोक्ष इत्यत्राह तवेत्यादि । तव धर्माधिकारिणः, महाराजस्येति च । मद्वचनस्याङ्गीकरणीयतया तदहमित्यादिभवद्वचनेनैवास्या ऋणनिवृत्तिरासीदित्यर्थः । अनेनाहो सखीजनोऽयं दाक्षिण्यप्रयोगेण नागरिकानप्यतिशेत इति नायकस्य विस्मयः प्रतीयते । किंचिद्विहस्येति । नायकस्य नायिकायां स्फुटाभिनिवेशदर्शनेन संतोषो, नायिकाया औत्सुक्येन गमनाशक्तत्वज्ञानेनोपहासो वा तद्धेतुः। नायिकानुरागं पुनरपि प्रकटीकर्तुमाह हळा इत्यादि । अनुकम्पिना दयालुना । आर्येण धर्मसाचिवेन । अथवा महाराजेनेति । यतः स्वमुद्रां दत्वा प्रेषितोऽयं ततो मूलभूतेन तेनेत्यर्थः । महाराज एवायमित्यान्तरार्थः । किंचिद्विहास एतदभिप्रायको वा । गच्छेदानीमिति । राजपुरुषेण राज्ञा वा उभयथापि तवानृण्यं कृतं, अतो यथेष्टं गच्छेत्यर्थः । अयं महाराज एव, स्वय्यत्यन्तमनुरक्तश्च, बहुधास्माभिः परीक्षितश्च, ततोऽत्र प्रहृष्टमना गच्छेत्यान्तरार्थः । इयमुपहासोक्तिस्तदनुरागपरीक्षार्था च । अथ दाक्षिण्यनिधेर्नायकस्य महाराजत्वं निपुणसखीवचनादवगम्य वर्द्धमानानुरागा तत एव तद्विरहासहिष्णुतया गन्तुमशक्ता स्वयं परामृशति जळ इत्यादि । आत्मनो मनसः । प्रभविष्यामि यदीति । अत्र सख्या नियोगो न प्रभवतीति

राजा—(शकुन्तलां विलोक्यात्मगतम्) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान् प्रति स्यात्? । अथवा लब्धावकाशा मे प्रार्थना । कुतः ।

भावः । तर्हि गमिष्यामीति शेषः । मन्मनस एतदायत्तत्वादहं गन्तुं न शक्नेत्यर्थः । गमनाकरणे निमित्तं प्रकाशमाह केत्यादि । उभयत्र भावे तव्यप्रत्ययः । वाशब्दः समुच्चये । किंशब्दः क्षेपे । अनेन विसर्जननिरोधयोः प्रभविष्णुत्वमाक्षिपति । त्वं विसर्जननिरोधयोर्न स्वामिनी, यतोऽहं काश्यपदुहिता, अतस्त्वया विसृष्टा न गच्छामीति भावः । अत्राऽऽत्मौत्सुक्यगोपनादवहित्थम् । महराजेनैव मोचिताऽहं, ततः स एव प्रभुरिति गूढार्थः ॥

अथ तथाविधायां तस्यां दृढासक्तश्चिन्तयति किं न्वित्यादि । किं न्विति वितर्के । खल्विति जिज्ञासायाम् । वाक्यालंकारे वा । यथा यत्प्रकारेण, यादृशाभिलाषेणेत्यर्थः । एवं तादृशाभिलाषेण । स्यादिति प्रार्थनायाम् । सम्भावनायामिति केचित् । किमियं समानानुरागा स्यात्, तथा प्रार्थयामीत्यर्थः । पुनर्विचिन्त्याऽऽहाऽथवेति । अत्र विकल्पः प्रार्थना वा मा भूदित्यर्थः । कुत इत्यत्राह लब्धेत्यादि । अत्रावकाशोऽनुरागिणीविषयकत्वम् । प्रार्थनानुरागः । यद्वा, प्रार्थना इयं मय्यनुरागिणी स्यादिति । लब्धावकाशा लब्धविषया । द्वेधापीयं मय्यनुरागिण्येवेति भावः । कुत इत्यत्राह वाचमित्यादि । इयमिति विपरिणामेनास्या इतरस्यापकर्षः । वाचमात्मीयाम् । मे वचोभिरित्यनेन वचसां माधुर्यादि द्योत्यते । वाचं, वचोभिरित्येकत्वं बहुत्वं च विवक्षितम् । मया भङ्ग्या बहुषु वचनेषु कथितेष्वपीयं किंचिन्न प्रतिवक्तीत्यर्थः । नन्वेतदनास्थया किमित्यत्राह यद्यपीति । इदमर्द्धाङ्गीकारे । अप्रतिवचनमङ्गीक्रियते, तस्यानास्थाहेतुकत्वं तु नेति

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यभिमुखं मयि भाषमाणे ।
कामं न तिष्ठति मदाननसंमुखीना
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ २७ ॥

(आकाशे)

भो भोस्तपस्विनः! सन्निहितास्तपोवनसत्त्वरक्षायै भवत। भवतां प्रत्यासन्नः किल मृगयाविहारी दुष्यन्तः ॥

---

भावः । अत्र हेतुः कर्णमित्यादि । सावधाना मद्भाषणं शृणोतीत्यर्थः। अतो लज्जयैवाऽवचनमिति भावः । अनुभावान्तरमप्याह काममित्यादि । काममिति यद्यपीत्यस्य समानार्थकतयार्धाङ्गीकारे । संमुखीनाभिमुखी । संमुखी सेत्यपि पाठः । अन्यविषया मन्मुखव्यतिरिक्तविषया । न तु नैव । गूढा दृष्टिर्मन्मुखविषयैवेत्यर्थः । अतोऽनभिमुखास्थितिरपि लज्जयैवेति भावः । अत्र सम्भाषणे कर्णदानं दृष्टेरनन्यविषयकत्वं च शुश्रूषादिदृक्षाव्यञ्जके। ते च रागानुभावावित्यतो लब्धावकाशेति सम्बन्धः । अत्र नायिकागतयोर्लज्जौत्सुक्ययोः सन्धिर्नायकगता रतिश्च प्राधान्येन व्यज्यते । विलासो नाम स्त्रीणां भावश्च दर्शितः । अत्र प्राप्तिर्नामाङ्गमिति केचित् ॥

एवं नायकानुरागस्योत्कर्षं प्रदर्श्य नायिकानुरागस्यापि स्फुटं नायकस्वरूपपरिज्ञापनेन तं दर्शयितुं कृतकृत्यप्रायस्य नायकस्य गमनावकाशं सम्पादयितुं चारभत आकाश इत्यादि । किं ब्रवीष्येवमित्याद्याकाशभाषितलक्षणम् । नैपथ्य इत्यपि पाठः । भो भो इत्यादि सैनिकान् दृष्ट्वा केषांचित्तपोवनवासिनां वचनम् । सम्भ्रमे द्विरुक्तिः । संबुद्धिरवधानेन श्रोतव्यतां द्योतयति । सत्त्वानि जन्तूनि । यद्वा सत्त्वं सत्त्वगुणकार्यं धर्मः । सत्रेति पाठे याग इत्यर्थः । भवतां प्रत्यासन्न

तुरगखुरहतस्तथा हि रेणु-
र्विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥ २८ ॥

अपि च

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
पौढाकृष्टव्रततिवलयासङ्गसंजातपाशः ।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं व्रजति च गजः स्यन्दनालोकभीतः ॥ २९ ॥

---

इत्यनेन तत्सत्काराय यज्ञादिकार्याणामुपक्रमाय च सन्नद्धा भवतेति व्यज्यते । मृगयाविहारीति प्रत्यासत्तौ हेतुः । अनेनात्रापि धर्मपरत्वं ध्वन्यते । किलेति वार्तायां सम्भावने वा । प्रत्यासत्तिं समर्थयति तुरगेत्यादि । तुरगखुरैर्हतः हननेनोत्क्षिप्तः । रेणुः । जातावेकवचनम् । विटपेषु विषक्तानि शोषणार्थं निहितानि । अत्र हेतुर्जलार्द्राणीति, तृतीयसवनस्नानेन जलक्लिन्नानि वल्कलानि येष्वित्यनेन झटिति विटपेभ्यो वल्कलापसरणं क्रियतामिति द्योत्यते । परिणतेनास्तमयोन्मुखेनारुणेन सूर्येण, तत्प्रभयेत्यर्थः । प्रकाश उज्ज्वल इति शलभसाम्योपपादकम् । तापसानुभवसिद्धामुपमामाह शलभेति । शलभानां खद्योतानां समूहः । तादृशो रेणुः शलभसमूह इव तादृशेष्वाश्रमद्रुमेषु पततीति संबन्धः । अत्र खद्योतानां रात्रौ वृक्षेषु स्फुरणदर्शनात् सायं तत्पतनमस्तीत्येवमुक्तम् । उपमया रेणूनां सान्द्रत्वादिकं द्योत्यते । तेन सैन्यबाहुल्यं च । यद्वा जलार्द्रत्वेनेन पततां रेणूनां विलीनत्वं, तेन वल्कलानां लौहित्यातिशयं च व्यञ्जयता द्रुमाणामग्निसाम्यं ध्वन्यते । तेन शलभानां पतनहेतुर्द्रुमेष्वग्निभ्रमश्च । परिणतारुणस्य प्रकाशो यस्मिन्, अनेन, रेणूनां लौहित्यातिशयश्च व्यज्यते । शलभाः

पतङ्गाः । केचित्तु पतगसमूह इव स्थितो रेणुरिति सम्बन्धादनुवाद्योपमेत्याहुः । अत्रोपमया परिणतारुणेत्यनेन चाऽऽङ्कावसानप्रयोजकं दिनावसानमपि दर्शितमिति । अथ क्षणादेव दर्शनपथमागतां सेनां, तद्दर्शनेन भीतं कंचिद्वन्यगजं चाऽवलोक्य ससंभ्रममाह तीव्रेत्यादि । तीव्रेण गमनवेगवशादमन्देनाऽऽघातेन संघट्टनेन प्रतिहतास्तरवो येन, स चासौ स्कन्धे लग्नः पृष्ठभागावलोकनाय संसक्त एकदन्तो यस्य स च । अत्र स्कन्धो दन्तश्च दक्षिण इति पालकाप्यानुयायिनः । यद्वा तीव्रो य आघातः, मदेन भीत्या च दृढमूढत्वेनाहननं तेन प्रतिहतो भग्नः, पश्चात्तरुस्कन्धे तरोर्मध्यदेशे लग्नो दृढावगाढया समुद्धर्तुमशक्यत्वान्निलीन इत्यर्थः एकदन्तो यस्य । तीव्राघातप्रतिहतो यस्तरुस्कन्धस्तस्मिंस्तेन वा लग्न एकदन्तो यस्य तरुस्कन्धं भित्त्वैकस्मिन् दन्ते निक्षिप्यागच्छन्नित्यर्थ इति केचित् । प्रौढाः स्थूलायताः, अत एवाकृष्टाः पादाकृष्टाः, कचित्तथा पाठः, व्रततिवलया वर्तुलाकारा व्रतत्यस्तेषामासङ्गेन संजातः पाशः कण्ठादिस्थानरज्जुर्यस्य । भिन्न इतस्ततः पलायितः सारङ्गाणां हरिणानां यूथो येन । धर्मारण्यं तपोवनम् । व्रजति व्रजिष्यति । वर्तमानसामीप्ये भविष्यति लट् । एतेन प्रतिविधानावसरः सूच्यते । चो वाक्यार्थसमुच्चये । गजः अर्थाद्वन्यः । सेनागजस्य स्यन्दनभीरुत्वासंभवात् । एकवचनेन यूथात् स्वभावत एव पृथक्चारी केवलो नाग इति भट्टस्वामिवचनमनुस्मार्यते । अनेन तदविवेकस्य परा काष्ठा द्योत्यते । अत्राऽऽघातादिनिमित्तेन गजे मूर्तिमत्तपोविघ्नत्वमुत्प्रेक्ष्यते । उत्प्रेक्षया मुनीनां तत्तद्धर्मक्रियालोपस्याऽवश्यंभावो द्योत्यते । स्वभावोक्तिः, काव्यलिङ्गं च । किंचापगतैकदन्तत्वेनैकदन्तत्वात्, संजातपाशत्वात्, भिन्नसारङ्गयूथत्वाच्च विघ्नशब्दप्रयोगेण च गणाधिपवृत्तान्तः शब्दशक्त्या प्रकाश्यते । अत्र सारङ्गो भृङ्गः । 'सारङ्गः शबलो वर्णश्चातकः षट्पदो मृग' इति यादवः । मदजलपिपासासंभिन्नभ्रमरपटल

(सर्वाः कर्णं दत्वा किंचिदिव संभ्रान्ताः ।)

राजा—(आत्मगतम्) अहो धिक्, पौरा मदन्वेषिणस्तपोवनमुपरुन्धन्ति । भवतु । प्रतिगमिष्यामस्तावत् ॥

अन—अॅअ इमिणा आअण्णिदवुत्तन्तेण पॅआउळह्म । अणुजाणीहि णो उडजगमणाअ । (आर्यामुनाकर्णितवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि न उटजगमनाय)

---

इत्यर्थ इति । तथा रथालंम्बितं, पलायनाद्यनुभावितं, चापलावेगादिभिः संचारितं गजस्य भयं व्यज्यत इति भयानको रसश्च । अत्रादौ रेणुवर्णनं सेनागमनज्ञापनेनायं महाराज एवेति तासां बोधनाय । पुनर्गजागमनवर्णनं तासामपि गमनावसरसंपादनायेति ॥

किंचिदिवेति । संभ्रमस्य किंचित्त्वं महाराजसंनिधानात् । इवेति वाक्यालंकारे । तत्र श्रुत्वा तपोवनबाधामाशङ्क्याऽहाऽहो इत्यादि । अहो इति विषादे ; धिगिति निन्दायाम् । वक्ष्यमाणवाक्यार्थस्तत्कर्म । उपरुन्धन्ति पीडयन्तीति पूर्ववद्वद् । अथ तपःप्रतिरोधमाशङ्कमानो धार्मिको राजा किमत्र प्रतिविधेयमिति विचार्य निश्चिन्वन्नाह भवत्वित्यादि । प्रतिगमिष्यामः प्रतिगमने विलम्बो मा भूदिति भावः । अत एव संभ्रमद्योतकस्तावच्छब्दः । केचित्तु पौरागमने राजभावः प्रकटीभवेदिति विचिन्त्याऽह भवत्वित्यादि । तथा च तदागमनात् पूर्वमेव गन्तव्यमिति भाव इत्याहुः ॥

अॅअ इत्यादि । आकर्णितवृत्तान्तेन वनगजागमनलक्षणेन । पर्याकुला भीताः । अत आहानुजानीहीति । अत्र व्यङ्ग्यार्थस्तु, आकर्णितवृत्तान्तेन सैन्यागमनलक्षणेन पर्याकुला भवानद्य गमिष्यतीति भाविविरहवेदनापरवशाः । किं चाऽऽकर्णितवृत्तान्तेन भवान्महाराजो दुष्यन्त इति ज्ञापकेन वृत्तान्तेन पर्याकुलाः, लज्जया क्षणमपि

राजा — असंभ्रमं गच्छन्तु भवत्यः । वयमप्याश्रमबाधा यथा न भवति तथा प्रयतिष्यामहे ॥ (सर्वे उत्तिष्ठन्ति)

अन — अज्ज असंभाविदसक्कारं अदिहिविसेसं भूयोवि पेक्खणणिमित्तं उज्झामः । (आर्यासंभावितसत्कारमतिथिविशेषं भूयोऽपि प्रेक्षणनिमित्तमुज्झामः ॥)

---

पुरः स्थातुमशक्यात्वत्परवशा इति । राजा समुचितमुत्तरमाहासंभ्रममित्यादि । असंभ्रमं मत्सन्निधौ भयस्यानवकाशाद्भयं विनेत्यर्थः । अत्रापि व्यङ्ग्यार्थस्तु, वयमप्याश्रमिणां योगक्षेमचिन्ताव्याजेनात्रैव वसामः । न तु नगरं प्रति झटिति निवर्तामहे । अतो विरहव्याकुलतां परित्यज्य सुखेन गच्छन्त्विति । किं चाऽयं राजा वा न वा, अनुरक्तो वा न वा इति संभ्रममपहाय गच्छन्त्विति च । स्वकृत्यमाह वयमपीति । अत्राप्याश्रमेत्यनेनाश्रमवासिनीनां तासां विवक्षणायुष्मद्बाधा यथा न भवेत्तथा प्रयत्नं करिष्याम इति च द्योत्यते ॥

अथ वचनभङ्ग्या नायकमावर्जयन्ती गमनं निवेदयति अज्ज इत्यादि । असंभावितः, णिजन्तस्य भवतेः करोत्यर्थत्वादकृत इत्यर्थः। यद्वा असंभावितः परस्परसल्लापादिनानिरूपितः सत्कारोऽर्घानुपचारो यस्य । अथवा असंभावितः असत्कृतः, सत्कारस्तत्साधनं फलमूलादि यस्येत्यनेन कर्तव्यमूढतया विषादो द्योत्यते । प्रेक्षणमेव निमित्तं फलं यस्य तद्यथा तथा । भूयोऽपि भवद्दर्शनमुद्दिश्येत्यर्थः । उज्झामः, उज्झित्वा गच्छामः । अद्य गन्तव्यतया भवन्तं त्यक्त्वा गच्छामः, भूयोऽप्यागत्यातिथ्यं स्वीकर्तव्यमिति भावः । अत्रापि भवन्मनोरथानुरूपसत्काराकरणात्तत्स्वीकारायावश्यमागन्तव्यमिति द्योत्यते । प्रेक्षणेत्यत्र प्रोपसर्गेणेक्षणस्योत्कर्षबोधनेन पुनर्दर्शनमस्मदभीष्टसिध्या सफलं स्यादिति च । विषादो मा भूदित्याह मामेत्यादि । मा मेति

राजा—मा मैवम् । दर्शनेनैव भवतीनां सत्कृतोऽस्मि ।

शकु—(सव्याजं विलम्ब्य सखीभ्यां सह निष्क्रान्ता ।)

राजा—मन्दोत्सुकोऽस्मि नगरगमनं प्रति । यावदानुयात्रिकान् समेत्य नातिदूरे तपोवनस्य निवेशयेयम् । न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम् । मम हि ।

---

संभ्रमे द्विरुक्तिः । एवमित्यस्य वादीरिति शेषः । कुत इत्यत्राह दर्शनेनेत्यादि । अनेन तद्दर्शनस्य सर्वेन्द्रियतर्पणत्वं द्योत्यते । सव्याजमिति । व्याजप्रकारो 'दर्भाङ्कुरेण चरण' इत्यादिना वक्ष्यते । विलम्ब्य गमनमान्द्यमुत्पाद्य । निष्क्रान्ता दर्शनौत्सुक्याद् व्याजमुद्भाव्य प्रियदर्शनं प्रियं भूयो भूयः पश्यन्ती गतेत्यर्थः । अनेन नायिकागतस्यानुरागस्य परमकाष्ठा दर्शिता । मनःसङ्गरूपा द्वितीयावस्था च ॥

अथ तदानीं नायिकायाः स्वानुरागविशेषमवधार्य तस्यामत्यन्तासक्तो नायकः स्वावस्थां परामृशति मन्देत्यादिना । मन्दमुत्सुको मन्दोत्सुकः यद्वा बहुव्रीहिः उत्सुकशब्दश्च 'जडराशिरयं पयोनिधि'रित्यादौ जडादिशब्दवद्भाववचनः । मन्दोत्सुको न त्वनुत्सुक इत्यनेन नायकस्यान्तःपुरेषु दाक्षिण्यं प्रतीयते । मन्दोत्सुकोऽनुत्सुक इत्येव केचिद्व्याचक्षते । यावदिति । अत इत्यर्थात् । नातिदूर इति । यद्यतिदूरे तदा प्रभुत्वस्य शैथिल्यं स्यात, समीपे चेदाश्रमपीडा स्यादिति भावः । एवं विचिन्तयन् पुनर्गाढावगाढप्रेमप्रकर्षरूपामात्मनो वृत्तिमनुसंदधाति न खल्वित्यादि । यद्वा, एवं कर्तव्यं विचिन्त्य पुनस्तत्राप्यशक्तः सन्ननुसंदधाति न खल्वित्यादि । शकुन्तलायां यो व्यापारः अङ्गप्रत्यङ्गचङ्क्रमणलक्षणः । यद्वा षष्ठीतत्पुरुषः । अनुरागद्योतकः स्निग्धवीक्षणादिरित्यर्थः । निवर्तयितुं न शक्नोमीत्य-

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ ३० ॥

(निष्क्रान्तः)

प्रथमोऽङ्कः ॥

---

नेन विवर्तनाय बहुशो यत्नः क्रियत इति द्योत्यते । न खलु शक्नोमीत्युक्तमुपपादयति मम हि गच्छतीत्यादि । मम दृढचित्तस्यापि । हीति हेतौ । गच्छति चित्तव्याक्षेपादनिच्छया कथं कथमपि गच्छति । पुरः सेनासमीपं प्रति । चित्तव्याक्षेपमाह धावतीत्यादि । धावति निवर्त्यमानमपि निरर्गलं पलायते । पश्चाच्छकुन्तलां प्रति । धावने हेतुमाहासंस्तुतमिति । अपरिचितमित्यर्थः । अर्थात् प्रियतमाविरहे । यद्वासंस्तुतं तया सहापरिचितं, सर्वो हि तत्परिचये सति तदधीनो भवतीत्यनेन धावने कारणाभावो द्योत्यते । केचित्तु, असंस्तुतं तया सहापरिचितमिति हेतुगर्भम् । अनेन तस्याः स्निग्धवीक्षितादिकमनुरागजं वा नवेति ज्ञातुं तत्परिचयार्थमिव धावतीत्युत्प्रेक्षा ध्वन्यत इत्याहुः । परे तु असंस्तुतमिवेति गम्योत्प्रेक्षा, चिरपरिचितमपि मां त्यक्त्वा मया सहापरिचितमिव धावतीत्यर्थ इत्याहुः । असंस्कृतमिति पाठे शास्त्रसंस्कारविरहान्मन्थरविवेकमित्यर्थः । अनेन लज्जाधैर्यविनयाद्यभावो व्यज्यते । अथोक्तार्थे स्वानुभवसिद्धामुपमामाह चीनेत्यादि । चीनांशुकं चीनदेशीयपट्टवस्त्रं, तत्कृतपताकेत्यर्थः । चीनपदेनांशुकस्य लाघवस्वच्छत्वादयो गुणा द्योत्यन्ते । केतोः रथस्थापितध्वजस्य । इन्द्रध्वजस्येति केचित् । प्रतिवातं प्रतिकूलवातमिति क्रियाविशेषणम् । अकाण्डविजृम्भितेन प्रतिवातेनेवातर्कितोपनतेन तदाभिलाषेण पुनःपुनः प्रेर्यमाणं ध्वजदुकूलमिव मदीयं चेतः पश्चाद्धावति, शरीरं च ध्वजवत्

पुरो मन्दं गच्छतीत्यर्थः । उपमया चतसो विनयधैर्यादिभिरनिवार्यत्वं ध्वन्यते । चीनांशुकसाम्याल्लाघवचाञ्चल्याद्यतिशयश्च । ध्वजोपमया शरीरस्य हृदयशून्यत्वात् परेण नीयमानकाष्ठतुल्यता चेति । अत्र गच्छति इति शरीरमिति शकुन्तलालिङ्गनाद्यसंभवाद्भाग्यहीनमिति शरीरं प्रति जुगुप्सा व्यज्यत इत्यादि श्रीनिवासीये । अत्र न खल्वित्याद्येतदन्तेन नायकानुरागस्याप्युत्कर्षो दर्शितः । मनःसङ्गरूपद्वितीयावस्थाप्रवेशश्च । अत्र वा बीजस्य पुनरावर्तनात्समाधानं नामाङ्गम् । उत्तराङ्कप्रस्तूयमानविप्रलम्भस्यारम्भणात् करणं नामाङ्गं च । किं च भो भो इत्यादिना नायकयोरन्योन्यदर्शनादिव्यापारस्य विच्छेदे सत्यनेन दर्शितश्चित्तासङ्गो बिन्दुः । तल्लक्षणं दशरूपके । 'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारण'मिति । "बीजत्वाद्बीजमादौ स्यात्फलत्वात्फलमन्ततः । तयोः सन्धानहेतुत्वान्मध्ये बिन्दुं मुहुः क्षिपेदि"त्याद्यन्यत्र । द्वितीयाद्यङ्केषु प्रतिमुखादयः सन्धयः, तदङ्गानि विलासादीनि च स्वयमूह्यानि । विस्तरभयान्न वक्ष्यन्ते । प्रथमोऽङ्क इति । 'अङ्क इति रूढिशब्दो भावैश्च रसैश्च चिह्नयत्यर्थान् । नानाविधानयुक्तान् यस्मात्तस्माद्भवेदङ्कः । यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः । किंचिदवलग्नबिन्दुः सोऽङ्क' इत्यादि तल्लक्षणम् । अन्यत्स्वयमूह्यं सहृदयैरिति सर्वं शिवम् ॥

इति सारार्थदीपिकायां प्रथमोऽङ्कः ।



# द्वितीयोऽङ्कः ॥

(ततः प्रविशति विदूषकः)

विदू—(विनिश्वस्य) भो दिढं ह्मि एदस्स मिअआसीळस्स रण्णो-वअस्सभावेण णिव्वुण्णो । (भो दृढमस्म्येतस्य मृगयाशील-स्य राज्ञो वयस्यभावेन निर्विण्णः)

---

एवं पूर्वाङ्के नायकयोर्दैवादेव विलोकनेन रतेरुद्बोधमाभिमुख्य-सल्लापादिना तस्याः क्रमेण पुष्टिं, 'न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते' इति नायकयोरन्ततो वियोगं चोपवर्ण्य द्वितीयेऽस्मिन्नङ्के नायकस्य रतेश्चिन्ताविषादादिभिर्व्यभिचारिभिर्गुणकीर्तनादिभिरनुभावैश्च परिपोषप्रदर्शनेन विप्रलम्भं वर्णयिष्यंस्तदुपयोगाय, तथा शृङ्गाराद्धि भवेद्धास' इति हास्यसमुद्भावनाय, वृत्तवर्तिष्यमाणानां वृत्तान्तानां संघटनाय चानुयात्रिकाभिनयेन सूचितस्य शृङ्गारे नायकसहायस्य विदूषकस्य प्रवेशमाह तत इति । विश्वं विमृश्य दूषयतीति विदूषकः । 'कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः' ॥ इत्यादि तल्लक्षणम् । अत्रास्य वृत्तं पताका । दूरानुबन्धित्वात् । तदुक्तं सानुबन्धं पताकाख्यमिति । अस्य चेष्टावचनादौ प्रायो हास्यो रसः, प्राकृतं पाठ्यमिति बोध्यम् । विनिश्वस्येति । निश्वासश्चिन्तानिर्वेदयोरनुभावः । अथ प्राप्तोपकार्यं वयस्यं निशायामवसरे संसेव्य प्रभाते मृगयासंभावनया त्वरितं तत्समीपमुपसर्पन् विषण्णो नर्मसचिवो मार्गमध्ये स्वीयां दुरवस्थां स्वयमनुसंदधाति भो इत्यादि । भो इति चिन्तायाम् । यथोक्तं, 'प्रमोदभयचिन्तासु विषादे च निरूपणे । भो' इति ।

अअं मिओ अअं वराहो अअं सद्दूलोत्ति मज्झंदिणे वि गिह्मविरळपाअवच्छाआसु वणराईसु आहिंडीअदि । पत्तसंकरकसा आणि कदुह्णाणि गिरिणईजळानि पीअंति ।

---

चिन्ताच निर्वेदस्य तद्धेतोर्दुःखस्य चानुभवरूपा । किं कुर्वे क गच्छा-मीत्यादितःमूलोन्मूलनप्रकारविषयिका । भो इत्यनेन दैवं संबोधयति च । चिन्ताहेतुमाह दृढमित्यादि । मृगयाशीलस्येति हेतुगर्भम् । राज्ञ इति तदनुमतिं विना स्वस्य गृहगमनादिकमनुचितमिति द्योतयति । निर्विण्णः । निर्वेदः स्वावमानना । सा चात्र दुःखजेति दुःखमप्यनेन द्योत्यते । वयस्यभावेन निर्विण्ण इत्यनेन तं प्रति निन्दा च ॥

अथ राज्ञो मृगयाशीलत्वं विवृण्वन्निर्वेदहेतुभूतस्य स्वस्य दुःखस्य स्वरूपं दर्शयति अअं इत्यादि । अयमित्यादिवाक्यत्रये क्रमो विवक्षितः । मृगादेर्निष्क्रमणस्य दर्शनस्य च क्रमभावित्वात् । इति इत्युक्त्वा । मध्यंदिनेऽपि किमुतान्यदेत्यापिशब्देन द्योत्यते । ग्रीष्मेण विरलाः पचेलिमपत्रापगमादल्पाः पादपच्छाया यासु । अनेन पादपमूलेष्वपि श्रमविनोदनस्य दुष्करत्वं, मृगदर्शनस्य सौलभ्येन राज्ञो मृगयाभिरतेरतिशयश्च सूच्यते । वनराजिषु वनपदेन कण्टकादि-बाहुल्याद्दुस्सञ्चरत्वं राजिष्वित्यनेन मृगयाया निरर्गलत्वं च । आहिण्ड्यते अत्यर्थं गम्यते । राज्ञेति विपरिणामेनानुषङ्गः । अनेन स्वस्याप्याहिण्डनं दर्शितम् । एवमुत्तरत्रापि । अत्र मध्यंदिनेऽपीत्यनेन कालतो ग्रीष्मेत्यादिना देशत आहिण्ड्यत इत्यनेनावस्थातश्चातपपीडा द्योत्यते । तया क्षुत्पिपासे च । अथ यथावत्तत्प्रतीकाराभावमाह पत्रेत्यादिना । कदुष्णानि ईषदुष्णानि । गिरिपदेन जलस्याविलत्वं, तेन पत्रेत्यादिविशेषणाभ्यां च पानायोग्यत्वं जलानां द्योत्यते । पानीयं प्राणिनां प्राणा इति प्राधान्यादादौ पानवैकल्यमु-

अणिअदवेळं सुळ्ळमंसभूइट्ठं आहारं अह्णीअदि । तुरआणुधावणकंटइदसन्थिणो रत्तिं विमे णिकामं सइदव्वं णत्ति । तदो महंते पच्चूसे एव्व दासीआ उत्तेहिं सुगणिळुद्धएहिं वणग्गहणकोळाहळेण पडिबोधिदोह्मि ॥ (अयं मृगोऽयं, वराहोऽयं शार्दूल इति मध्यंदिनेऽपि ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्ड्यते । पत्रसंकरकषायाणि कदुष्णानि गिरिनदीजलानि पीयन्ते । अनियतवेलं शूल्यमांसभूयिष्ठ आहारोऽश्यते । तुरगानुधावनकण्टकितसक्थस्य रात्रावपि मे निकामं शयितव्यं नास्ति । ततो महति प्रत्यूष एव दास्याः पुत्रैः श्वगणिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि)

---

क्त्वाशनस्यापि तत्साम्यमाहानियतेत्यादि । अनियतवेलमकाल इत्यर्थः । शूल्यं कालक्षेपासहिष्णुत्वाच्छूले पच्यमानम् । आहारमिति प्राकृते पुंनपुंसकयोरनियमात् । अश्यत इति । यथोक्तमारण्यपर्वणि । “रुरून् कृष्णमृगांश्चैव मेध्यानन्यान् वनेचरान् । उन्मथ्य विविधैर्बाणैर्ब्राह्मणेभ्यो न्यवेदय”न्निति । “ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्बाणैर्महारथाः । निघ्नन्तो भरतश्रेष्ठा मेध्यान् बहुविधान् मृगा”-निति च । अथ शरीरस्थितेर्मुख्यहेतुर्निद्रापि तत्सहोदरीत्याह तुरगेत्यादि । तुरगो राजाधिरूढोऽश्वः । तुरं गच्छतीत्यन्वर्थम् । कण्टकिते संजातकण्टके, कण्टकाविद्धे इति यावत्, सक्थिनी ऊरू यस्य । बहुव्रीहौ सक्थ्यक्ष्णोरिति समासान्तः । यद्वा कण्टकपदेन पीडा लक्ष्यते । दुःखातिशयकारित्वं व्यङ्ग्यम् । इदं नास्तीत्यत्र हेतुः । शयितव्यं स्वास्थ्यहेतुः स्वापः । निकामं पर्याप्तं नास्तीत्यनेनान्त्ययामे किंचित्तल्लाभो द्योत्यते । तदा च महान् प्रतिबन्ध इत्याह तत इत्यादि । ततः कथंचिन्निद्राप्राप्तेरनन्तरम् । महति प्रत्यूषे सूर्योदयात् प्राङ्नाडीचतुष्टयात्मकः कालः प्रत्यूषः तस्य महत्त्वं दीर्घत्वं प्रत्यूषारम्भ इत्यर्थः । दास्याः पुत्रैरिति निन्दागर्भम् । पुत्रेऽ

एदावदा वि दाव पीडा ण णिक्कमइ । तदो गंडस्स उवरि पिडआ संवुत्ता । हिओ किल अह्मेसु अवहीणेसु तत्तहोदो मिआणुसारेण अस्समपदं पविट्ठस्स सउंदला णाम तापसकण्णआ मम उ-

---

न्यतरस्यामित्यलुक् । श्वगण एषामस्तीति श्वगणिनस्ते लुब्धका मृगयासहायाः किरातास्तैः । वनग्रहणं मृगयाङ्गं पूर्वं वनशोधनम् । यदुक्तं कौटल्येन "लुब्धकैः श्वगणिभिरपास्तस्तेनव्यालपरबाधं चललक्षपरिचयार्थं च मृगयारण्यं गच्छे"दिति । तत्कोलाहलेन प्रतिबोधित इति । अनेन लुब्धकान् प्रत्यसूया द्योत्यते । अत्रायं मृग इत्यादिना स्वैरसंचारस्य स्वादुजलपानस्य कालप्राप्तमृष्टान्नभोजनस्य सुखशयनस्य च वैकल्यमुक्तम् । तद् दुःखद्वारा निर्वेदस्य हेतुः । तत्र च वयस्यभाव इति । येषां च वैकल्यमुक्तं तेष्वस्यौत्सुक्यं गम्यत इति तत्स्वभावोऽपि प्रदर्शितः ॥

अथ महद् दुःखान्तरमपि मनसि निधायाहैदावदेत्यादि । एतावतापि तावत् उक्तदुःखानुभवेनैव । पीडा दुःखानुभवः । न निष्क्रामति निर्गच्छति पर्यवस्यतीति यावत् । इतः परं दुःखान्तरानुभवोऽस्तीत्यर्थः । ततः सतो दुःखस्योपरि महतो दुःखान्तरस्यापतनादित्यर्थः । गण्डो रोगविशेषः । पिटका विस्फोटः । गण्डः क्षुद्रव्रणः पिटका महाव्रण इति केचित् । यन्मे सतो दुःखस्योपरि दुःखान्तरमापतितं तद्गण्डस्योपरि पिटकेवात्यन्तदुःसहमित्यर्थः । अत्र निदर्शना । यद्वा एतावतापि तावत् पीडा उक्तहेतुजन्यपीडैव । ततः तदेत्यर्थः । गण्डस्येत्याद्यप्रस्तुतप्रशंसा । एतद्दुःखोपरि दुःखान्तरमापतितमिति भावः । दुःखान्तरं किमित्यत्राह ह्य इत्यादि । ह्यः पूर्वदिवसे । किलेति वार्तायाम् । राजमुखात्तदासन्नपरिजनमुखाद्वा श्रुतमित्यर्थः । अस्मास्ववहीनेषु विप्रकृष्टेषु । अनेन स्वयं चेत्तदा त-

दरस्स अधण्णदाए दंसिदा । संपदं णअरगमणस्स कहं वि ण करेइ ॥ (एतावतापि तावत् पीडा न निष्क्रामति । ततो गण्डस्योपरि पिटका संवृत्ता । ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य शकुन्तला नाम तापसकन्यका ममोदरस्याधन्यतया दर्शिता । साम्प्रतं नगरगमनस्य कथामपि न करोति)

अज्जवि से तं एव्व चिंतअंतस्स पभादं अच्छीसु। का गई। जाव किदाआरपाडिकम्मं वअस्सं पेक्खामि । (अद्याप्यस्य तामेव

---

रसान्निधौ तर्हि सर्वमुपायेन परिहर्तुं शक्यमिति द्योत्यते । अस्मास्विति बहुवचनेन स्वनैपुण्यं च । तत्रभवत इति प्रशंसागर्भमनुचितस्थले तन्मनःप्रवृत्तिरदृष्टपूर्वेति द्योतयति । मृगेत्यादिनाश्रमप्रवेशस्यानुषङ्गिकत्वं तेनास्यानर्थस्य पूर्वमविचारितत्वं च द्योत्यते । तापसकन्यकेति निन्दागर्भं जन्मतो रूपतो वेषतश्चायोग्यत्वं ध्वनति । अत्र राजकर्तृकदर्शने स्वोदराधन्यतायाः प्रयोजकत्वोक्तिः किमपि चारुत्वमावहति । अनेन निर्वेदस्वरूपभूतस्वात्मानं स्वस्य दैववैपरीत्यं च द्योत्यते । अथ तद्दर्शनस्य पीडाहेतुत्वमुपपादयति साम्प्रतमित्यादि । कथामपीत्यपिशब्देन किमुत गमनमिति द्योत्यते । पूर्वं मत्प्रीतयेऽपि कदाचिन्नगरगमनकथामकरोदिदानीं तदप्यस्तमितमित्यर्थः । न करोतीत्यत्र तत्रभवानिति विपरिणामेनानुषङ्गः ॥

उक्तार्थे हेतुमाहाज्जवीत्यादि । अद्यापि वनग्रहणकोलाहलश्रवणेऽपि यद्वा तद्दर्शनदिनेऽपि । अपिशब्दोऽद्भुतं द्योतयति । अस्य राज्ञः । तामेव तापसकन्यकामेव न तु मृगयां नगरगमनादिकं वा चिन्तयत इति हेतुगर्भम् । अक्ष्णोः प्रभातमासीदिति शेषः । यद्वा, अक्ष्णोरिति विषयसप्तमी । रजन्येति शेषः । प्रभातं प्रभया

चिन्तयतः प्रभातमक्ष्णोः । का गतिः ? यावत् कृताचारप्रातिकर्माणं वयस्यं पश्यामि) (परितो विलोक्य) एसो बाणासणहत्थाहिं जवणिआहिं परिवुदो वणपुप्फमाळाधारिणीहिं इदो एव्व आअच्छदि व-

---

प्रादुर्भूतम् । तच्चिन्तया निद्रां विना रजनिरतीतेति भावः । यथानर्घराघवे 'विक् चिन्तया रजनिरक्षिषु न प्रभाते'ति । अत्र मृगयातः प्रभृति नायिकादर्शनपर्यन्तमतीतं वृत्तं दर्शितम् । तदङ्गतया ग्रीष्मऋध्याह्नादि वर्णितम् । तामेवेत्यादिना नायकस्य संकल्पजागरूपे कामावस्थे च दर्शिते । चिन्तयत इत्यनेन भावी कथाभागश्च सूच्यते । एवं दुःखहेतुं विमृश्य पुनरपि तन्निवृत्त्युपायं चिन्तयति का गतिरिति । केति चिन्तायाम् । गतिरुपायः । मम दुःखोन्मूलने क उपाय इत्यर्थः । केचित्तु किंशब्दः क्षेपे न कापीत्यर्थः । तदद्य दुःखमेतत्सह्यमिति भावः, अत्र भो इत्युपक्रान्तचिन्ताया विरतिरित्याहुः । अथ गत्यभावात्तदानीमवश्यानुष्ठेयमनुसंधायाह यावदित्यादि । यावदद्य । तिष्ठत्वेतदन्यत् कर्तव्यमस्तीत्यर्थः । तदाह कृतेत्यादि । यद्वा यावत् पश्यामीति संबन्धः । परे तु का गतिरित्यादि । गतिः शरणम् । का न किमपि । एनं विसृज्य स्वैरगमने ममकोऽपि शरणं न भविष्यतीत्यर्थः । तदेनमनुसरामीति भावः । तदाह यावदित्यादीत्याहुः । आचारः सन्ध्योपासनादिः । प्रतिकर्म तत्कालोचितं मण्डनम् । 'प्रतिकर्म प्रसाधन'मित्यमरः । कृतेत्यादिना सेवावसरोऽयमिति सूच्यते । वयस्यमित्यनेनावश्यसेव्यत्वं च । एष इत्यादि । बाणेत्यादिविशेषणाभ्यां यवनिकानां मृगयोद्यमो द्योत्यते । यवनिकाः पुरुषायमाणा मृगयाकुशला वनचारिणः स्त्रीविशेषाः । अथ प्रत्युत्पन्नमतिर्निर्लक्षचिरो विश्रमलाभे कमप्युपायं पश्यन्नाह भवत्वित्यादि । सर्वाण्यङ्गान्यङ्गमात्रं तस्मिन् । 'मात्रं कार्त्स्न्येऽवधार-

अस्सो । होदु । अंगमत्तविअळो णाम भविअ चिट्ठिस्सं । जइ एव्वंपि णाम विस्समं ळहेयं । (एष बाणासनहस्ताभिर्यवनिकाभिः परिवृतो वनपुष्पमालाधारिणीभिरित एवागच्छति वयस्यः । भवतु । अङ्गमात्रविकलो नाम भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रमं लभेय ।) (इति दण्डकाष्ठमवलम्ब्य स्थितः)

(इति विष्कम्भकः)

---

ण' इत्यमरः । विकलः पीडितः नामेति व्याजे संभावनायां वा । पश्यतां यथा सर्वाङ्गपीडासंभावना स्यात्तथेत्यर्थः । ततः किमित्यत्राह यद्वीत्यादि । एवं यदि सर्वाङ्गपीडामभिनीय स्थितं चेत् । लभेयेति संभावनायां लिङ् । अपि नामेत्यपि तद्द्योतकम् । दैवप्रार्थनायां वा तत् । अनेन पूर्वमुपक्रान्तायाश्चिन्ताया अनुवृत्तिर्दर्शिता । दण्डकाष्ठमवलम्ब्य स्थित इति । न तु तत्समीपपर्यन्तमपि गतवानिति भावः । एतदस्वास्थ्यद्योतकम् । अनेन तस्य हास्यकारित्वस्वभावोऽपि दर्शितः । एवमवस्थानं मृगयोपसंहारे कारणमपीति स्फुटीभविष्यति । इति प्रवेशक इति क्वचित् पाठः । 'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भ' इति, 'तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः । प्रवेशोऽङ्कद्वयस्यान्ते' इति च दशरूपके । अत्रानेन प्रकरणेन 'सेवाधर्मः परमगहनो योगिनामप्यगम्य' इति राजसेवाया दुष्करत्वं राज्ञां च मृगयावनितादिसक्तानां दिवसवृत्तिषु सुखदुःखगणनाभावस्तत्सेवकैश्च शीतोष्णादिद्वन्द्वसहैर्भवितव्यमन्यथा सर्वानर्थहेतुस्तत्परित्यागः स्यादित्याद्युपदेशः कविपरमेश्वरेण प्रदर्शितः । एवमन्यत्राप्यूह्यमिति सर्वं सुस्थम् ॥

(ततः प्रविशति यथानिर्दिष्टपरिवारो राजा)

राजा-- कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १ ॥

---

अथ विधिवैभवेन विलोचनपदवीमवतीर्णायां तथाविधायां नायिकायां विरहासहिष्णुतया कथंकथमप्यपदेशेनाश्रमं प्रतिनिवृत्तायां नायकस्तामेव मनसि निधायानुयात्रिकैः संगम्य प्राप्तोपकार्यो विषयान्तरवैमुख्यात् कथमपि यामिनीमतिवाह्य प्रभाते कृतनियमो विरहोत्थां स्वावस्थां परामृशन्नाह कामभित्यादि । अनेन न खलु शक्नोमीत्यादि पूर्वोक्तमनुसंहितम् । प्रिया न सुलभा काममिति संबन्धः । प्रीणातीति प्रियेत्यन्वर्थमसुलभत्वेन विषादे हेतुः । अनेन पूर्वानुभूतनिरतिशयानन्दस्मृतिर्व्यज्यते । यथा मालत्यां 'यद्विस्मयास्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवासीदि'त्यादि । न सुलभा प्रदानस्य गुर्वधीनत्वाद्, गुरोरसंनिधानाद्, बलादपहारस्यायुक्तत्वात्, तस्या गूढसमागमे वैयात्याभावाच्च न सुष्ठु लब्धुं शक्येत्यर्थः । दुर्लभा, असुलभेति वानुक्त्वा न सुलभेति प्रसज्यप्रतिषेधोक्तिर्निषेधप्राधान्यबोधनार्था । अनेन वाक्येन विषादो व्यज्यते । काममिष्टकामानुमतौ । अनेन च प्रियाया अलाभेन लाभोपायादर्शनेन च यो विषादः स मामत्यन्तं न बाधत इति द्योत्यते । अत्र हेतुमाह मनस्त्वित्यादि । मन इत्यन्वर्थम् । तुशब्दो विशेषे । तद्भावस्य तस्या यो भावो मद्विषयोऽनुरागस्तस्य दर्शनेनानुभावैरनुमानेन, यद्वा तस्या ये भावाः स्निग्धकटाक्षविक्षेपमन्दगमनादयो रागानुभावाश्चेष्टाविशेषास्तेषां दर्शनेन 'स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु' इति न्यायात्, आश्वासि सहर्षम् । अत्रासुलभत्वेऽपि तद्भावदर्शनाश्वासो भवतीति लोकप्रसिद्ध्या समर्थ्यतेऽकृतार्थ इत्यादि । अकृ-

तार्थेऽपि सामग्रीसंपादनद्वारा स्त्रीपुंसयोः संयोजनं हि कामस्यार्थः तदकरणादकृतकृत्ये सत्यपि । एतेन कामस्य संयोजनार्थं उत्साहो व्यज्यते । तेन तन्निमित्ता पीडा च । अपीति विरोधे रतेः कारणाभावं दर्शयति । मनसिज इत्यन्वर्थं दुर्निवारत्वं द्योतयति । रतिं प्रीतिम् । उभयोः स्त्रीपुरुषयोः । प्रार्थनानुरागः । कुरुते जनयति । अजातसंगमयोस्तदुपायादर्शनेन निराशयोरपि स्त्रीपुरुषयोरितरेतरानुरागचर्वणं चेतसि कमपि प्रमोदमुल्लासयतीत्यर्थः । यथा मालविकाग्निमित्रे 'अनातुरोत्कण्ठितयोः प्रसिध्यता समागमेनापि रतिर्न मां प्रति । परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयो'रिति । अत्रार्थान्तरन्यासः । मनसिजकृतार्थतारूपहेतुवैकल्येऽपि रतिरूपकार्यवर्णनाद्विभावना च । विषादहर्षयोः संकरो मतिश्च भावः । परे तु हर्षमात्रे विश्रान्तिमाकलयन्त एवं व्याचक्षते । काममत्यर्थं प्रिया न सुलभेत्यनेन प्रियालाभोपायादर्शनेन विषादो व्यज्यते । पुनस्तल्लाभे कमप्युपायं पश्यन् विषादं परिहृत्य हृष्यन्नाह मनस्त्वित्यादि । आश्वासीति अनुरागस्य संगमे मुख्योपायत्वात्तद्ज्ञानेन सहर्षमित्यर्थः । अनुरागस्य तत्त्वं च 'इतरेतरानुरागो हि दारकर्मणि परार्ध्यं मङ्गल'मित्यादिकामन्दकीवचनादिना स्पष्टम् । ननु प्रियजनालाभे तल्लाभोपायदर्शनमात्रेण कथं हर्ष इति शङ्कां सामान्येन परिहरत्यकृतार्थ इत्यादि । अकृतार्थेऽपि मनसिजे संगमे अलब्धेऽपि । अयमर्थः स्त्रीपुंसयोः संगमालाभेऽपि परस्परानुरागरूपमुख्योपायलाभज्ञाने संगमोऽचिरेणैवावश्यंभावीति बुध्या हर्षो भवतीति । अत्र विषादशान्तिर्हर्षो मतिश्च भाव इति । अत्र विषादाद्युपस्कृता नायकालम्बिता जागराद्यनुभाविता रतिर्वियोगकालावच्छिन्ना व्यज्यत इति प्राधान्येन विप्रलम्भध्वनिः । अयं चोत्तरत्र समागमपर्यन्तः । अयमभिलाषाख्यो विप्रलम्भः । पूर्वानुरागाख्य इ-

(स्मितं कृत्वा) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते । तथा हि

स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत् किल मत्परायणमहो कामः स्वतां पश्यति ॥ २ ॥

---

ति केचित् । अयोगाख्य इत्यन्ये । प्रायोऽस्मिन्नेव चक्षुःप्रीत्याद्या अभिलाषाद्या वा कामावस्था वर्ण्यन्त इत्यादि बोध्यम् ॥

स्मितं कृत्वेति । 'ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः । अलक्षितद्विजं धीरमुत्तमानां स्मितं भवे'दिति लक्षितं स्मितमभिनीयेत्यर्थः । कामिस्वभावस्य लोकविलक्षणत्वाकलनेन विस्मयः स्मितहेतुः । अथैवमनुरागचर्वणेन क्षणमाश्वसन् पुनस्तत्रापायं चिन्तयन्नाहैवमित्यादि । एवं तद्भावदर्शनेत्याद्युक्तप्रकारेण । तस्या मय्यनुरागोऽस्तीत्येवंरूपेणेत्यर्थः । आत्मनः प्रार्थयितुर्योऽभिप्रायस्तेन न त्वव्यभिचारिणा हेत्वन्तरेण संभाविता कल्पिता इष्टस्य प्रार्थनाविषयस्य जनस्य चित्तवृत्तिर्येन स इति विडम्बनाहेतुः । प्रार्थयिता कामी । विडम्ब्यते परैः परिहस्यते । कर्मणि लट् । यद्वा कर्मकर्तरि । परिहासपात्रं भवतीत्यर्थः । यथा प्रमदानामधुना विडम्बना । 'अलंकरोति हि जरा नृपवैश्यद्विजन्मनः । विडम्बयति वेशस्त्रीमल्लचारणनर्तका'निति । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा । मदभिप्रायकल्पितशकुन्तलानुरागोऽहं परपरिहासपात्रमस्मीति भावः । नन्वव्यभिचारिभिरात्मपरायणस्निग्धवीक्षितादिभिस्तदनुरागस्यानुमातुं शक्यतया कथमात्माभिप्रायमात्रेण तत्संभावनमिति शङ्कां परिहर्तुं स्निग्धवीक्षितादीनामप्यात्माभिप्रायमात्रसंभावितत्वान्मत्परायणत्वं न घटत इत्याह

तथा हीत्यादि । तथा हि तेन प्रकारेण । तस्माद्धेतोरित्यर्थः । यथा रघौ 'ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि । तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा' इत्यत्र । स्निग्धवीक्षितादीनामपि मत्परायणत्वेनात्माभिप्रायमात्रसंभावितत्वादिति यावत् । अस्य सर्वं तत् किलेत्यत्र संबन्धः । स्निग्धमित्यादि । स्निग्धं तद्यस्य विषयस्तत्प्रभामिलितो भवेदिति दिवाकरः । स्निग्धं यथा तथा । वीक्षितं भावे क्तः । अनेनात्मनो न कर्मत्वमिति सूच्यते । अत एवाहान्यतोऽपीत्यादि । अन्यतः अन्यत्र तरुलतादौ । अपिशब्देन तन्मध्यपतिते मय्यपीति द्योत्यते । अत्र वीक्षणस्य स्वस्मिन् यादृच्छिकत्वं स्निग्धत्वस्य स्वाभाविकत्वं च दर्शितम् । रुव्याजं विलम्ब्य निष्क्रमेण यद्व्यावृत्य वीक्षितं तदनेनानुसंहितम् । वक्ष्यति च 'आसीद्विवृत्तवदने'त्यादि । तदा यन्मन्दगमनमासीत्तदनुसंधायाह यातमित्यादि । यातमित्यत्र पूर्ववत् क्तः । नितम्बयोर्गुरुतयेति । वस्तुतः स एव हेतुरित्यर्थः । नितम्बयोरिति द्विवचनं गौरवाधिक्यं द्योतयति । विलासादिति । यातमित्यनुषज्यते । इवेति साम्ये । विलासयानतुल्यमित्यर्थः । तद्वन्मनोहरमिति यावत् । यद्वा इवेति प्रतीतौ । विलासहेतुकमिति मद्भ्रान्तिरेवेत्यर्थः । मा गा इतीति । सहि ण जुत्तं गन्तुं इत्युक्त्वेत्यर्थः । उपरुद्धयेति हेतुगर्भम् । सासूयं भ्रूभङ्गसूचितासूयासहितम् । उक्ता किंणिमित्तमित्याद्युक्तेत्यर्थः । तथा वचनं तस्याः शृङ्गारलज्जया मत्पुरः स्थातुमशक्त्येति मत्प्रतीतिः । वस्तुतो गमनोपरोधादिति भावः । सर्वं तत् चाक्षुषकायिकवाचिकव्यापारात्मकं पूर्वोक्तमित्यर्थः । मयि परायणं तत्परं मदनुरागाविष्करणतत्परमित्यर्थः । वक्ष्यति च 'आविष्कृतो भावस्तत्रभवत्या मयी'ति । किलेत्यलीके । वार्तासंभाव्ययोः किल हेत्वरुच्योरलीके चेति हैमः । मत्परायणं नेति भावः । अत्र वीक्षितयातोक्तीनां स्निग्धत्वमान्द्यसासूयत्वानि मत्परायणत्वेन प्रतीतौ बीजानि । अयम-

र्थः । पूर्वं प्रस्थानकाले यत्तस्याः स्निग्धवीक्षितादिकमासीत्तत्सर्वं 'विलासिनीनां सहजा विलासास्त एव मूढस्य हृदि स्फुरन्ती'त्यादिनीत्या आत्माभिप्रायानुसारेण मत्परायणत्वेन कल्पितवानस्मि । वस्तुविमर्शे स्निग्धत्वमान्द्यसासूयत्वानां क्रमेण स्वभावनितम्बगौरवसखीनिरोधहेतुकत्वान्मत्परायणमित्येतदपरमार्थमिति । अथात्मनो मत्परायणत्वेन प्रतीतिं विस्मयमानः सामान्येन साधयत्यहो इत्यादि । अहो इत्यद्भुते । कामोऽभिलाषः । तत्पदेन तद्वान् लक्ष्यते । सर्वदा कामाधीनत्वं व्यङ्ग्यम् । कामीति पाठे भूमार्थे मतुप् । स्वतामात्मीयताम् । काम्यमानस्येत्यादिः । पश्यति जानाति । सर्वोऽपि कामी काम्यमानवनिताजनादिव्यापारामात्मपरायणत्वेन संभावयति एतदद्भुतमित्यर्थः । अत्रार्थान्तरन्यासः । कामिस्वभावोक्तिः । तयेत्यस्य वीक्षितादिनानाक्रियासंबन्धात् कारकदीपकं च । अत्रोदितस्य हर्षस्य शान्त्या विषादोऽभिनवीकृत इति प्राधान्येन विषादस्तथा चिन्तादयश्च व्यज्यन्त इति तदुपस्कृतस्य विप्रलम्भस्य परिपोषः । नायिकागता औत्सुक्यलज्जाविनयादयश्च गम्यन्ते । स्मितं कृत्वेत्यादेरन्यथा वा भावार्थः । तथा हि । स्मितं कृत्वेति वक्ष्यमाणविडम्बनाया हास्यप्रधानत्वाद्धासानुभावः याचकस्वभावं लौकिकं मनसा समालोच्य मन्दस्मितं कृतवानित्यर्थः । तत्स्वभावमाहैवमित्यादि । एवमित्यनेन स्निग्धं वीक्षितमित्यादि वक्ष्यमाणं परामृश्यते । इष्टजनस्य चित्तवृत्तिः तद्व्यञ्जिकाः स्निग्धवीक्षितादयश्चेष्टाः । एवमित्युक्तं विवृणोति तथा हीत्यादिना मत्परायणमित्यन्तेन । मत्परायणं मत्प्रणयहेतुकम् । किलेत्यलीके संभावनायां च । अलीकं मत्परायणत्वं तत्र तत्र संभावितवानित्यर्थः । अत एव स्मयमान आहाहो इति । अन्यथावस्थितं वस्त्वन्यथा संभाव्य कृतार्थोऽस्मीत्येतदद्भुतमित्यर्थः । अथ कामिजनसामान्यदृष्ट्या नैतदद्भुतमिति साधयति काम इत्यादि । अत्रैवमात्मेत्यादौ स्वस्यापि याचकजना-

विदू— (तथास्थित एव) भो वअस्स ण मे हत्थं पसरंति। वाआमत्तेण जइक्किअसि । (भो वयस्य! न मे हस्तौ प्रसरतः । वाङ्मात्रेण जयी क्रियसे ।)

राजा— कुतोऽयं गात्रोपघातः ।

विदू— कुदो इत्ति भणासि। सअं अच्छी आउळीकरिअ अस्सु-

---

न्तर्भूतत्वेन चापल्यं प्रतीयत इति प्राधान्येन चापल्यं तथा चिन्ताविषादादयश्च व्यज्यन्ते । शेषं पूर्ववदिति ॥

अथेत्थं परामृशतो नायकस्य नायिकावृत्तव्यवहाराद्यर्थमवसरे नर्मसचिवं संघटयति विदूषकस्तथास्थित इति । तथा स्थित एवेति मृगयोद्योगनिवर्तनाध्यवसायं सूचयति । भो वअस्स इत्यादि । विदूषकेण वक्तव्यो वयस्येति च भूपतिरित्युक्तेरेवं संबुद्धिः । तया च भवदायत्तमेव मत्सुखदुःखादीति द्योत्यते । स्वरविशेषेण पीडातिशयश्च । अत एव समुदाचारेऽप्यशक्ततां दर्शयन्नाह न म इति । वाङ्मात्रेण हस्तमुद्रां विना वाचैव । जयी जयशब्दवान् । क्रियसे जयेत्युच्यस इत्यर्थः । राजा तद्व्याजं जानन्नप्यजानन्निवानुयुङ्क्ते कुत इति । क्वचित्सस्मितमित्यपि पाठः तदाकारवैरूप्यदर्शनात्तत्कैतवावगमाद्वा स्मितम् । कुत इत्यनेन गात्रोपघातस्यासंभवो व्यज्यते । अथ तत्र गौरवप्रदर्शनाय गोपनं कुर्वाणो निर्वेदगर्भमाह कुदो इत्यादि । भणसीत्यत्र काका प्रश्नः । इदमनुचितमिति भावः । अत्र हेतुमाह स्वयमित्यादि । अत्र प्रस्तुते वर्ण्यप्रतिबिम्बार्थवर्णनाल्ललितालङ्कारः । त्वमेवामुं गात्रोपघातमुत्पाद्य तत्कारणं पृच्छसीत्यर्थः । यतस्त्वमेव हेतुस्ततस्तत्प्रश्नो नोचित इति भावः । अनेन त्वमपि मय्येवमाचरसि अहो ममाधन्यतेति निर्वेदो द्योत्यते । अ-

काळणं पुच्छासि । (कुत इति भणासि । स्वयमक्ष्याकुलीकृ-
त्याश्रुकारणं पृच्छासि ।)

राजा— न खल्ववगच्छामि ॥

विदू— जं वेदसो कुज्जलीळं विडंवेदि तं किं अत्तणो पहावेण उद णदीवेगस्स । (यद्वेतसः कुब्जलीलां विडम्बयति तत्किमात्मनः प्रभावेण उत नदीवेगस्य ।)

राजा— नदीवेगस्तत्र कारणम् ।

विदू— ममवि भवं एव्व । (ममापि भवानेव ।)

राजा— कथम् ॥

विदू— जेण तुए एव्वं राअकज्जाणि उज्झिअ तादिसे आउळप्पदेसे वणअरवुत्तिणा होदव्वं । जंसच्चं पच्चहं सावअसमु-

---

हो तव वैदग्ध्यमिति परिहासोक्तिरियमिति केचित् । पुनरप्यजानन्निवाह न खल्विति । अनया तत वक्रोक्त्या तद्धेतुमिति शेषः । यद्वा मया ते किं कृतमिति । खल्विति जिज्ञासायाम् । स्पष्टं कथयेति भावः ॥

पूर्ववत् पृच्छति जमित्यादि । कुब्जो वक्रस्तस्य लीलां क्रियाम् । विडम्बयति अनुकरोति । प्रह्वीभवनीत्यर्थः । नदीवेगस्येति । प्रभावेण किमित्यनुषज्यते । विदूषको हेतुं विवृणोति जेण इत्यादि । येन यस्मात् । त्वया महाराजेन भवता । एवं यथा मृगयातिसेवनेन स्वप्नेऽपि राजकार्यस्मृतिर्न भवेत्तथेत्यर्थः । राजकार्याणि प्रजानां विनयाधानादीनि । राजकार्याणीत्यनेन तेषामनुपेक्षणीयत्वं प्रतिक्षणं प्रत्यवेक्षणीयत्वमन्यदुर्वहत्वं च द्योत्यते । बहुवचनेन बहुविधत्वं च । तान्युज्झित्वेत्यनेन कर्तव्यमूढत्वं द्योत्यते । तदेव विश-

स्सारणेहिं संखोहिदसंधिबंधाणं गत्ताणं अणीसह्मि संवुत्तो । ता पसादइस्सं । विसज्जामं एकाहं वि दाव विस्समिदुं ॥ (येन त्वयैवं राजकार्याण्युज्झित्वा तादृशे आकुलप्रदेशे वनचरवृत्तिना भवितव्यम् । यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसन्धिबन्धानां गात्राणामनीशोऽस्मि संवृत्तः । तत्प्रसादयिष्यामि विसृज मामेकाहमपि तावद्विश्रमितुम् ।)

---

दीकुर्वन्नाह तादृश इत्यादि । तादृशे अनुभवैकवेद्यत्वाद्वक्तुमशक्ये । आकुलप्रदेशे दुस्सञ्चरविपिनस्थले । अनेन सुलभव्यसनत्वं सूच्यते । वनचरस्य वृत्तिरिव वृत्तिर्व्यापार आजीवो वा यस्य । एतेन देहपीडाया अप्यगणनं सूच्यते । भवितव्यमभूयत । भावे भूते तव्यप्रत्ययः । कृत्यप्रत्ययानां कालत्रये वर्तनात् । भवितव्यपदेन विधिवशादिदं तव जातमिति सूच्यते । यथा मालत्यां 'सर्वंकषा भगवती भवितव्यतैवे'ति । अनेन महाराजस्य तवात्यन्तमनुचितमेतदिति द्योत्यते । तेनातः परमपि झटिति मृगयां परित्यज्य नगरं प्रति गन्तव्यमिति च । अथाधुना नगरगमनाभावेऽपि मम कञ्चित् कालमपि विश्रान्तिमनुजानीहीति व्याजेनाङ्गीकृतमङ्गवैकल्यं हेतुत्वेन दर्शयन्नाह यत्सत्यमित्यादि । यत्सत्यमित्यव्ययं सत्यमेवेत्यर्थः । एतदनृतोक्तिशङ्कापरिहारार्थम् । प्रत्यहमिति मृगयायाश्चिरकालप्रवृद्धत्वं सूचयति । श्वापदा व्याघ्रादयो हिंस्रमृगाः तेषां समुत्सारणैरपसारणैः । संक्षोभिताः पूर्वं व्यायामराहित्याद् व्यथिताः सन्धिबन्धा ऊरुमूलादिस्थानानि येषाम् । गात्राणामवयवानाम् । प्रसादयिष्यामि । विसर्जनाय त्वां प्रीणयिष्यामीत्यनुमतिलाभाय नियोक्तिः । एकाहमपीति शिष्याणामनध्ययनदिनवदिति भावः । विश्रमितुं विसृजेति संबन्धः । विश्राममनुभावयितुमिति ण्यर्थान्तर्भावः अतो न-

राजा—(स्वगतम्) अयं चैवमाह । ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः । कुतः,

न नमयितुमधिज्यमस्मि शक्तो
धनुरिदमाहितसायकं मृगेषु ।

---

तुमुननुपपत्तिः । यद्वा न व्यर्थान्तर्भावः, प्रसादयिष्यामीत्यनेन संबन्धः ॥

तदाकर्ण्य चिन्तयन्नयं चेत्यादि । अयमित्यनेनार्थान्तरसंक्रमितेन तद्वचनस्याङ्गीकार्यत्वं सूच्यते । एवं मृगयातिप्रसङ्गस्तवानुचित इति । ममापीत्यपिशब्दश्चार्थे । अनुस्मृत्येति वैक्लव्ये हेतुः । विक्लवं शिथिलधैर्यम् । स्यादिति शेषः । मम चेतः प्रियानुस्मरणात् मृगयायां विक्लवं स्यादित्यर्थः । अयमेवमाह च मम चेतः काश्यपसुतामनुस्मृत्य मृगयाविक्लवमपीत्यन्वयः । गौपदेन मृगयोपसंहारस्य सौकर्यं द्योत्यते । अथ वैक्लव्यस्य कार्यमाह नेत्यादि । अधिज्यमित्यादिविशेषणाभ्यां मृगयासन्नाहो द्योत्यते । तथात्वेऽपीदं धनुर्मृगेषु सारङ्गेषु विषये नमयितुं न शक्त इत्यर्थः । अत्र धनुर्नमनाशक्तेर्मृगविशेषविषयत्वं तत्र काश्यपसुतानुस्मरणसद्भावात् । तत्र तत्सद्भावे हेतुमाह सहेत्यादि । उषित्वेति क्रियाविशेषणवाचिना तन्तात्पर्यं लक्ष्यते । कृत्वेत्यर्थः शिक्षोपदेशाय प्रियासन्निधौ चिरमुषितत्वेत्यर्थः । अनेन मुग्धविलोकनविद्याया गौरवाच्चिरशिक्षणीयत्वं द्योत्यते । यैर्मृगैः । बहुवचनं बहुभ्यः श्रोतव्यं बहुशः श्रोतव्यमिति न्यायात् । अनेन तत्तद्विशेषस्य सर्वत्रापि शिक्षा द्योत्यते । अनेन तद्विलोकनस्य लोकोत्तरत्वं च । प्रियायाः । शेषे षष्ठी । कृत इति भूतकालस्ययेनोपदेशस्य साफल्यं द्योत्यते । मुग्धेति निसर्ग-

सहवसतिमुपेत्य यैः प्रियायाः
कृत इव मुग्धविलोकितोपदेशः ॥ ३ ॥

---

सुन्दरेत्यर्थः । स्वभावालोकितं मुग्धं भावगर्भमपि छलादिति भावप्रकाशः । यद्वा यैः शिष्यैः । प्रियाया इति पञ्चमी । तत्सकाशादित्यर्थः । अत्रोत्प्रेक्षया तन्निमित्तं प्रियामृगविलोकितयोः सादृश्यं व्यज्यते । तेन मृगदर्शने भाविनी प्रियानुस्मृतिश्च । इति स्मृतिमदलङ्कारः । तथा प्रियाया मृगाणां च गुरुशिष्यभावसंबन्धादेते न वध्या इवेत्युत्प्रेक्षा च नमनाशक्तिहेतुर्ध्वन्यते । अत्र शिष्या मेधाविनयादिगुणशालिनश्चेद् गुरुणा स्वयमेव तैः सहोषित्वापि यथावद्विद्यामध्यापयितव्याः, येनात्मनः शिक्षा लोके प्रसिद्धा स्यादित्यर्थस्य समाधिः । यथा मालविकाग्निमित्रे । 'पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातु'रित्यादि । 'स्थाने सुशिष्यनिवहैर्विनियुज्यमाना विद्या गुरुं हि गुणवत्तरमातनोती'त्यादि मुरारिश्च इति केचित् । परे तु काश्यपसुतामिति तस्या दुर्लभत्वं द्योतयति । अत एवाहानुस्मृत्येति । पुनः पुनः स्मृत्वेत्यर्थ इति संकल्पस्य स्थायित्वं दर्शितम् । मृगयाविक्लवं मृगयायां निरुत्सुकं भवतीति शेषः । मृगयेति स्त्रीलिङ्गेनाननुभुक्तायां कस्यांश्चिदासक्तावुपभुक्तायां निरुत्सुकत्वस्यौचित्यं द्योत्यते । अथ दाक्षिण्येनापि मृगयाप्रवृत्तावशक्तिमाह नेत्यादि । अधिज्येत्यादिविशेषणाभ्यां तयोः शक्तिः स्यादिति द्योत्यते । अत्रोत्प्रेक्षायाः प्रियाविलोकितेषु मृगविलोकिततादृूप्यातिशयो निमित्तं लोकोत्तरमनोहरत्वं च व्यङ्ग्यमित्युत्प्रेक्षया तादृूप्यव्यञ्जनद्वारौपमानिकी प्रीतिर्द्योत्यते । मृगविलोकने प्रियाविलोकनमहोत्सवानुभवलाभान्न धनुर्नमने शक्तोऽस्मीति भाव इति वदन्ति ॥

विदू— (राज्ञो मुखं विलोक्य) अत्तभवं किंवि हिअए करिए मंतेदि। अरण्णे मए रुदिअं आसि । (अत्रभवान् किमपि हृदये कृत्वा मन्त्रयति । अरण्ये मया रुदितमासीत् । )

राजा— (सस्मितम्) किमन्यत्? अनतिक्रमणीयं सुहृद्वाक्यमिति स्थितोऽस्मि ।

विदू— चिरं जीव । (प्रस्थातुमिच्छति)

राजा - वयस्य! तिष्ठ सावशेषं मे वचः ।

---

राज्ञो मुखं विलोक्येति ; अनेन राज्ञः शकुन्तलागतमनस्कत्वादप्रतिवचनमिति तेन ज्ञातमिति गम्यते । सोपालम्भमाहात्तभवं इत्यादि । अनेन हृदयगतस्य वस्तुनो गोप्यत्वं हृद्यत्वं च द्योत्यते । अत इत्यर्थात् । अरण्य इत्यादि । मद्वचनमरण्यरोदनमिव व्यर्थमासीदित्यर्थः । चित्तव्याक्षेपात्मद्वचनं न शृणोषीत्युपालम्भः । सस्मितमिति स्मितेन हास्यसमुद्भावनया हृदिस्थमर्थं गोपायति ; अत एव किमन्यदिति गोपनपरम् । मन्त्रयामीति विपरिणामेनानुषङ्गः । किंशब्दः क्षेपे । त्वदुक्तमेव विचारितमिति भावः । तत्फलमाहान तीत्यादि । निषेधमुखेनोक्तिरातिक्रमणस्य दोषत्वं सूचयति । इति स्थितः एवं व्यवस्थां कृतवान निश्चितवानित्यर्थः । यद्वा इतीति हेतौ । स्थितः निर्व्यापारो मृगयोद्यमं परित्यज्य तूष्णीं तिष्ठन्नित्यर्थः । अनेनैतद्विचारादेव प्रतिवचने विलम्बोऽभूदिति द्योत्यते । अत्र सुहृद्वाक्यमित्यस्य विदूषकवाक्ये पर्यवसानात्सामान्यनिबन्धनाप्रस्तुतप्रशंसा । चिरञ्जीवेति विश्रमावसरलाभादाशीर्वचनं चापलसूचकं हास्याङ्गम् । प्रस्थातुमिच्छति आरभते मृगयानिवृत्तौ शीघ्रं हस्तिनापुरमेव गन्तव्यमिति । अनेन राज्ञो गूढं, रहस्यं प्रकाशयिष्यामीति स्ववैदग्ध्यं द्योत्यते । अत एव राजाह वयस्येत्यादि । केचित्तु राज्ञो

विदू — आणवेदु भवं । (आज्ञापयतु भवान् ।)

राजा — विश्रान्तेन भवता ममान्यस्मिन्ननायासे कर्मणि सहायेन भवितव्यम् ।

विदू— किं मोदअखंडिआअं । (किं मोदकखण्डिकायाम् ।)

राजा— यत्र वक्ष्यामि ।

विदू— गहिदो खणो । (गृहीतः क्षणः ।

---

मुखं विलोक्येति विलोकनमप्रतिवचनात् । स्मितमिति स्मितं सुहृत्सभीहितसम्मानपूर्वरङ्गः । अत एव तद्वाक्यमनुमोदमान आह किमन्यदित्यादीत्याहुः । वयस्येति संबुद्ध्या मच्चित्तानुवर्तनं त्वयापि कार्यमिति द्योत्यते । तिष्ठ शीघ्रं न पलायस्व । कुत इत्यत्राह सावशेषमिति । अवशेषमप्याकर्ण्य गच्छ मध्ये गमनमनुचितमिति भावः । अथ तदभिप्रायं जानन्नप्यजानन्निवावशिष्टं कुत्रापि कर्मण्याज्ञारूपमित्यभिनयन्नाहाणवेदु इति । पूर्वं हस्तिनापुरं गत्वा मया किं कर्तव्यं तदाज्ञापयत्वित्यर्थः । प्रियतमासमागमोपायचिन्तां मनसि कृत्वाह विश्रान्तेनेत्यादि । विश्रान्तेनापनीतमृगयापरिश्रमेण । ममेत्यवश्यकर्तव्यत्वं द्योतयति । अन्यस्मिन्मृगयाव्यतिरिक्ते । अनायास इति प्ररोचनार्थम् । अतोऽत्रैव कंचिद्विश्रम्य शीघ्रमागच्छेति भावः । अथ स्वाभिप्रायविरोधिनः शकुन्तलावृत्तान्तादिप्रसङ्गस्यावकाशमस्मै न प्रदास्यामीति निश्चित्य पूर्ववदजानन्निव हास्यप्रौढ्या पृच्छति किमिति । मोदकस्य खण्डिकायां खण्डने न तु तत्संपादनेऽपि तत्रायासादित्यनेन द्योत्यते । मया सहायेन भवितव्यमिति शेषः । वक्ष्यामीति लटा विवक्षितस्य गोप्यत्वाद्विजने वक्तव्यत्वं द्योत्यते । अथ गमनोत्कण्ठितोऽपि तत्प्रीतये तदनुवदति गहिद इति । क्षणः

राजा—कः कोऽत्र भोः ॥

(प्रविश्य)

दौवारिकः- आणवेदु भट्टो । (आज्ञापयतु भर्ता)

राजा—रैवतक! सेनापतिस्तावदाहूयताम् ॥

दौवा—तह । (तथा)

(निष्क्रम्य सेनापतिना सह प्रविश्य)

एसो अण्णावअणाक्कण्ठो इदो एव्व दिण्णदिट्ठी चिट्ठइ । उपसप्पदु अॅओ ॥ (एष आज्ञावचनोत्कण्ठ इत एव दत्तदृष्टिस्तिष्ठति । उपसर्पत्वार्यः ॥ )

---

निर्व्यापारस्थितिः । विश्रमावसरो वा । गृहीतः स्वीकृतः । यद्वा त्वद्भवनावसरः कालः । गृहीतः परिपालितः । निर्व्यापारास्थितौ कालविशेषोत्सवयोः क्षण इत्यमरः । अत्र वक्तृविशेषादनेन श्राद्धादिवन्निमन्त्रणस्य स्थिरतापि सूच्यते ॥

अथ प्रियतमावृत्तान्तप्रसङ्गौत्सुक्येन तद्देशस्य विविक्ततां संपादयितुमुपक्रमते क इत्यादि । कः क इति वीप्सा संभ्रमे । तेन विनोदनौत्सुक्यं गम्यते । भो इति सामान्येन परिजनं प्रति संबोधने । वर्तते स आगच्छत्विति च शेषः । प्रविश्येत्यपटाक्षेपेण प्रवेशं तेन संभ्रमं तेन स्वामिनि बहुमानं च द्योतयति ; द्वारे नियुक्तो दौवारिकः । आणवेदु भट्टो इति स्वामिभक्तितदाज्ञानुष्ठानौत्सुक्यादिद्योतकः समुदाचारः । रैवतकेति नाम । निष्क्रम्येत्याद्यविलम्बद्योतकम् । एसो इत्यादि । आज्ञारूपे वचने उत्कण्ठा त्वरा यस्य सः । अत्र लिङ्गमाहेत एव दत्तदृष्टिरिति । अनेन हृदयस्थस्य कार्यस्य गौरवं सूच्यते । "शीलवान् सत्त्वसंपन्नस्त्यक्तालस्यः प्रियंवदः । पररन्ध्रान्तराभिज्ञो यात्राकालविशेषवित् । अस्त्रशास्त्रादितत्त्वज्ञ" इत्यादि सेनापतिलक्षणम् ॥

सेना—(राजानं विलोक्य) दृष्टदोषा मृगया स्वामिनि केवलं गुण एव संवृत्ता। तथा हि देवः ॥

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु स्वेदलेशैरभिन्नम्।

---

अथ सेनापतिरपि मृगयायामनुत्सुकोऽपि स्वामिनः प्रीतये तस्यामुद्युक्तः समुपगम्य तदाकृतेर्विशेषं मृगयाप्रयुक्तमवलोकयन् सश्लाघहर्षं स्वयमाह दृष्टेत्यादि। दृष्टदोषा "स्त्रियोऽक्षा मृगया पान"मित्यादिना, न मृगयाभिरतिर्न दुरोदरमित्यादिना च शास्त्रेण, लोकतश्च दृष्टदोषेत्यर्थः। दृष्टदोषापीत्यपि पाठः। विशेषमाह स्वामिनीत्यादि। दोषोऽपि विषयभेदाद् गुणो भवतीति भावः। अदृष्टदोषा खलु स्वामिनि मृगया न केवलं गुण एव संवृत्ता इति पाठे स्वामिनि मृगया अदृष्टदोषा खलु केवलं न गुण एव संवृत्ता इति योजना मृगया स्वामिनि दोषं न करोतीत्येव न किन्तु गुणमप्यादधातीत्यर्थः। अत्र शकुन्तलालाभहेतुत्वाद् गुणः संवृत्तेत्यपिशब्दशक्त्या द्योत्यते। गुणत्वमुपपादयति देवः अनवरतेत्यादि। देव इति भृत्यानां राजानं प्रत्युक्तिर्नाट्याचारः। तत्राधमानां भर्तेति च। अनवरतं यद्धनुर्ज्याया आस्फालनं ताडनं तेन क्रूरा किणाङ्कितत्वेन कठिना पूर्वा प्रकोष्ठो यस्य तत्। पूर्वाशब्दः प्रकोष्ठवाचकत्वेन सुभद्राधनञ्जयेऽपि प्रयुक्तः। यथा "लोहस्येयानुपचितकिणश्चापमौर्वीविमर्दैः पूर्वाबन्धस्तदयमपरो वासुभद्रावतार" इति। क्रूरः घनः पूर्वः पूर्वकाय इति केचित्। अनेन मृगयाया अविश्रान्तिं सूचयता गात्रस्य जितश्रमत्वं सूच्यते। अत्र "ज्याबन्धनिष्पन्दभुजेने"त्यादिवज्ज्याशब्दमात्रे प्रयोक्तव्ये धनुःपदोपादानं सर्वदा तदारोपितत्वद्योतनाय। तदुक्तं काव्यप्रकाशे। 'कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः।

अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४ ॥

सेना — (उपगम्य) जयतु स्वामी । गृहीतश्वापदप्रचारमरण्यम् । किमद्याप्यवस्थीयते ॥

---

सन्निधानादिबोधार्थ'मिति । रविकिरणानां सहिष्णु अभ्यासबलात्सहनशीलम । यदुक्तं निषेव्यमाणं तिलशो विषमप्यमृतायत इति । अनेन ग्लान्यालस्याद्यभावो व्यज्यते । अत एव स्वेदलेशैरभिन्नमसंपृक्तम् । भिन्नं विदीर्णे संपृक्ते इति कोशः । अपचितं कृशम् । अपीति विरोधे । व्यायतत्वान्मृगयाव्यापाररूपव्यायामात् । व्यायतत्वादपचितमपीति संबन्धः । अलक्ष्यमपचितत्वेन लक्षयितुमशक्यम । वक्ष्यति च 'संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यत' इति । अनेन विभक्तघनगात्रत्वं दर्शितम् । अत्र स्वानुभूतामुपमामाह गिरीति । गिरिचरो नागो मदेन यूथाद् भ्रष्टः परिणतो गजः । प्राणेन बलेन सारं स्थिरम् । अनेनौजस्वित्वं सूच्यते । अत्र गजपक्षे धनुर्ज्यास्थानीयस्य दन्तद्वयस्यास्फालनं गिरितटाघातस्तेन क्रूरो भयंकरः पूर्वः पूर्वभागो यस्य तत् । धनुर्ज्यायां प्रियालद्रुमे । धनुर्ज्या स्यात् प्रियालद्राविति वैजयन्तीति केचित् । शेषं समानम् । अत्रोपमया राज्ञो जितश्रमत्वात्सर्वदाप्यनलसत्वमधृष्यत्वं मृगयायान्निर्गलव्यापारश्च द्योत्यन्ते । अत्रोक्तानां वपुर्गुणानामुत्थानोपयोगित्वान्मृगयाया गुणत्वम । अत्र हर्षाद्युपस्कृता राजविषयिका रतिः सेनापतिगता व्यज्यते । अत्र वपुरपचयः सेनापतिना मृगयाव्यापारेणोक्तः । स वस्तुतस्त्वौत्सुक्यादपीति केचित् ॥

उपगम्येति । आज्ञावचनोत्कण्ठत्वेन प्रतीत्या समीपं प्राप्येत्यर्थः । जयतीत्यादिचारः स्वागमनं सूचयति । अथ राज्ञो ह-

राजा—भग्नोत्साहः खलु कृतोऽस्मि मृगयापवादिना माढव्येन ॥

सेना—(जनान्तिकम्) सखे! स्थिरप्रतिबन्धो भव । अहं तावत्स्वामिनश्चित्तवृत्तिमनुसरिष्ये । (प्रकाशम्) प्रलपत्वेष वैधेयः । ननु प्रभुरेव निदर्शनम् ॥

---

दयमजानन्मृगयायां तं प्रोत्साहयति गृहीतेत्यादि । गृहीतः शोधितः श्वापदानां प्रचरत्यस्मिन्निति प्रचारो निलयः । यद्वा गृहीतो निरुद्धः प्रचारः सञ्चारो यत्र तदित्यनेनात्र देवस्य प्रवेशः प्राप्तकाल इति द्योत्यते । अनेन वनपरिग्रहो निवेदितः । वक्ष्यति च । पूर्वमतान् वनग्राहिण इति । किमिति प्रश्ने । अद्यापि वनग्रहणे कृतेऽपि । अनेनावस्थानस्यानौचित्यं सूच्यते । अवस्थीयते मृगयायान्निरुद्योगने सता तूष्णीं स्थीयते । त्वर्यतामिति भावः । अनेन पूर्वं मृगयासन्नाहे नियुक्तत्वात्तच्छेषतया साम्प्रतमपि स्वस्याह्वानमिति सेनापतेर्बुद्धिः प्रतीयते । अवस्थाने हेतुमाह भग्नेत्यादि । भग्नः स्रोतोवद्व्याहत उत्साहो यस्य । खल्वित्यवधारणे । कृत इति भूतनिर्देशेन निरवशेषं भग्नत्वं सूच्यते । मृगयापवादिनेत्यनेन युक्तिपूर्वकमेव प्रतिषेधवचनमिति तस्य प्रामाण्यम् । अनेनेत्यनुक्त्वा माढव्येनेति नामग्रहणेन गौरवं तेन तद्वचनस्य ग्राह्यत्वं च सूच्यते । अत्र शकुन्तलारागगोपनादवहित्थाख्यो भावो व्यज्यते ॥

तदाकर्ण्य हृष्यन् विदूषकमाह सख इत्यादि । आदरद्योतिकया संबुध्या त्वमिवाहमपि विश्रमोत्सुकः, ततस्त्वया रुध्ये न विरन्तव्यमिति प्रार्थना द्योत्यते । अद्य मदिष्टकरणात् सखित्वमुपपन्नमिति च । स्थिरप्रतिबन्धो भवेति । क्षणान्तरे चापल्यात् तद्बुद्धिं मानुसरेति भावः । स्वकृत्यमाहाहं त्विति । स्वामिन इत्यनेन चित्तवृत्तेरनुवर्तनीयत्वं द्योत्यते । अनुसरिष्य इति । भृत्य-

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ५॥

---

त्वादिति भावः। अनेन सेनापतिर्वस्तुतो मृगयाभिनिवेशमेव राज्ञो मन्यते, न तु विनोदनौत्सुक्यमिति गम्यते। अत एव राजानमाह प्रलपत्विति। प्रलपतु। 'प्रलापोऽनर्थकं वच' इत्यमरः। अनेन तद्वचनस्य निर्युक्तिकत्वं द्योत्यते। वैधेयो मूढः। अनेन तस्य गौरवाभावश्च। अतोऽस्य वचनं न प्रमाणीक्रियतामिति भावः। कुत इयत्राह नन्वित्यादि। नन्वित्यामन्त्रेण। संवादे वा। प्रभुरेवेत्येवकारेणान्यो दृष्टान्तो नान्वेष्टव्य इति द्योत्यते। निदर्शनं मृगयाया गुणत्वे दृष्टान्तः। तद्गुणानां स्वामिनि दर्शनादिति भावः। तानाह मेदश्छेदकृशोदरमित्यादि। यद्वा प्रभुरेव न माढव्य इत्येवकारार्थः। निदर्शनं प्रमाणं निश्चयकर्तेत्यर्थः। यद्यथा स्वामी मन्यते तत्तथा कुरुतामिति भावः। अनेन माढव्यस्यायासासहत्वमेव प्रतिषेधहेतुरिति सूचयन्नात्मनो मृगयायामेवाभिनिवेश इति सूचयति। अनेन तस्य राजाराधनकौशलं गम्यते। अथ माढव्येनापोदितां मृगयां तद्गुणप्रशंसया प्रतिसमाधत्ते मेदश्छेदेत्यादि। मृगयातस्तत्कर्तुरित्यादिः। मेदश्चतुर्थो धातुः। स मधुराद्याहारेण वर्द्धते। तद्वृद्धौ "अल्पेऽपि चेष्टिते श्वासः" इत्यादयो वाहटाद्युक्ता दोषाः। तस्य छेदेन क्षयेण कृशोदरमित्यनेन विभक्तघनगात्रत्वं द्योत्यते। अत एव लघु लाघवयुक्तम्। अत एव उत्थानमनालस्यलक्षणो व्यवसायस्तस्य योग्यमाश्रयभूतं, तेन योग्यमुत्कृष्टं वा। अनेन परपराभवादिकर्मसामर्थ्यमुक्तम्। वपुरेवं भवतीति

संबन्धः । अत्र वाहटः "लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः । विभक्तघनगात्रत्वं व्यायामादुपजायते" इति । वपुर्गुणानुक्त्वा गुणान्तरमाह सत्त्वानामित्यादि । सत्त्वानां सिंहव्याघ्रादिजन्तूनाम् । अपीति समुच्चये । लक्ष्यते लक्षणैर्ज्ञायते । भयक्रोधयोः भयस्य क्रोधस्य च । यद्वा भये क्रोधे च सति या विकृतिस्तद्वत् । सत्त्वानां चित्तं भयक्रोधयोर्विकृतिमत् लक्ष्यतेऽपीति संबन्धः । इदानीं भीतमिदानीं क्रुद्धमितीङ्गिताकाराभ्यामनुमीयत इत्यर्थः । यथा रघौ "भयरुषोश्च तदिङ्गितबोधन"मिति । युद्धादावमित्रादेर्भयादिज्ञानमस्य फलम् । फलान्तरमप्याहोत्कर्ष इत्यादि । स इति पुंस्त्वं विधेयानुरोधात् । यथा "शैत्यं हि यत्सा प्रकृतिर्जलस्ये"ति । धन्विनां तदभिमानवताम् । इषव इति बहुवचनेन यादृच्छिकैकशरनिरासो द्योत्यते । सिध्यन्ति फलन्ति । चले मृगादिरूपे । इषवश्चले लक्ष्ये सिध्यन्ति यत् स धन्विनामुत्कर्षश्श्रेष्ठ्येत्यन्वयः । यथा रघौ "परिचयं चललक्ष्यनिपातन" इति । अस्यापि युद्धादावुपयोगः । अत इत्यर्थात् । मिथ्येत्यादि । नीतिविदो मृगयां मिथ्यैव व्यसनत्वेन वदन्तीत्यर्थः । वचनं च "स्त्रियोऽक्षा मृगया पान"मित्यादि । नानागुणत्वान्मृगया न व्यसनमिति भावः । अथ मृगयायाः प्रसिद्धं विनोदत्वं च मनसि कृत्वाहेदृगिति । ईदृग् उक्तगुणवत्तया एतत्तुल्यः । हित इति यावत् । विनुद्यतेऽनेन काल इति विनोदो विहारः । कुत इत्याक्षेपे । सप्तम्यन्तात् प्रथमान्ताद्वा तसिः । अनेनासुलभत्वं दर्शितम् । यद्धि हितं तन्न हृद्यं, यद्धि हृद्यं तन्न हितमिति सामान्यस्थितिः । मृगया तु हिता हृद्या चेति सर्वोत्कृष्टेति भावः । अत्र कौटल्यः । 'मृगयायां तु व्यायामः, श्लेष्मपित्तस्वेदनाशः, चले स्थिरे च लक्ष्ये परिचयः, क्रोधभयस्थानेङ्गितेषु च चित्तज्ञान'मित्यादि । दण्डिनाप्युक्तं दशकुमारे । व्यायामोत्कर्षादापरसूपकर्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजय

विदू—अत्तभवं कहंवि पकिदिं आवण्णो । तुवं दाव अडवीदो अडवीं आहिंडिअ दानीं कस्स वि णासिआलोलुवस्स जिण्णरंखस्स मुहे पडिओ होहि ॥ (अत्रभवान् कथमपि प्रकृतिमापन्नः । त्वं तावदटवीतोऽटवीमाहिण्ड्य इदानीं कस्यापि नासिकालोलुपस्य जीर्णर्क्षस्य मुखे पतितो भवसि)

राजा—भद्रसेनाश्रमसंनिकृष्टे स्थिताः स्मः । अतस्ते वचनं नाभिनन्दामि । अद्य तावत्—

---

इत्यादि । स चेत्यत्र चकारेणानुक्तानि गुणान्तराण्यपि ग्राह्याणि । अत्र मृगयाया व्यसनत्वाभावे पूर्ववाक्यार्थानां हेतुत्वात् काव्यलिङ्गम् । क्रियासमुच्चयश्च । सेनापतिगतो मृगयोत्साहो मत्यादयश्च भावा व्यज्यन्ते । अनवरतेत्यादिना राज्ञः केवलं गात्रगुणा उक्ताः । अनेन गुणान्तराण्यपि सामान्येन दर्शितानीति विवेकः ॥

अथ विदूषकः सेनापतिप्रोत्साहितमपि नायकमाकारेणात्मानुकूलमालक्ष्य तदानुकूल्यमनुवदन् सेनापतिं भीषयन्नाह अत्तभवं इत्यादि । कथमपि मद्वचनैः कृच्छ्रेण । प्रकृतिं नीतिमार्गानुसरणरूपं स्वभावम् । आपन्नः । मृगयाया अत्यन्तं निवृत्त इत्यर्थः । आहिण्ड्य गत्वा । तत्काल इत्यर्थः । नासिकालोलुपस्येति स्वभावोक्तिः । भल्लूका दृष्टिपथं प्राप्तानां नराणां नासिकां खादन्तीति प्रसिद्धिः । जीर्णर्क्षस्य वृद्धभल्लूकस्य । जीर्णेति लोलुपत्वातिशयख्यापनार्थम् । मुखे पतितो भवसीति । जीर्णर्क्षस्ते नासिकां भक्षयतीत्यर्थः । शापरूपेयं भीषणिकोक्तिः पूर्वोक्तजनान्तिकवाक्यगोपनार्था । स्थिरप्रतिबन्धत्वमनेन निर्व्यूढम् ॥

सेनापतिना मृगयां प्रति माढव्यापवादस्य प्रतिपसवे साधितेऽपवादान्तरमुद्भाव्य राजा परिहरति भद्रेत्यादि । भद्रसेनेति

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ६ ॥

---

नाम्ना संबुद्धिस्तद्वचनानाभिनन्दनपारुष्यभयात्समावर्जनार्था । आश्रमस्य सन्निकृष्टे समीपे स्थिता इति मृगयायामाश्रमबाधा संभाव्येति भावः । इदमपि तद्वाक्यस्य ग्राह्यत्वं सूचयत्स्वविनोदनौत्सुक्यगोपनपरम् । तदुपसंह्रियतां मृगयेत्याहाद्यतावद्गाहन्तामित्यादि । गाहन्तां सर्वत्र कामचाराभ्यनुज्ञाने लोट् । महिषाः । अत्र बहुवचनेनोत्तरत्र कुलततिशब्दाभ्यां च सर्वे पुत्रमित्रकलत्रादयो वर्ग्या विवक्षिताः । निपानसलिलम् । 'आहावस्तु निपानं स्यादुपकूलजलाशय' इत्यमरः । तच्च वनपालैर्मृगाणां मृगयाश्रान्तानां नराणां च पानाय क्रियते । यद्वा निपानपदेन क्षुद्रसरांसि लक्ष्यन्ते । विरलजलत्वं व्यङ्ग्यम् । महिषाणां जलावगाहनं जठराग्नेः सदापि ज्वलनात् तच्छान्तय इति प्रसिद्धम् । मुहुस्ताडितमिति । ताडनं मुखलग्नानां दंशादीनां निवारणाय । तेषामन्तरान्तरा सन्निधानान्मुहुरिति । सलिलं ताडितं तद्गाहन्तामिति संबन्धः । अत्र गाहन्तामित्युक्त्या मृगयया पूर्वं महिषाणां तत्परित्यागः तेन भयातिशयश्च सूच्यते । छायास्वनातपेषु बद्धानि कदम्बकानि समूहा येन तत् । कदम्बकानां बहुत्वविवक्षया कुलस्यान्यपदार्थत्वम् । अतो न पौनरुक्त्यम् । तथा सदभ्यस्यत्विति संबन्धः । इदं क्रियाविशेषणमिति केचित् । छायाबद्धेत्यनेन ग्रीष्मवशाच्छायायाः पिण्डीभूतत्वं कदम्बकानां वृक्षमूलसन्निविष्टत्वं च गम्यते । मृगाणां कुलं यूथम् । रोमन्थं निगीर्णस्य शष्पादेरुद्गीर्य चर्वणम् । अभ्यस्यत्वित्यनेन तस्य विस्मृतत्वं

तेन मृगकुलस्य भयातिशयश्च द्योत्यते । विस्रब्धं क्रियतामिति । अनेनापि पूर्वमभियोगसंभावनेनाविश्वास उत्खननाभावश्च व्यज्यते । मुस्ताक्षतिः मुस्ताकन्दग्रहणायोत्खननम् । पल्वल इत्यन्यत्र मुस्तानां ग्रीष्मेण नष्टप्रायत्वं सूचयति । वराहाः पङ्कप्रायाल्पजल एवोष्णातिरेकाद्दिवसमतिवाहयन्तीति प्रसिद्धिश्च । उक्तार्थेषु हेतुं दर्शयन्नाह विश्रामामिति । विश्रामं लभतामिति । निर्व्यापारं तिष्ठत्वित्यर्थः । अनेनेयत्पर्यन्तं विश्रमस्य दुर्लभत्वं सूच्यते । इदं नानाविधकर्मकारीत्यर्थान्तरसंक्रमितवाच्यम् । चेति समुच्चये । लभतां चेति संबन्धः । शिथिलः अनवरताकर्षणाच्छैथिल्यमापन्नः ज्याबन्धो यस्य तदित्यनेन विश्रमार्हत्वं सूच्यते । यद्वा शिथिलज्याबन्धमवरोपितमौर्वीबन्धं सदिति विश्रमस्य पूर्वरङ्गः । अस्मद्धनुरित्यनेनात्मनः सप्ताङ्गसमष्टिरूपस्य स्वामित्वस्य जीवितभूतत्वं धनुषो द्योत्यते । ततस्तद्विश्रमस्याभावे सर्वमपि संशयितं स्यादिति तस्यावश्यकत्वं च । अत एवास्मदर्थस्योदितं तत्कर्तृत्वमचेतने धनुष्यारोपितम् । तच्च किमपि चारुत्वमावहति । यदुक्तं व्यक्तिविवेके । "प्रकृतमपि यत्र हित्वा कर्तृत्वं युष्मदर्थस्य चारुत्वायान्यत्रारोप्येत गुणः स तु न दोष" इति । अस्मादिति भिन्नं पदं पञ्चमीबहुवचनं विश्रामामित्यत्र संबध्नातीति केचित् । नोदात्तेत्यादिना वृद्धिप्रतिषेधात् विश्राममित्यस्यापाणिनीयत्वेऽपि महाकविप्रयोगबाहुल्यात् साधुत्वम् । यथोक्तं सर्वस्वे श्रीनारायणीयस्तोत्ररत्नकृता श्रीनारायणभट्टपादेन । "विश्रामस्यापशब्दत्वं वृत्त्युक्तं नाद्रियामहे । मुरारिभवभूत्यादीनप्रमाणीकरोति कः" इति । विश्रान्तिमिति केचित् पठन्ति । अत्र महिषादिगाहनादेरुक्त्या तद्धेतुर्मृगयोपसंहारः प्रतीयते । अद्यैवोपसंहियतां मृगयेत्यर्थः । अत्राप्रस्तुतप्रशंसा । कार्यकारणयोर्द्वयोः प्रस्तुतत्वे तु प्रस्तुताङ्कुरः । महिषादिस्वभावोक्तिः क्रियासमुच्चयः काव्यलिङ्गं च । अत्र गाहन्तां महिषा इति कर्तृकारकप्रक्रमात् क्रियतां

सेना— यत् प्रभविष्णवे रोचते ।

राजा— तेन हि निवर्त्तय पूर्वगतान् वनग्राहिणः । यथा च सैनिकास्तपोवनं दूरादेव परिहरन्ति तथा निषेद्धव्याः । पश्य ।

---

वराहततिभिरित्यत्र कारकप्रक्रमभङ्गः । तस्मात् विस्रब्धा रचयन्तु सूकरवरा मुस्ताक्षतिमित्यदुष्टमिति काव्यप्रकाशिकायाम् । विस्रब्धः कुरुतां वराहनिवह इति पाठे त्वात्मनेपदप्रक्रमभङ्गोऽपि परिहृत इति प्रतीपोद्योते । वस्तुतस्तु रसैकतानेन महाकविनैवंविधे क्षुद्रदोषे मनो न निहितम् । एवमन्यत्रापीति बोद्ध्यम् । अत्र शकुन्तलाविरहखिन्नस्य राज्ञः स्वस्येवान्येषामपि वियोगदुःखं मा भूदितीयमुक्तिः । बहुवचनादिना स्त्रीपुंसयोः प्रतीति स्फुटेत्यप्याहुः ॥

अथ सेनापतिर्मृगयानिवृत्तौ स्वाभिमतत्वगोपनायारुचिं द्योतयन् स्वामिनो मतमभ्युपगच्छति यदिति । प्रभविष्णव इत्यनेन तन्नियोगस्यालङ्घ्यत्वं द्योत्यते । रुच्यर्थानामिति संप्रदानत्वाच्चतुर्थी । यद्रोचते तत्तथेति शेषः । तेन हीत्यादि । पूर्वगतानिति निवर्त्तनहेतुः अन्यथानिश्चितस्य तेषां अज्ञातत्वं सूचयति । वनग्राहिणो वनशोधकान् । कर्त्तव्यान्तरमपि विचिन्त्याह यथा चेत्यादि । किञ्चेत्यर्थे चकारः । तपोवनमिति भयबीजप्रदर्शनम् । दूरादेवेति प्रसङ्गस्याप्यभावार्थम् । निषेद्धव्या इति एतेन तुरगखुरेत्याद्युक्तमनुसंदधाति । अथ तथा निषेधस्यावश्यकत्वं दर्शयितुं तदकरणे प्रत्यवायमाह पश्य शमेत्यादि । शमप्रधानेष्विति गूढत्वे हेतुः अनेन निसर्गतः सौम्यताकार्यमनुग्रहपरत्वं द्योत्यते । तपोधनेषु । तपसो धनत्वारोपेण तदेकार्जनतत्परत्वं तेन तपसश्चिरसञ्चितत्वं ततस्तपस्विनां निग्रहानुग्रहसामर्थ्यं च सूच्यते । सूर्यकान्तेष्विवेत्यर्थात् ।

शमप्रधानेषु तपोधनेषु
गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्ता-
स्तदन्यतेजोऽभिभवाद्वमन्ति ॥ ७ ॥

---

गूढमनभिभवदशायामप्रकाशम् । अनेन तेजसोऽत्यन्तासंभाव्यत्वं द्योत्यते । हीति प्रसिद्धाववधारणे वा । अस्ति हीति संबन्धः । दाहः क्रोधकार्यं शापरूपो निग्रहः । सूर्यकान्तपक्षे भस्मीकरणं स आत्मा स्वभावो यस्य । आत्मेत्यनेनाव्यभिचारो व्यज्यते । तेजो ब्रह्मवर्चसम् । सामर्थ्यविशेष इति यावत् अन्यत्राग्निः । अस्तीत्यत्र ज्ञापकमाह स्पर्शेत्यादि । तपोधना इति विपरिणामेनानुषङ्गः । स्पर्शस्यानुकूलाः सुखकराः शीतळा इति यावत् । शमप्रतियोगीदं गूढत्वे हेतुः । तद् दाहात्मकं तेजः । अन्यस्य अन्यद्वा तेजः बलं अनेन ब्राह्मप्रतियोगि क्षात्रं प्राधान्येन विवक्षितं अन्यत्र सूर्यतेजः तस्याभिभवः पराभवः अभितो भवनं च तस्मात् । अन्यजनबलात्कारजनितमनःकालुष्यात्सूर्यकिरणसंपातजन्यसंक्षोभाच्चेत्यर्थः । वमन्ति अनेन प्रकाशनं लक्ष्यते तस्याबुद्धिपूर्वकत्वाप्रतीकार्यत्वादिकं व्यङ्ग्यम् । अत्र महाभारतम् । "मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः" इति । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा । तया प्रस्तुतो विशेषः प्रतीयते । यद्यस्मत्सैनिका आश्रमपीडां कुर्युः तदा काश्यपोऽस्मान् शपेदिति । अतो निषेद्धव्या इति संबन्धः । अत्र उत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुत्वात् काव्यलिङ्गम् । अनुमानमिति केचित् । तथा श्लेषोत्थापिता उपमा च । तथा चानुकूल्याचरणे प्रत्युतानुग्रहकारित्वादत्यन्ताह्लादकारिणि इति भक्तिसाधना प्रीतिरन्यथात्वे शङ्कादयश्च । अन्यतेज इत्यादिनाभिभवतामेवापराधो न

सेना— यदाज्ञापयति स्वामी ।

विदू— ध्वंसदु दे उस्साहवुत्तंतो । (ध्वंस्यतां तवोत्साहवृत्तान्तः)

(निष्क्रान्तः सेनापतिः)

राजा— (परिजनं विलोक्य) अपनयन्तु भवत्यो मृगयावेषम् ।

रैवतक त्वमपि नियोगमशून्यं कुरु ।

परिजनः— जं देवो आणवेदि । (यद्देव आज्ञापयति) (निष्क्रान्तः)

---

तपोधनानामिति च व्यज्यन्ते । मत्याशुपस्कृता तपोधनविषया भक्तिः प्राधान्येन व्यङ्ग्या । इदं वचनं वक्ष्यमाणदुर्वासश्शापस्य सूचकं च । अत्र वमन्तीति लाक्षणिकत्वात् नाश्लीलम् । यदुक्तं दण्डिना "निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयमतिसुन्दर"मिति ॥

यदित्यादि सेनापतेस्तदुक्ताङ्गीकरणम् । ध्वंसदु इत्यादि । उत्साहेन स्वीयेन मृगयाविषयकेण । यद्वा स्वाम्युत्साहप्रयोजको वृत्तान्तः मृगयागुणकथनादिः । अथवा उत्साहकथापीत्यर्थः । ध्वंस्यतां समाप्यताम् । समापनायायमवसर इत्यर्थः । अहमेव जितवानिति चापल्यात् परिहासः । शिथिलित इति पाठे त्रुटित इत्यर्थः । मत्सिद्धान्त एव फलित इति भावः । परिजनं यवनिकाः । अपनयन्तु भवत्य इत्यादि । अनेन स्वयं तद्वेषो नावलंम्बित इति द्योत्यते । रैवतकेति द्वारपालनाम । नियुज्यतेऽस्मिन्निति नियोगो द्वारं यद्वा द्वारपरिपालनरूपादेशः । अत्र नायिकावृत्तान्तप्रसङ्गवर्णनेन नायकस्य विप्रलम्भं वर्णयितुमुपक्रान्ताया मृगयाया उपसंहारस्तदङ्गतया सेनापतिप्रवेशादिश्च वर्णितः । अन्यथानौचित्यमापद्येतेति ध्येयम् ॥

विदू— किदं भवदा णिम्मक्खिअं संपदं । एदस्सीं पाअवच्छाआअं अविरळळदाविदाणसणाहे आसणे णिसीदतु भवं । जाव अहं वि सुहासीणो होमि । (कृतं भवता निर्मक्षिकं साम्प्रतमेतस्यां पादपच्छायायामविरललतावितानसनाथ आसने निषीदतु भवान् । यावदहमपि सुखासीनो भवामि)

राजा— गच्छाग्रतः ।

विदू-- एदु भवं । (एतु भवान् )

(उभौ परिक्रम्योपविशतः)

राजा-- माढव्य अनवाप्तचक्षुःफलोऽसि । येन त्वया दर्शनीयन्न दृष्टम् ।

---

अथ सुखासिकां काङ्क्षमाण आह किदं इत्यादि । मक्षिकाणामभावो निर्मक्षिकम । मक्षिका अप्यत्र नेत्यतिशयोक्तिः । सर्वेषामप्यपगमादत्यन्तं विजनत्वमित्यर्थः । अनेन कः कोत्र भो इत्यादेरियत्पर्यन्तस्य फलमिदं किलेति सूचयता यत्र वक्ष्यामीति प्रस्तुतस्यायमवसर इति सूच्यते । अत एवाह साम्प्रतमित्यादि । साम्प्रतमित्यनेन निर्व्यग्रत्वं सूच्यते । अविरलं निबिडं यल्लतैव वितानं तेन सनाथे सहित इति राजोपवेशार्हत्वं सूचयति । राज्ञो विनोदनबुद्ध्यापीयमुक्तिः । यावदित्यादि । सेव्य उपविष्ट एव सेवकस्योपवेशो युक्त इति भावः । एनेन पूर्वप्रार्थितविश्रमलाभो दर्शितः । एत्वित्यादि मार्गादेशाचारः ॥

अथ प्रियवयस्येन सह सुखासीनो नायकस्तामेव नायिकामनुध्यायन्नत्यन्तमुत्कण्ठितः, 'मनसिजरुजं सा वा दिव्या ममालमपोहितुं रहसि लघयेदारब्धा वा तदाश्रयिणी कथा' इत्युक्तवन्किमपि

विदू—णं भवं अग्गदो मे वट्टइ। (ननु भवानग्रतो मे वर्तते)

राजा— सर्वः कान्तमात्मानं पश्यति। तापाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि॥

---

तच्छान्तये तल्लाभोपायचिन्तायै च वक्ष्यामीति प्रस्तुतां कथां कथयितुमुपक्रमते माढव्येत्यादि। संबुद्ध्या विस्रम्भातिशयस्तेन रहस्यार्थनिवेदनार्हत्वं च सूच्यते। संबाधनकाका शोच्योऽसीति च। अत्र हेतुरनवाप्तेत्यादि। चक्षुःफलन्न लब्धवानित्यर्थः। अत्र हेतुमाह येनेत्यादि। येन यस्मात्। दृष्टमिति भूतनिर्देशः। पुनर्दुर्लभत्वं पूर्वं सुलभत्वं च द्योतयति। अनेनावाप्तचक्षुःफलोऽहं येन मया दर्शनीयं दृष्टमित्यर्थो वैधर्म्येण द्योत्यते। नर्मसचिवस्तदाशयं जानन्नपि तदारम्भाननुगुणं हास्यप्रौढ्या वदति णमिति। नन्वित्यनुवादे। दर्शनीयस्य मम दर्शनादवाप्तचक्षुःफलस्त्वम्। मम तु मत्सौन्दर्यदर्शनासंभवादहं न तथा। ततस्त्वदुक्तं सत्यमेवेत्यर्थः। विदूषकस्यात्मनि दर्शनीयत्वोक्तिः विक्रमोर्वशीयेऽप्यस्ति। लोकस्वभाव एवायमित्याह सर्व इति। कान्तं सुन्दरम्। पश्यति जानाति। अतस्तत्र दर्शनीयम्मन्यत्वे न दोष इति भावः। यद्वा नन्वित्यादि। मम दर्शनीयो भवानेव अतो भवद्दर्शनादवाप्तचक्षुःफलोऽस्मि तस्माद्भवदुक्तं न युक्तमित्यर्थः। सर्व इत्यादि। अतो मम दर्शनीयत्वं त्वया न समर्थनीयमिति भावः। सर्व इत्यादि पश्यतीयन्तं स्वगतमिति केचित्। अथारब्धे त्वरमाणस्तच्छेषं व्यक्तमाह तामित्यादि। तामित्यनुभूतार्थकमनुस्मृतिं सूचयति। यद्वा तां भवन्तं प्रति किञ्चित् प्रस्तुतामित्यर्थः। अनेन ह्यः किलेति विदूषकोक्तमनुसंहितम्। तामित्युक्ता कीदृशी किन्नामिका वेत्यत्राहाश्रमेत्यादि। आश्रमस्य ललामभूतामलङ्कारभूताम्। त्रैलोक्यालङ्कारभूतामित्यर्थः।

विदू-- (स्वगतम्) होदु ण से अवसरं दाइस्सं । (भवतु नास्या-वसरं दास्यामि) (प्रकाम्) भो अज्ज दे तापसकण्णआ किं अब्भथणीआ दिस्सइ । (भो अद्य ते तापसकन्यका कि-मभ्यर्थनीया दृश्यते)

राजा-- सखे! न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्त्तते ।

---

यथा श्रीरामस्त्रैलोक्याधिपोऽप्ययोध्याधिप इत्युच्यते तथेदम् । अनेन तस्या दर्शनीयत्वं दर्शितम् । शकुन्तलामिति लालनीयत्वाभिप्रायकम् ।

अथ तद्वचसा नायकस्य तस्यामभिलाषातिशयमवगम्य कर्त्तव्यं निश्चिनोति होदु इति । अस्य प्रस्तुतस्य रागानुप्रवेशस्य । तत्पोष-कस्य नायिकावर्णनस्य वा । अवसरं न दास्यामीति पुरगमनादि-विघ्नकर्तृत्वादिदमङ्कुरावस्थायामेवोच्छेद्यमिति भावः । अथ धर्मलोपं तत्र दर्शयन्नाह भो इत्यादि । अद्येति इतः पूर्वमीदृशाभ्यर्थना त्वयि न दृष्टेति सूचयति । ते स्वधर्मज्ञस्य राजर्षेर्भवतः । किं केन प्रकारेण शास्त्रेण वा स्वातन्त्र्येण वा । तापसकन्यकाभ्यर्थनीया दृश्यत इति । अहो खल्वविमृश्यकारितायाः परा काष्ठेति । धर्म-लोपादियमभ्यर्थनानुचिता त्यज्यतामिति भावः ॥

राजा चात्मन्यारोपितं धर्मलोपमसहमानस्तवैवं न संभाव्य-मित्याह सख इत्यादि । अपमार्गप्रवृत्तिनिवारणं सुहृदो युक्तं परं तु चिरपरिचितेन त्वया कथमीदृगनुचितारम्भो मयि संभावित इति संबुद्ध्या सूच्यते । परिहार्ये वस्तुनि अगम्यागमनादौ । पौर-वाणां पूरुपदेन धार्मिकत्वादिगुणोत्कर्षः सूच्यते । पौरवाणामिति व्याप्त्या तेषां तस्य स्वतस्सिद्धत्वं च । मन इत्यन्वर्थम् । न प्रवर्त्तते । किं पुनस्तदादित्सेत्यनेन सूच्यते । अत्र सामान्यनिबन्धनाप्रस्तुतप्र-शंसा । पूरुवंशजस्य मे मनः परिहार्यं नाभिलषतीति भावः ।

सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ ८ ॥

---

अनेनासंशयं क्षत्रेत्याद्युक्तमनुसंदधाति । तर्हि मुनिकन्यकायां कथमभिलाष इत्यत्राह सुरेत्यादि । सुरयुवतिर्मेनका सुरपदेन तस्या दिव्यत्वं युवतीत्यनेन सर्वावयवसौन्दर्यं च द्योत्यते । तत्संभवमित्यनेन शकुन्तलाया अगम्यात्वनिषेधः 'कार्यं निदानाद्धि गुणानधीत' इति सौन्दर्यादिकं च प्रतिपाद्यते । प्रयोजनाभावात् पिता न निर्दिष्टः । किलेति तथा सखीमुखाच्छ्रुतमिति स्वोक्तेः प्रामाण्यं प्रदर्शयति । कथं तर्हि मुन्यपत्यत्वमित्यत आह तदुज्झितेत्यादिः । तया सुरयुवत्या उज्झितं गान्धर्विवाहत्वात्पूर्वं त्यक्तं पश्चादधिगतं मुनेर्लब्धम् । कारुणिकेन मुनिना शकुन्तसकाशात्परिगृह्य परिपोषितमित्यर्थः । अतो मुन्यपत्यत्वमिति भावः । अथ मुनिसंपर्केणन गम्यत्वहानिरिति मुनिजनोचितेन हृदयंगमेन दृष्टान्तेन दर्शयत्यर्कस्येत्यादि । अर्कः वृक्षविशेषः । तत्कुसुमस्य वर्णाकृतिभ्यां नवमालिकाकुसुमसाम्यात्परमेश्वरार्चनोपायोगित्वेन महत्त्वाच्चैतदुक्तिः । उपरि च्युतमिति तत्कुसुमत्वेन शङ्काबीजम् । च्युतत्वे हेतुः शिथिलमिति । वृन्ताद्विश्लथमित्यर्थः । अत्रार्कोपमया मुनेर्महत्तरत्वादिकमपत्ये तज्जन्यत्वस्यासंभाव्यत्वं च । मेनकाया नवमालिकासाम्येन सौकुमार्यादिकं नायिकायास्तत्पुष्पोपमया सकलोपभोग्यत्वस्पृहणीयत्वादिकं च द्योत्यते । शिथिलच्युते उज्झिताधिगतयोः प्रतियोगिनी । सुरयुवतिसंभवं तदुज्झिताधिगतं किल मुनेरपत्यं शिथिलमर्कस्योपरि च्युतं नवमालिकाकुसुममिवेत्यन्वयः । यथार्कनवमालिकापुष्पयोर्वस्तुतो नोत्पाद्योत्पादकभावः, परं तु दैवादापतितः संबन्धः, तत एव जातयार्ककुसुमत्वभ्रान्त्या निखिलजनोपभोग्यामपि

विदू जह कस्सवि पिंडखज्जूरेहिं उव्वेजिदस्स तिन्तिणीफ-ळाहिळासो भवे तह इत्थिआरअणपरिभाइणो भवदो इ-अं अब्भत्थणा । (यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्त्रिणीफलाभिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना)

राजा — न तावदेनां पश्यसि । तेन त्वमेवमवादीः ॥

---

नवमालिकां परमेश्वरसमाराधनैकोपयोगां मन्यते लोकः, तत्त्वा-वबोधे पुनरादत्ते च तामेव स्वयं परिभोगाय । तथा मुनिसंब-न्धात् मुन्यपत्यत्वभ्रान्त्या मुनिजनमात्रपरिग्राह्यामिमां भवानाकलय-ते, परमार्थतो मत्परिग्रहयोग्यैवेयमिति भावः । अनेन नायकस्य तदुत्पत्तिकथनरूपो विनोदो दर्शितः ॥

एवमगम्यत्वे वर्णक्रममूले राज्ञा परिहृते पुनः सांसर्गिकदौर्भा-ग्यमूलमनुपभोग्यत्वं सपरिहासं दर्शयति जह इत्यादि । पिण्डैः घनीभूतैरित्यनेन माधुर्यातिशयो द्योत्यते । खर्जूरैस्तत्फलैः । उ-द्वेजितस्य जिह्वाजाड्यं प्रापितस्य । तिन्त्रिणीफलेऽभिलाष इति त-स्याम्लत्वादिति भावः । मधुरभक्षणेन हि जनितं जिह्वाजाड्यम-म्लभक्षणेन निवर्तते । यथा सौन्दर्यलहर्याम् । "स्मितज्योत्स्ना-जालं तव वदनचन्द्रस्य पिबतां चकोराणामासीदतिरसितया चञ्चु-जडिमा । अतस्ते शीतांशोरमृतलहरीमम्लरुचयः पिबन्ति स्वच्छन्दं निशि निशि भृशं काञ्जिकधिये"ति । खर्जूराणां बहुत्वं तिन्त्रिणीफलस्य एकत्वं च विवक्षितम् । स्वानुभूतं दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह तथेत्या-दि । स्त्रीरत्नानि अन्तःपुरस्था उत्तमस्त्रियः, तत्परिभाविनः चिरपरि-चयात्तदवज्ञाशीलस्य तद्विरक्तस्येत्यर्थः । अत्रमर्थः स्वानुभवेनोत्प्रेक्षितः इ-

विदू — तं खु रमणिउजं एव्व जं भवदो विह्मअं समुप्पादेदि ।
(तत् खलु रमणीयमेव, यद् भवतो विस्मयं समुत्पादयति)

राजा — वयस्य किं बहुना ॥

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन विधिना मनसा कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९ ॥

---

यमभ्यर्थना अस्यामभिलाषः । इयं परिहासोक्तिः । उपमया अन्तःपुरस्त्रीणां माधुर्यस्याधिक्यं शकुन्तलायास्तल्लेशस्याप्यभावश्च व्यज्यते । न तावदयमभिलाषो दीर्घसूत्ररूपः पुनरप्यन्तःपुराण्येवोपभोग्यानि भवेयुरिति सहृदयहासहेतुरयमभिलाषः सद्य एव त्यज्यतामिति भावः। अथ प्रियायामारोपितं दौर्भाग्यमसहमान आह नेत्यादि । त्वं तावदेनान्न पश्यसीत्यनेन अहं तु संकल्पपुरोवर्तिनीं तां सदा पश्यामीति वैधर्म्येण व्यज्यते । तेन अदर्शनेन । यदि त्वमपि पश्येः, तदा नैवं वदेरिति भावः । अथ तदभिलाषस्य स्वायासकारित्वादिकं विचिन्त्य ततो निवर्तयितुमुद्युक्तोऽप्यशक्तः पुनर्गत्यन्तराभावेन राजानमनुसरति तदित्यादि । खल्विति निश्चये । भवतः लोकोत्तराणि वस्तूनि दृष्टवतः । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा । सा रमणीयैवेति तर्कयामि यतस्तव विस्मयं समुत्पादयतीति भावः ॥

अथ त्वदुक्तं सत्यं यतस्तस्या लोकोत्तरं रमणीयत्वमस्त्येवेत्याशयेन नायकः स्वानुभूतां तदाकृतिं वर्णयितुमुपक्रमते वयस्येत्यादि । तत् खल्वित्यादिना अनिच्छयैवानूदितं नर्मसचिवेनेति मत्वा तस्य दृढप्रत्ययाय तदाकृतिं वर्णयितुमारभत इति केचित् । वयस्येति सं-

बुद्ध्या विस्रम्भाद्यतिशयं सूचयन्त्या त्वमेवेदं वक्तव्यः, त्वया च सावधानेन श्रोतव्यमिति द्योत्यते । बहुना प्रत्येकमङ्गप्रत्यङ्गवर्णनरूपेण बहूक्तेन । किं न किमपि । बहूक्तेनापि यथावद्वर्णनाया-शक्यतया तेन न फलमित्यर्थः । आकृतिमेव संक्षेपेण सारतया वर्णयामीति भावः । चित्र इति । सा अपरा स्त्रीरत्नसृष्टिर्मे प्रतिभातीति संबन्धः । सा मन्नयनचकोरचन्द्रिकायमाणा शकुन्तला । अपरा प्राचीनस्त्रीरत्नसृष्टिभ्यो व्यतिरिक्ता असाधारणीति यावत् । स्त्रीरत्नस्य सृष्टिः स्त्रीरत्नतया सृष्टेत्यर्थः । मे प्रागुर्वशीप्रभृतीनि स्त्रीरत्नान्तराणि दृष्टवतो मम । प्रतिभाति । कुत इत्यत्राह धातुरित्यादि । धातुः चतुर्दशभुवननिर्माणकर्तुः । दधातीत्यन्वर्थमुत्कर्षद्योतकम् । विभुत्वमपरिच्छेद्यं सृष्टिकौशलम् । तस्या वपुः लोकातिक्रान्तरामणीयकं शरीरं च । अनुचिन्त्य मुहुर्मुहुश्चिन्तयित्वेति हेतुगर्भम् । स्थितस्येति शेषः । ननु सृष्टिप्रकारः कथं ते प्रतिभातीत्यत्राह चित्र इत्यादि । चित्रे चित्रयतीति चित्रं तस्मिन् फलकाद्यालेख्ये । निवेश्येति । अनेन विलेखनं लक्ष्यते । फलं च समर्पणप्रतीतिः । परिकल्पितः प्रतिष्ठितः सत्त्वस्य जीवस्य योगः संबन्धो यस्याः सा । रूपस्य सौन्दर्यस्य उच्चयः सर्वतः सारसंग्रहः तेन । चन्द्रपद्मादिभ्य उच्चितेन रूपेणेत्यर्थः । रूपं जीवस्थाने परिकल्प्येति यावत् । विधिना ब्रह्मणा कर्त्रा । विशेषेण दधातीत्यन्वर्थं तस्य कलाकौशलातिशयेन किं दुष्करमिति पूर्ववदुत्कर्षं द्योतयति । मनसेति । मनसा निरूप्य हस्ताग्रस्थितशलाकया निर्माणे शलाकाया अग्राङ्गुल्यधीनत्वात्तस्याः पाण्यधीनत्वात्तस्य च मनोऽधीनत्वात् पारम्पर्ये सत्यन्यथाकरणत्वादिप्रसङ्गात् मूलभूतेन मनसैव करणेनेत्यर्थः । कृता सृष्टा । नुशब्दो वितर्के । अत्र सा विधिना मनसा चित्रे निवेश्य रूपोच्चयेन परिकल्पितसत्त्वयोगा कृता नु इति संबन्धः । अत्र चित्रे निवेश्येति विपर्यासेऽपि प्रतिसमाधानार्थमौज्ज्व-

ल्यकरणार्थं च । परिकल्पितेत्यादि निर्जीवत्वप्रसङ्गवारणाय । तत्रापि रूपोच्चयेनेति सौन्दर्यसारसर्वस्वप्रतिपादनाय । विधिनेति तस्यैव स्रष्टृत्वेन प्रसिद्धत्वात् । मनसेति यथासंकल्पितसमालेखप्रदर्शनायेति बोद्ध्यम् । अनेन चित्रसृष्टिकथनेन शकुन्तलायाः साधुपञ्चवर्णोज्ज्वलातिचित्रालेख्यसमर्पितसुन्दरीजनवल्लोकोत्तरचमत्कारकारित्वं द्योत्यते । यथा "निम्ननाभिरियमुन्नतस्तनी स्त्रीति चित्रफलके यथासम"इत्यादि । अथवा रूपोच्चयेनेत्यस्य निवेश्येत्यत्र संबन्धः । अम्बुवाहालिमालेन्दुरेखेन्दीवरादिभ्यः सकलं सौन्दर्यं समाहृत्य चित्रे यथास्थानं विन्यस्य परिकल्पितसत्त्वयोगा नु इत्यर्थः । अथ चिकीर्षितं सर्वं हस्ते सम्यङ् नायातीति मत्वा मनसा कृता न्वित्युक्तम् । यद्वा रूपोच्चयेनेति द्वितीयं वाक्यं कृता नु इत्यस्य अत्रापि संबन्धः । रूपोच्चयेनेत्यस्य पूर्ववदर्थः । यद्वा रूपपदेन रूपवान् लक्ष्यते । रूपाधिक्यं व्यङ्ग्यम् । उच्चयः समुदायः । चन्द्राद्युपादानकारणेन सृष्टा न्वित्यर्थः । यथा मालत्याम् । "तस्याः सखे नियतमिन्दुसुधामृणालज्योत्स्नादि कारणमभू"दिति । अथ मनसा कृता न्विति तृतीयं वाक्यम् । पक्षयोरनयोः शेषं पूर्ववत् । अथवा सा चित्रे निवेश्य परिकल्पितसत्त्वयोगा नु इति प्रथमं वाक्यम् । ननु चित्रनिवेशने ह्यङ्गप्रत्यङ्गसौष्ठवं पञ्चवर्णरचनाचमत्कारश्च भवेत् । न लावण्यसौकुमार्याद्यतिशयसिद्धिरित्यत आह रूपोच्चयेन विधिना मनसा कृता न्विति । रूपोच्चयेन सौन्दर्यसम्पदा । अध्ययनेन वसतीत्यादिवत् फलरूपहेतौ तृतीया । सौन्दर्यातिशयायेत्यर्थः । मनसेति तत्र सर्वमुपपद्यत इति भावः । कृता नु स्वर्गस्त्रीप्रतिस्वतया भूलोकालंकारभूतत्वेन निर्मिता नु इत्यर्थः । अथ विमर्शदशायामस्या न केवलं स्वर्गस्त्रीसाम्यमेव भवितुमर्हति अपि तु तदतिशायित्वमपीत्याशयेनाह स्त्रीरत्नसृष्टीत्यादि । अस्यार्थः पूर्ववदित्यलमधिकेन । अत्र पूर्वार्द्धे उत्प्रेक्षा । संशय इति केचित् ।

विदू— जइ एव्वं पच्चादेसो दाणीं रूववतीणं सा । (यद्येवं प्रत्यादेश इदानीं रूपवतीनां सा)

राजा— इदं च मे मनसि वर्तते ॥

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनामुक्तं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमपि च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ १० ॥

---

उत्तरार्द्धे काव्यलिङ्गमपरेत्यत्र भेदकातिशयोक्तिश्च । अतिशयोक्त्या च सृष्टेर्लोकोत्तरत्वं व्यज्यते । अत्र चित्रे चित्रकाव्ये । निवेश्यः निवेशयितुमर्हः परिकल्पितः सत्त्वयोगो ध्वन्याख्यजीवसंबन्धो यस्याः सा । रूपाणां घटपटादिशब्दानामुच्चयेन । विधिना व्यापारेण । स्त्रीरत्नस्य वाग्देव्याः सृष्टिः । अपरा अलौकिकचमत्कारकारिणी । इत्याद्यर्थप्रतीतेः कवितासृष्टिसमाधिः । मायया विश्वसृष्टिसमाधिश्च ॥

नर्मसचिवस्तदनुवदन्नाह जइ इत्यादि । यद्येवमित्यनुवादे । प्रत्यादेशो निन्दा । कारणे कार्योपचारः, निन्दाहेतुरित्यर्थः । रूपवतीनां तदभिमानिनीनाम् । यद्येवमिदानीं सा रूपवतीनां प्रत्यादेश इति संबन्धः । अनेन तस्याः सर्वापेक्षया गुणोत्कर्ष उक्तः ॥

अथ नायको न केवलं तस्यास्तथाविधा रूपसम्पत्तिरेव निखिलजनमनोहरो यौवनकालश्च प्राप्तः, ततो लाभालाभविवेके मन्मनोव्यापार इत्याहेदं चेत्यादि । इदं च मे मनसि वर्तते एतदप्यहं चिन्तयामीत्यर्थः । इदंपदार्थं विवृणोत्यनाघ्रातमित्यादि । अत्र पुष्पादीनां विकासादौ आघ्राणादिकं संभाव्यते तथात्वे च परिभ-

तत्वादिना अलोभनीयत्वं स्यादित्यनाघ्रातमित्यादीनि विशेषणानि लोभनीयत्वाभिप्रायगर्भाणि । पुष्पादीनामाघ्राणाद्युपभोगस्य निषेधेन तस्य प्राप्तकालत्वं सूच्यते । निषेधस्य प्राप्तिपूर्वकत्वादिति । अनाघ्रातमित्यनेन मधुसौरभनिर्भरत्वादिकं द्योत्यते । अत एव पुष्पमिति न तु कलिकेति । किसलयमशोकादिपल्लवम् । अलूनमत्रुटितम् । त्रुटितत्वे म्लान्यादिदोषः स्यादित्यनेनाम्लानत्वं द्योत्यते । करस्पर्शासहिष्णुत्वात् कररुहैरिति । नखैरित्यर्थः । आमुक्तमाभरणत्वेन धृतं तन्नेत्यनामुक्तम् । आमुक्तत्वे गात्रसंपर्केण मालिन्यादिप्रसङ्ग इत्यनेनौज्ज्वल्यातिशयः सूच्यते । रत्नं विशिष्टमुक्तादामादि । नवमिति पुराणापेक्षया नवस्याधिकमदकरत्वात्तद्द्योतनार्थम् । तदुक्तम् । "मद्यं नवं सर्वविकारकारी"ति । अत एवात्र न विशेषणाधिक्यं तथाविधमधुन एवोपमानत्वात् । केचित्तु नवमिति पुष्पादेरपि विशेषणमिदंप्रथमतया संभूतं सुरद्रुमादिसंभूतमिति वा तदर्थः । तेन पुष्पादेरुत्कर्षः सूच्यत इत्याहुः । अनास्वादितरसमित्यनेन पीतशेषत्वादिदोषराहित्यं दर्शितम् । अखण्डमननुभूतशेषत्वादपरिक्षीणं परिपूर्णमित्यर्थः । क्वचिदनुभूतशेषत्वोक्तेरिदम् । यथा मेघे "शेषैः पुण्यैः हृतमिव दिवः कान्तिमत् खण्डमेक"मिति । पुण्यानां ज्योतिष्टोमादीनामनेकजन्मार्जितानां शुभकर्मणाम् । फलं स्वर्गादि । अपि चेति समुच्चये । इव चेति पाठेऽप्येवमेवार्थः । न त्विवशब्देनोपमा उत्प्रेक्षा वा बोध्यते । तथा सति रूपकस्यैवोपक्रमेण प्रक्रमभङ्गापत्तेः पुष्पादिभिरपि तदन्वयतात्पर्ये च प्रत्येकं तत्प्रयोगस्यावश्यकत्वात् । मालोपमायां तथा दर्शनात् । उपमोत्प्रेक्षापेक्षया रूपकस्याधिकचमत्कारकारित्वाच्च । अत एव रूपकमेवास्मिन् श्लोके श्रीभोजराजादिभिर्दर्शितम् । तद्रूपं तस्याः शरीरम् । अनघं निर्दोषं निखिलगुणसम्पन्नमित्यर्थः । इदं पुष्पाद्यारोपहेतुः । अनाघ्रातमित्यादेर्बिम्बभूतमिति केचित् । अत्रानघत्ववि-

शिष्टतद्रूपे अनाघ्रातत्वादिविशिष्टपुष्पादीनां बहूनामारोपान्मालारूपकम् । तत्राद्येनोपमानेन तद्रूपस्य सौरभ्यातिरेकः पुष्यतीति पुष्पमित्यन्वर्थेन स्तनमण्डलाद्यवयवपरिपूर्णत्वमनुरागपरिपोषकत्वं च, द्वितीयेन सौकुमार्याद्यतिशयशालित्वं, तृतीयेन लावण्यबाहुल्यविशिष्टजनोपभोग्यत्वादिकं, चतुर्थेनात्यन्तमनस्संक्षोभकारित्वं, पञ्चमेन दुर्लभत्वं लाभे च लाभवतः सर्वपुरुषार्थप्राप्तिबुद्ध्या कृतार्थताप्रतीतिकारित्वं च द्योत्यते । प्राप्तोपभोगकालत्वं तथाप्यनुपभुक्तत्वं च साधारणो धर्मः । तेन तस्या वपुषो नवयौवनाविर्भावश्च प्रकाश्यते । किं च पञ्चभिर्वाक्यैः क्रमाच्चुम्बननखक्रियाकण्ठालिङ्गनाधररसग्रहणसंप्रयोगानां नायकमनसि स्थितानां सूक्ष्मः समाधिः । केचित्तु पुनरपि सृष्टेः प्रकारमाहेदं चेत्यादि । इदमित्यनेनानघमित्यन्तवाक्यार्थः परामृश्यते । मधु माक्षिकम् । नवमपर्युषितम् । फलं शृङ्गारापरपर्यायं कामसुखम् । शेषं पूर्ववत् । अत्र चित्र इत्यादि विधिरित्यन्तं सृष्टिप्रकरणम् । अतः प्रकरणवैशिष्ट्यात् पुष्पादीनां तद्रूपसृष्टेरुपादानकारणत्वं प्रतीयते । अतोऽयमर्थः । अनघं तद्रूपं विधिना अनाघ्रातत्वादिविशिष्टपुष्पादिभिः पञ्चभिर्निर्मितमिति मे प्रतिभातीति । पुष्पादीनां तद्रूपसृष्टेरुपादानकारणत्वासंबन्धेपि तत्संबन्धकथनरूपातिशयोक्तिर्मालारूपकेण ध्वन्यते । तया पुनस्तद्रूपस्य सहजसौरभसौकुमार्यलावण्यमाधुर्याह्लादकत्वानि क्रमाद्व्यज्यन्ते । तेन माधुर्यस्याधररसवागिन्द्रियनिष्ठत्वान्मनष्षष्ठेन्द्रियवर्गसातिशयसंतर्पणत्वं तेनोपभोगयोग्यतायाः परमकाष्ठाप्राप्तिश्चेति व्याचक्षते । एवं तद्रूपस्योपभोगयोग्यत्वं प्रदर्श्य अनुरूपवरप्रदानसंकल्पश्रवणोद्भूतामनुरूपवरविषयिणीं चिन्तामपि स्वमनसि स्थितां प्रियवयस्यं सविषादमाह न जाने इत्यादि । न जाने वक्ष्यमाणं न जानामि । विमर्शदशायां तदनुरूपः कोऽपि प्रतीतिपथं नावतरतीत्यर्थः । भोक्तारं भोगः संभोगः तत्कर्तारम् । कं कं पुरुषविशेषम् । इह तद्रूपे

विदू—तेण हि लघु परित्ताअदु णं भवं । मा कस्सवि तवस्सिणो इंगुदीतेल्लमिस्ससिक्कणसिस्सस्स आरण्णअस्स हत्थे णिपडइ । (तेन हि लघु परित्रायतामेनां भवान् ।

---

विषये । अस्मिन् लोके वा । एतत्पक्षे तद्रूपस्येति शेषः । समुपस्थास्यति सम्यक् समीपे स्थापयिष्यतीति ण्यर्थान्तर्भावः । यथा "अनुष्ठितानन्तरजाविवाह" इत्यादौ । धातूनामनेकार्थत्वात् करिष्यतीत्यर्थ इति केचित् । विधिः दैवम् । तद्रूपनिर्माता प्रजापतिर्वा । अनेन विधिना तदनुरूपोऽपि कुत्रचित् सृष्टः स्यादिति द्योत्यते । एवं तद्रूपमुपभोगयोग्यतायाः परमकाष्ठां प्रापयन् विधिः कमिह भोक्तारं सन्तं समुपस्थापयिष्यति न जान इत्यर्थः । अनेन चिन्ता । समुपस्थास्यतीत्यत्र समुपाभ्यामुपसर्गाभ्यां भोक्तुस्तद्रूपं प्रति उपभोगस्यात्यन्तनिकटीभूतत्वं द्योत्यते । अत एव मयि स्थिते किमन्यमेव विधिर्झटिति घटयेन्न जान इति विषादश्च । विधिशब्देनाप्ययमर्थः सूच्यते "को जानीते विधिविलसितानी"त्यादिन्यायात् । एवमौत्सुक्यादयो भावाश्च व्यज्यन्ते । पद्याभ्यामाभ्यां गुणकीर्तनरूपा चतुर्थ्यवस्था दर्शिता । त्रिविर्भाग्यं तत्रेनाध्यवसितं तद्रूपम् । समुपस्थास्यति संप्राप्स्यतीत्यर्थ इति केचित् । अनघं सुकृतिनमिति कमित्यस्य विशेषणमित्यन्ये ॥

अथ तद्वचनेन राज्ञः समुत्कण्ठामवगम्य प्रियवयस्यस्तन्निवृत्तिमन्विच्छन्नाह तेण हीत्यादि । तेन हि यस्मात्सा स्त्रीरत्नभूता प्राप्तयौवना च तस्मादित्यर्थः । लघु शीघ्रम् । इदानीमेवेत्यर्थः । परित्रायतामपायाद्रक्षतु स्वीकुरुतामित्यर्थः । भवान् तदनुरूपस्त्वम् । अपायमाह मेत्यादि । मा निपतत्विति संबन्धः । एषेति विपरिणामेनानुषङ्गः । तपस्विन इत्यनेन विषयवैमुख्यादरसिकत्वं द्योत्यते ।

मा कस्यापि तपस्विन इङ्गुदीतैलमिश्रचिक्कणशीर्षस्यारण्यकस्य हस्ते निपततु)

राजा—परवती खलु तत्रभवती। न च सन्निहितोऽत्र गुरुजनः॥

विदू—अह तत्तभवं अन्तरेण कीदिसो से दिट्ठिराओ। (अथ तत्रभवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः)

---

इंगुदीतैलेन मिश्रं संपृक्तमत एव चिक्कणं स्निग्धं तपस्विनामभ्यञ्जनाभावाद्रौक्ष्यपरिहारायेदम्, 'चिक्कणं मसृणं स्निग्ध'मित्यमरः, 'चिक्कणं जटिल'मिति केचित्। तथाविधं शीर्षं शिरो यस्येत्यनेन दुर्भगत्वमारण्यकस्येत्यनेन लोकवृत्तान्तानभिज्ञत्वादिकं तद्धस्तपतनस्य सौलभ्यं च द्योत्यते। हस्ते निपततु। हस्तपतनेन स्वीकारो लक्ष्यते। पतनवत्तस्य दुःखावहत्वं व्यङ्ग्यम्। तत्पतनात् पूर्वं स्वीकुरुतां भवानिति भावः। लघु परित्राणस्याशक्यतां सविषादमाह परवतीत्यादि। परवती गुरुपरतन्त्रा। खल्विति निश्चयेऽवधारणे वा। अनेन धर्माचरणेऽपीत्याद्युक्तमनुसंहितम्। तत्रभवतीति शकुन्तलेत्यर्थे प्रौढिः। तर्हि पितरमभ्यर्थयामह इत्यत्राह न चेत्यादि। इदानीमित्यादि वैखानसोक्तमनेनानुसंहितम्। अतः शीघ्रं तत्परिग्रहो न साध्य इति भावः। अत्र कारणनिबन्धनाप्रस्तुतप्रशंसा॥

अथ तदुक्त्या समागमस्य कालविलम्बमाशङ्क्याश्वासनोपायमन्विच्छंस्तत्र प्रधानभूतं तदनुरागं पृच्छत्यहेत्यादि। अथेति प्रश्ने। अन्तरेणेत्यव्ययमुद्दिश्येत्यर्थे। अन्तरान्तरेण युक्त इति द्वितीयेति केचित्। उद्दिश्येत्यध्याहारः। अन्तरेण विशेषेण। उद्दिश्येत्यर्थे त्वन्तरान्तरेण युक्त इति द्वितीया न भवति। तत्सूत्रे विनार्थकस्यैव तस्य ग्रहणमिति काशिकादावुक्तत्वादित्यन्ये।

राजा— निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः । तथापि तु ॥

अभिमुखे मयि संहृतमीक्षितं
हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया
न मदनो विवृतो न च संवृतः ॥ ११ ॥

---

कीदृशः अस्ति वा न वा । आद्ये क्रियानिरर्थः । दृष्टिरागः दृष्टौ प्रकाशमानोऽनुरागः । सर्वे भावाश्चक्षुषि व्यज्यन्त इति न्यायात् । यथा मालत्यां "पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरते"-त्यादि । केचित्तु अथ तस्यास्त्वय्यनुरागश्चेत् तदा पितृनियोगप्रतिपालनप्रयत्नोऽपि निरुपयोगस्ततः स कीदृगिति पृच्छत्यहे-त्यादीत्यवतारयन्ति । रागवत्यामपि तस्यां दृष्टिरागो दुर्लक्ष इत्याह निसर्गादित्यादि । अप्रगल्भः दम्पतिव्यवहाराद्यनभिज्ञत्वादप्रौढः । तथापि सामान्यतस्तपस्विकन्यानामप्रगल्भत्वेऽपि । अपीति विरोधे । तुशब्दो विशेषे । तमाहाभिमुख इत्यादि । मयि अभिमुखे तद्वदनकमलमवलोकयति सति । ईक्षितं मद्दर्शनम् । संहृतं तया निवर्तितम् । अनेनानभिमुखत्वे तयाहमीक्षित इति द्योत्यते । तथा । हसितं तया अहासि । कथमन्यनिमित्तेन कृत उदयो यस्य तत्तथा । मन्दहासोऽप्यभूत्तत्र निमित्तान्तरं चोद्भावितमित्यर्थः । अनेन हासानां स्वरसतः प्रवृत्तिर्द्योत्यते । विनयेन वारिता वृत्तयो व्यापारा यस्य । अतः पूर्वार्धप्रतिपादितात् कारणात् । मदनो रागः । विवृतः प्रकाशितः । संवृतः गूहितः । ईक्षणसंहरणात् हासस्यान्यनिमित्तकत्वेन गूहनाच्च तया मदनो न स्फुटं प्रकाशितः, तथानभिमुखत्वे ईक्षणाद्धासस्य स्वरसतः प्रवृत्तत्वाच्च न गूहितश्चेत्यर्थः । अत्र मदनस्य व्यापाराणान्निरर्गळत्वात् स्फुटाभिव्यक्तौ तस्य कथं न विवरणमित्यत उक्तं विनयेत्यादि । तथा

विदू—किण्णु खु सा दिट्ठमत्तस्स तुह अंकं आरुहदि । (किन्तु खलु सा दृष्टमात्रस्य तवाङ्कमारोहति)

राजा—मिथःप्रस्थाने पुनः शालीनयापि काममाविष्कृतो भावस्तत्रभवत्या मयि ॥

---

च विनयेन वारणान्न स्फुटाभिव्यक्तिः । तर्हि संवरणमेव कुतो नासीदिति शङ्कामपनेतुमन्वर्थको मदनशब्द उपात्तः । अथवा निसर्गादेवेत्यादावप्रागल्भ्योक्त्या तत्कार्यं दृष्टावनुरागानाविष्करणं गम्यते । तपस्विकन्याजन इति सामान्योक्तिरिति द्वेधाप्रस्तुतप्रशंसा । सा दृष्टावनुरागं न स्फुटं प्रकाशितवतीत्यर्थः । तथापि तु तथापि विशेषोऽभूदित्यर्थः । तमाहाभिमुख इत्यादि । अत्र पूर्वार्द्धेन गूढवीक्षणं गूढहासश्च रागानुभावावुक्तौ । तौ संवरणाभावे हेतुः । विनयेत्यादि च गूढदृष्टिहासातिरिक्ता न स्फुटाभिव्यक्ता इति न संवृत इत्यत्र हेतुरिति बोध्यम् । अत्र काव्यलिङ्गमन्त्यपादे विरोधाभासश्च । नायिकागतानामौत्सुक्यलज्जाहर्षाणां शबलता ध्वन्यते । किञ्चात्र स्फुटास्फुटरूपेश्वरस्वरूपसमाधिः । आकारस्य विवृतत्वसंवृतत्वप्रतिपादनभेदसमाधिश्च ॥

रागस्य सम्यगनाविष्करणं त्वय्यविश्वासादिति नायकोद्धर्षणायाह किण्णु इत्यादि । दृष्टमात्रस्य तत्पूर्वं दृष्टस्य न तु परिचितस्य अत्राङ्कारोहणेन तद्धेतुर्विश्वासो गम्यते । सा किन्नु खल्वपरिचितं त्वां विश्वसितीत्यर्थः, त्वदीयहृदयाज्ञानादेव सा स्वानुरागन्न सम्यगाविष्कृतवतीति भावः । अत्र कार्यनिबन्धनाप्रस्तुतप्रशंसा । अथ त्वदुक्तं सत्यं यतो मयि परिचिते तया रागः सम्यगाविष्कृत इति हृद्यन्नाह मिथ इत्यादि । मिथः रहसि । उपविश्येत्यर्थात् । कञ्चित्कालं मया सहोपविश्य मदभिप्रायमाकारेणावगम्ये-

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥

---

ति भावः । प्रस्थाने सखीभ्यां सहाश्रमगमनोपक्रमे । पुनः पश्चात् । पुनरिति विशेषे वा । शालीनया लज्जितया । अपीति विरोधे । अत्र लज्जाकार्यरूपभावगोपनमधःकृत्य भावाविष्करणरूपस्वकार्यप्रकाशनेन लज्जाया अप्यौत्सुक्यस्य प्राबल्यमपिशब्देन द्योत्यते । कामं पर्याप्तम् । भावोऽनुरागः । तत्रभवत्येति भावाविष्करणात् प्रशंसागर्भम् । आविष्करणस्य बुद्धिपूर्वकत्वं तत्कर्तृत्वोक्त्या प्रतीयते । केचित्तु न मदनो विवृतो न च संवृत इत्युक्ते तुष्टस्यापि नायकस्योक्तिभेदेनापरितोषमाशङ्क्य सोपहासमाह किण्णु इत्यादि । किन्न्विति प्रश्ने । नारोहतीति पाठः । आरोहत्येवेत्यर्थः, अङ्कारोहणेन भावाविष्कारो लक्ष्यते । शालीनया तया किमतः परं भावाविष्करणं शक्यमिति भावः । मयाप्येतदेवोक्तमथान्यदप्यनुभूतचरं हृदयसंवादि चेष्टितं ते कथयामीत्याह मिथ इत्यादि । मिथः अन्योन्यं मम तस्याश्च प्रस्थान इत्यर्थः । यद्वा मिथः गूढं सखीभ्यामप्यविदितम् । आविष्कृतमित्यत्र संबध्नाति । शेषं पूर्ववदित्याहुः । भावाविष्करणप्रकारमाह दर्भेत्यादि । दर्भाङ्कुरेण अत्राङ्कुरपदेन सूक्ष्ममग्रं लक्ष्यते । सूचिवद् व्यथाकारित्वं व्यङ्ग्यम् । चरण इति सौकुमार्यलौहित्याद्यतिशयशालीत्यर्थान्तरसंक्रमितम् । तात्कालिकान्वर्थं च । इति इत्युक्त्वा । इतीति हेतौ । एवं हेतुमभिनीयेत्यर्थो वा । अकाण्डे अनवसरे दर्भाङ्कुररहितेऽपि मार्ग इत्यर्थः । तन्वीति विरहारम्भ एव तस्या

विदू—जइ एव्वं गहिअपाहेओ ओसि किदं तुए अणुपसग्गं त-

---

विशेषतोऽपि तानवमासीदिति सूचयति । पारवश्यनटनस्य पारमार्थ्यप्रतिपादनं च । स्थिता दर्भाङ्कुरोद्धरणव्याजेन गतिन्निवर्तितवती । कर्तृप्रत्ययेन पूर्ववद् बुद्धिपूर्वकत्वं स्थितेर्द्योत्यते । कतिचिदेव द्वित्राण्येव न तु पञ्चषाणीत्यनेनौत्सुक्येन त्वरा सूच्यते । पुनरपि तद्व्याजाङ्गीकारसौकर्यं च । पदानि पदप्राप्यस्थानानीत्यध्ववाचकत्वादत्यन्तसंयोगे द्वितीया । तेन गमनस्यानीप्सितत्वं च । विवृत्तवदना वदनं विवृत्य विलोकितवती । वक्ष्यति च "दृष्टो विवृत्य बहुश" इति । उद्यतेऽनेनेति वदनमित्यन्वर्थेन वचनोद्यमोऽपि द्योत्यते । विमोचयन्ती मन्दं मोचनव्यापारन्नाटयन्ती । अनेन वल्कलस्य भेदनादिपरिहाराय प्रयत्नं द्योतयता विलम्बस्य संङ्गतत्वं सूच्यते । हेतौ शता । शाखासु बहुवचनेन विमोचनव्यापारस्य दृष्टिपथातिक्रमणावधिकत्वं व्यज्यते । वल्कलं काठिन्यं द्योतयतानेन गात्रे क्षौमादिवदसंश्लेषाच्छ खासङ्गस्योपपत्तिः सूच्यते । असक्तमपीति विरोधे । द्रुमाणां बालवृक्षाणाम् । अत्र तन्वी तथा स्थिता विवृत्तवदना चासीदिति संबन्धः । तथास्थितिर्दर्शनं च रागानुभावौ । तदुक्तं "विलम्बस्तु पथि व्याजात् परावृत्यापि दर्शन"मिति । अकाण्डे असक्तमपीत्याभ्यां भावाविष्करणं स्फुटीकृतम् । सव्याजं विलम्ब्य निष्क्रान्तेति पूर्वोक्तमनुसंहितम् । अत्र विभावना भाविकं च स्फुटम् । नायिकागता लज्जौत्सुक्यादयः तथा नायिकायास्तद्व्यापारेणाहो स्त्रीणामशिक्षितपटुत्वमिति राज्ञो विस्मयश्च व्यज्यन्ते ॥

अथ राज्ञोक्तमनूद्यानन्तरकर्तव्यं भङ्ग्या उपदिशति जइ इत्यादि । यद्येवं भावः काममाविष्कृतश्चेत् । गृहीतपाथेयः

पोवणं ति पेक्खामि । (यद्येवं गृहीतपाथेयो भवसि । कृतं त्वयानुपसर्गं तपोवनमिति पश्यामि)

राजा—सखे! तपस्विभिः कैश्चित् परिज्ञातोऽस्मि । चिन्तय तावत् केनापदेशेन सकृदप्याश्रमे वसामः ॥

---

पाथेयपदेनाश्वाससाधनत्वात् प्रेमा लक्ष्यते । लाभपर्यन्तमनुपक्षीणता व्यज्यते । यथा किराते । "अकृत्रिमप्रेमरसाभिरामं रामार्पितं दृष्टिविलोभि दृष्टम् । मनःप्रसादाञ्जलिना निकामं जग्राह पाथेयमिवेन्द्रसूनु"रिति । तत्प्रेमरूपाश्वाससाधनं लब्धवानित्यर्थः । उक्तं च "मनस्तु तद्भावदर्शनाश्वासी"ति । कृतमित्यादि । उपसर्ग उपद्रवः । अत्रानुपसर्गकरणेन तत्कारणं निवासो गम्यते । यावत् कण्वागमनमत्रैव निवत्स्यसीति तर्कयामीत्यर्थः । एतदेव त्वयेदानीं कार्यमिति भावः । तत्रोपरोधं सविषादमाह सख इत्यादि । परिज्ञातः मृगयार्थमागतो दुष्यन्तस्तपोवनमागत इति । अतो राजभावमाच्छाद्य वासो न कर्तुं शक्यः । तं प्रकाश्य वृथा वासश्चानुचित इति भावः । अत आह चिन्तयेत्यादि । सख इति संबुद्धिरस्यामवस्थायां मदीययोगक्षेमचिन्ता त्वदायत्ता इति द्योतयति । चिन्तयेत्यनेन तस्य बुद्धिकौशलं स्वस्योपायाप्रतिभानं च सूच्यते । तावच्छब्दः संभ्रमे । अपदेशेन व्याजेन निमित्तेन वा । 'अपदेशस्तु लक्ष्ये स्यान्निमित्तव्याजयोरपी'ति यादवः । सकृदपीति सोऽपि महान् लाभ इति भावः । चिन्तयन्नाह को इत्यादि । कोऽपरोऽपदेशः न कोपीत्यर्थः । कस्मादपर इत्यत्राह त्वमित्यादि । राजेत्यनेन षड्भागार्हत्वमुक्तम् । "राजा हि फलषड्भागन्तस्मादाप्नोति रक्षिता"-दिति स्मृतेः । नीवारषड्भागं षष्ठो भागः षड्भागः । संख्याशब्दो वृत्तिविषये पूरणार्थः । यथा । "त्रिभागशेषासु निशास्वि"-

विदू— को अवरो अवदेशो तुवं राआ । णीवारच्छब्भाअं मे तावसा उवहरंतु त्ति । (कोऽपरोऽपदेशः । त्वं राजा नीवारषड्भागम्मे तापसा उपहरन्त्विति)

---

त्यादि । इतीति प्रकारे । नीवारषड्भागानुपहरतेति तापसान् नियुञ्जानोऽत्र निवसेति भावः । अत्र केचित् सुधियः । तेन हि लघु परिज्ञायतामित्यादेरियत्पर्यन्तस्य ग्रन्थस्य भावमन्यथापि प्राहुः । तथा हि । अथ राज्ञो निर्बन्धमालक्ष्य अनिवार्यत्वबुद्ध्या तदनुसरणव्याजेन नगरगमनाय त्वरयति तेन हीत्यादि । अथ परवतीत्याद्युत्तरेण लघुपरिग्रहरूपस्य नगरगमनोपायस्य दुस्साधत्वमवगत्य तस्या रागाभावे तदुपायेनैनं निवर्त्य नगरगमनं साधयेयमिति मन्वानः पृच्छत्यथ तत्रभवन्तमित्यादि । अथाप्रगल्भापि सा मय्यनुरागिण्येवेत्याह निसर्गादित्यादिना संवृत इत्यन्तेन । अथ स्निग्धं वीक्षितमित्यादिन्यायेनान स्थामङ्गीकुर्वंस्तस्यानुरागप्रत्याख्यानतात्पर्येण सपरिहासमाह किन्त्वित्यादि । किन्तु कुतो वा नारोहतीति पाठः; तस्या अनुरागश्चेत्तदपि कर्तव्यमेवेति परिहासोक्तिः । अङ्कारोहणेनाङ्गीकारो लक्ष्यते । त्वद्दर्शनस्य दुर्लभत्वात् कथञ्चिद्दैवगत्या लब्धं त्वां कुतो नाङ्गीकृतवतीत्यर्थः । अथ सा मामङ्गीकृतवतीत्याह मिथ इत्यादि । भावाविष्करणेनाङ्गीकार उक्तः । अथ गत्यन्तरमपश्यन् परिहासभाजनं जातोऽस्मीति सूचयन्निर्विण्णः सोपालम्भमाह यद्येवमित्यादि । एवं गृहीतपाथेयो भवसि यदीति संबन्धः । अनुपसर्गमनुपसर्जनं प्रधानमिति यावत् । महाराजो दुष्यन्तः शकुन्तलार्थमाश्रमपद एव तिष्ठतीति जनैर्हास्यसे । अत्रैव तिष्ठसि नगरं न गच्छसीति भावः । अथात्र सर्वदा न निवसामीत्याह सख इत्यादि । संबुद्धिरनुनयार्था । सकृदित्यनेन नित्यत्वं परिहरन् विदूषकसाध्यं

राजा—मूर्ख! अन्यद्भागधेयमेतेषां रक्षणे निपतति । यद्रत्नराशीनपि विहायाभिनन्द्यम् । पश्य ॥

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत् फलम् ।
तपष्षड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥

---

नगरगमनमनुरुन्धे । सकृदित्युक्त्या संजातहर्ष उपायमुपदिशति कोऽपर इत्यादीति ॥

नायमुपायो युज्यत इत्याह मूर्खेत्यादि । मूर्ख विशेषानभिज्ञ । कुत एतदित्याह अन्यदित्यादि । अन्यत् नीवारषड्भागातिरिक्तम् । भागधेयं भाग्यम् । यद्वा भाग एव भागधेयं स्वार्थे धेयप्रत्ययः । यथा । श्रीभागवते "तुष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् । तदा स्वभागधेयानि ग्रहीष्यन्ति दिवौकस" इति । रघावपि "नीवारभागधेयोचितैर्मृगै"रिति । एतेषां तापसानाम् । रक्षणे तन्निमित्तम् । निपतति स्वयमेवायाति । निपततीत्यनेन तस्य पाणिनीयप्रसिद्धर्स्विगादिवर्तिनिपातसाम्यं तेनायत्नलभ्यत्वं बहुविधयोगदुर्घटत्वं च द्योत्यते । तद्भागस्याधिक्यमाह यदिति रत्नराशीन् वर्णेभ्य उत्तिष्ठत इत्यर्थात् । "रत्नं स्वजातिश्रेष्ठेऽपी"त्यमरः । अपीति तेषामुत्कर्षं दर्शयन् विहानायोग्यत्वं द्योतयति । अथ तेषां विहानहेतुं निकर्षमन्यस्य भाग्यस्य स्वरूपमभिनन्दनहेतुमुत्कर्षं चाह यदित्यादि । यद् धान्यषड्भागहिरण्यदशभागादि मन्वादिनिर्दिष्टम् । उत्तिष्ठति । अनेन तत्प्राप्तेरुत्थानरूपपौरुषापेक्षत्वं द्योत्यते । वर्णेभ्यः ब्राह्मणादिभ्यः । नृपाणामित्यन्वर्थं तेषामेव फललाभ इति द्योतयति । क्षयि उपभोगादिना क्षयशीलम् । यथोक्तं श्रीरामायणे "सर्वे क्षयान्ता निचया" इति । तपष्षड्भागं तद्रूपं स्वर्गापवर्गप्रदं सुकृतम् । अक्षय्यं अशक्यक्षयम् । ददतीत्यनेनायत्नलभ्यत्वं द्योत्यते ।

(नैपथ्ये)

हन्त सिद्धार्थौ स्वः ।

राजा—(कर्णं दत्वा) अये धीरप्रशान्तः स्वनः । पतस्त्रिभिर्भवितव्यम् ॥

(प्रविश्य)

दौवारिकः— जअदु जअदु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा । (जयतु जयतु भर्ता । एतौ द्वावृषिकुमारौ प्रतिहारभूमिमुपस्थितौ)

राजा—तेन ह्यविलम्बितं प्रवेशय तौ ॥

दौवा— अअं पवेसेमि । (अयं प्रवेशयामि)

---

हीति प्रसिद्धौ । अतस्त्वं मूर्ख इति । यतो ददाति ततस्त्वदुक्तं न युक्तमिति भावः । अनेन तापसरक्षाया अवश्यकर्तव्यत्वं च दर्शितम । इदं वक्ष्यमाणोपयोगि । आरण्यका इत्यनेन वक्ष्यमाणमुनिकुमारप्रवेशश्च सूच्यते । अत्र क्षय्यत्यादिना द्वयोर्भागयोर्व्यतिरेकवर्णनाद्व्यतिरेकः । नृपाणामिति न इति च सामान्योक्तिश्च ॥

अथ नायकाभिप्रायानुगुणं सूचितं प्रकरणान्तरमारभते नैपथ्य इति । अथ तपोवनप्रत्यासन्नं राजानमाकर्ण्य यज्ञरक्षां प्रार्थयतामिति गुरुभिरादिष्टौ तद्दर्शनोत्सुकावृषिकुमारौ सहर्षमाहतुर्हन्तेत्यादि । हन्तेति हर्षे । तत्र हेतुः सिद्धार्थाविति कृतकृत्यावित्यर्थः । तत्त्वं परमधार्मिकस्य राजर्षेर्झटिति संदर्शनादिसम्भावनया । यद्वा किञ्चिदुच्चैरुक्तस्य राज्ञः पूर्ववाक्यस्य द्वारागमनकाले श्रवणात्तस्य मुनिजनेषु भक्तिबहुमानादिज्ञानेन स्वकार्यसिद्धिं निश्चित्य हृष्टावाहतुः सिद्धार्थाविति । लब्धकार्यावित्यर्थः । अये इत्यादि । अये इति स्मरणे । धीरो धैर्यव्यञ्जकः । यद्वा गम्भीरः । प्रशान्तः प्रशमद्योतकः । प्राकृतानामविनीतानां च स्वनो नेदृश इति भावः । अत आह

(निष्क्राम्य ताभ्यां सह प्रविश्य)

इदो इदो भवन्तो । (इत इतो भवन्तौ)

उभौ—(राजानं विलोकयतः)

**प्रथमः—अहो दीप्तिमतोऽपि विश्वसनीयता वपुषः । अथवा उपपन्नमेतदृषिभ्यो नातिभिन्ने राजनि । कुतः ॥**

---

तपस्विभिरिति । एवंविधस्त्वनेनैते तपस्विनोऽनुमीयन्त इत्यर्थः । प्रविश्य दौवारिक इति । संभावितार्थनिर्णयार्थम् । प्रतीहारभूमिद्वारम् । तेन हीत्यादि भक्त्यादिद्योतकम् । विलम्बे तयोरनादरशङ्का स्यादित्यविलम्बितमिति । राजानं विलोकयत इति तिङन्तेनोक्तिर्दर्शनस्य प्राधान्यं द्योतयति । तत्तु वक्ष्यमाणवर्णनोपयोगि ॥

प्रथम इति । प्राथम्यं प्रवेशक्रमेण । तयोरेक इत्यर्थः । अथ राज्ञि मुनिसाधारणीमवस्थामवेक्ष्य विस्मयमान आहाहो इत्यादि । परेषामनभिभवनीयताप्रतीतिहेतुस्तेजोविशेषो दीप्तिः तद्वतः । अपीति विरोधे । विश्वसनीयता प्रसन्नत्वम् । दीप्तिरधृष्यत्वस्य विश्वसनीयताभिगम्यत्वस्य गुण इत्याभ्यां ते दर्शिते । अहो एवं राजान्तरेष्वदृष्टपूर्वत्वाद्विस्मयः । अथवेति । नेदमद्भुतमित्यर्थः । कुत इत्यत्राहोपपन्नमिति । उपपन्नं युक्तम् । नातिभिन्ने अत्यन्तभेदरहित इति हेतुगर्भम् । राजनीत्यन्वर्थम् । नातिभिन्नत्वमुपपादयत्यध्याक्रान्तेत्यादि । अध्याक्रान्ता स्वीकृता । वसतिर्वासः । अमुना राज्ञा । अपीति ऋषीणां समुच्चये । ऋषिवदमुनापीत्यर्थः । एवमुत्तरत्रापि । सर्वभोग्ये सर्वैराश्रमिभिर्भोग्ये आश्रमे । गृहस्थाश्रम इत्यर्थः । यदुक्तम् । "यथा मात-

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १४ ॥

---

स्माश्रित्य सर्वे जीवन्ति जन्तवः । वर्तन्ते गृहिणस्तद्वदाश्रित्ये-
तर आश्रमा" इति । "गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्ति-
ही"ति मनुश्च । यद्वा सर्वाणि भोग्यानि रत्नादीनि यस्मिन् । स-
र्वैराश्रमिभिर्वर्णैश्च भोग्य इति वा । आश्रमे राज्याश्रम इत्यर्थः ।
यथा रघौ । "पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनि"रिति ।
ऋषिवदसावप्याश्रमवासीत्यर्थः । तद्वासफलमाह रक्षेति । रक्षैव
योग उपायः, रक्षाया योग उद्योगो वा तस्मात् । तपः षष्ठांशं
सुकृतम् । यथोक्तं "तपःषड्भागमक्षय्य"मिति । "पुण्यात् षड्भा-
गमादत्ते न्यायेन परिपालय"न्निति याज्ञवल्क्यश्च । राज्ञां वर्णाश्र-
मरक्षणं तप इति श्रवणात् तद्रूपं तप इति वा । प्रत्यहं, अने-
न कदापि कश्चित् क्षयो नास्तीति सूच्यते । एवं तपःसञ्चये-
न वसिष्ठविश्वामित्रादिवदस्य लोकोत्तरं यशः प्रथितमित्याहास्या-
पीति । द्यां स्वर्गम् । स्पृशति स्पृशतिना व्याप्तिर्लक्ष्यते । फलं
च संबन्धप्रतीतिः । वशिनो जितेन्द्रियस्येति तथाविधमुनित्वसं-
पादननिमित्तम् । वशित्वमेव राज्ञः प्रजानुरञ्जनधर्मसंग्रहकीर्तिसं-
पादनोपाय इति च द्योतयति । कथं द्योस्पर्शनमित्यत्राह चा-
रणेति । चारणानां द्वन्द्वैः मिथुनैः गीतो गीयमानः । द्वन्द्वगीत
इत्यनेन गानस्य सुस्वरत्वात् स्वरसतः प्रवृत्तत्वं विनोदगोष्ठ्यादाव-
प्येतदेव गेयमिति च द्योत्यते । गीत इत्यनेन पद्यबन्धसमर्पितत्वं
च । वक्ष्यति च "विविधैरभिशेषैः सुरसुन्दरीणा"मित्यादि । पुण्यः

द्वितीयः—अयं स वलभित्सखः पार्थिवो दुष्यन्तः ॥

प्रथमः—अथ किम् ॥

द्वितीयः—तेन हि ॥

---

मन्त्रवत् पुण्यकरः । शब्द इति शब्दस्यैवैतावन्माहात्म्यमिति सूचयति । मुहुरिति गीत इत्यत्रान्वेति । तेन तस्य नवनवत्वं द्योत्यते । स्पृशतीत्यत्र संबन्ध इति केचित् । केवलं राजपूर्वः राजोपपदमात्रभिन्नः । वशिनोऽस्यापि पुण्यः राजपूर्वः केवलं मुनिरिति शब्दः मुहुश्चारणद्वन्द्वगीतः द्यां स्पृशतीत्यन्वयः । आश्रमे वासात्तपःसञ्चयान्मुनिशब्दाच्च हेतोरृषिभ्योऽभेदेऽपि आश्रमस्य सर्वभोग्यत्वात्तपस्सञ्चयस्य रक्षायोगहेतुकत्वान्मुनिशब्दस्य राजपूर्वकत्वाच्च भेद इति नातिभिन्नत्वमिति भावः । केचित्तु मुनिपक्षे सर्वैः प्राणिभिर्भोग्ये आश्रमे धर्मारण्ये रक्षायोगात् राज्ञो रक्षायोगात्, यद्वा रक्षार्थः शरीररक्षार्थो योगोऽष्टाङ्गरूपस्तस्मात् शेषं पूर्ववत् । इति तथाविधाश्रमवासतपःसञ्चयाभ्यामभेदेऽपि मुनिशब्दस्य राजपूर्वकत्वाद्भेद इत्यर्थ इत्याहुः । अनेन मुनिष्विवास्मिन्नपि सविस्रम्भोपगमनसंदर्शनसंभाषणौचित्यमस्तीत्यासूच्यते । अत्र व्यतिरेकः काव्यलिङ्गं च । राज्ञो धर्मोत्साहप्रतीतेर्वीरस्तदुपस्कृतो हर्षो विस्मयश्च मुनिगतो भावो व्यज्यते । तदुपस्कृतो राजविषयको रतिभावः प्राधान्येन व्यङ्ग्यः । अद्यापीति पाठे भूमिगतत्वेऽपीत्यर्थः, द्यामपीति संबन्धो वा ॥

अथ चारणद्वन्द्वगीतकीर्तिश्रवमाकर्ण्य सप्रत्यभिज्ञः सविस्मयं पृच्छन्नाह अयमित्यादि । काका प्रश्नः । स प्रसिद्धः । बलभिद इन्द्रस्य सखा दुर्जयदानवहननादौ साहाय्यकरणान्मित्रभूतः । बलभिद्विशेषेणेन्द्रस्य विक्रमशालित्वं [illegible] राज्ञस्ततोऽपि तस्या-

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुरयुवतयः सक्तवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १५ ॥

---

तिशयः तथा धर्मविजयित्वं च द्योत्यते । पार्थिव इत्यनेन पृथि-व्या विस्तारं द्योतयता चक्रवर्तित्वं तेन प्रभुशक्तिसम्पन्नत्वं दुष्यन्त इति नामनिर्देशेन तत्तदीप्सिताचरणान्मुनीनामपि वात्सल्यं च द्यो-त्यते । वलभित्सख इति सप्तमाङ्कवक्ष्यमाणबीजम् । अथ किमित्य-नुवादे । अथ द्वितीयः प्रथमोक्तिशेषतया राज्ञः क्षात्रं वर्णयति तेन हि नैतदित्यादि । एतद्वक्ष्यमाणम् । सामान्यतश्चित्रत्वेऽप्येतदेत-द्विषये चित्रं नेत्यर्थः । एतत्पदार्थं विवृणोति यदित्यादि । उदधिरित्यन्वर्थं श्यामत्वोपपादकम् । स एव श्यामा सीमा पर्य-न्तो यस्यास्तां निश्शेषामित्यर्थः । अनेन तस्य मण्डलनाभित्व-मुक्तम् । अत एवाहैक इति । अनन्यभूपालोऽसहायश्चेत्यर्थः । अत्र हेतुमाह नगरेति । नगरस्य परिघोऽर्गलः । नगरपदेन तस्य दैर्घ्यं द्योत्यते । "परिघो योगभेदेऽस्त्रे मुद्गरेऽर्गलघात-यो"रिति विश्वः । यथा "पुरार्गलादीर्घभुजो बुभोजे"ति । परिघ आयुधविशेष इति केचित् । तद्वत् प्रांशू उन्नतावित्युपम-या वैरिजयसामर्थ्यादिकं द्योत्यते, बाहू यस्य । धरित्रीमिति विश्व-विभवयोगादन्वर्थम् । कृत्स्नामित्यनेन स्वमण्डलमिव परमण्डलान्य-प्यभेदेन साधु रक्षतीति द्योत्यते । भुनक्ति रक्षति । भुजोऽनवन इत्यात्मनेपदनियमादस्य धर्मप्रधानत्वेन पालन एव कृत्यबुद्धिरभ्य-वहारस्त्वानुषङ्गिक इति ध्वन्यते । कुत एतन्न चित्रमित्यत्राहाशं-सन्त इति आशंसन्ते प्रार्थयन्ति । यदुक्तम् । "आशंसते स्वा-

उभौ—(उपगम्य) विजयस्व राजन्!

---

दिच्छायां संशतीति स्तुतौ भवेत् । हिंसायां शसतीच्छायामाशास्ते शास्ति शासन" इति । सुरयुवतयः सुराणां वीराभिमानित्वात्तद्युवतीनामेवाशंसेति भावः । स्वभर्तृविरोधादपि स्वदूषणस्यासह्यत्वात्तदाशंसेति केचित् । सुरसमितय इति पाठे सुरसमाजा इत्यर्थः । आशंसायां हेतुमाह सक्तेत्यादि । सक्तवैरा बद्धद्वेषाः । हीति हेतौ । दैत्यैरित्यन्वर्थेन वैरस्य नैसर्गिकत्वं द्योत्यते । आधिज्य इति तदेवापेक्षितमिति भावः । यद्वा आशंसन्ते निश्चिन्वन्ति । यथा रघौ "विजयाशंसा चाप" इति । सक्तवैराः प्रसक्तद्वेषाः परिभूता इत्यर्थः । अत्रोपमा काव्यलिङ्गं धनुर्वज्रयोर्विजयाशंसाविषयत्वरूपैकधर्मान्वयात्तुल्ययोगिता च । तया धनुर्वज्रयोस्तद्द्वारा राजपुरुहूतयोश्च साम्यं व्यज्यते । पूर्वं धनुष्याशंसनमव्यभिचारेण कार्यसम्पादनादित्यनेन धनुषः प्राधान्यं पश्चान्निर्देशचकाराभ्यां वज्रस्याप्राधान्यं च द्योत्यत इति तद्द्वारा पुरुहूतापेक्षया राज्ञश्चोत्कर्षप्रतीतेर्व्यतिरेको ध्वन्यते । केचित्तु चकारः समुच्चये । अत्राशंसाविषयत्वेन वज्रधनुषोरिन्द्रनायकयोश्चोपमानोपमेयभावः प्रतीयते, न तु व्यतिरेकोऽपि । एवं वलभित्सख इत्यत्रापीत्याहुः । अत्र राज्ञो युद्धवीरत्वप्रतीतेर्वीरो रसस्तदुपस्कृतो विस्मयः प्राधान्येन व्यज्यमानां राजरतिमुपस्करोति । अत्र मुनिकुमारयोरेवं वर्णनेन गुणाभिनन्दनरूपसत्त्वभावो नायकस्य गुणविशेषश्च दर्शितः । स्वार्थसिद्ध्यनुगुणमप्येतद्वर्णनमिति केचित् ॥

विजयस्वेत्याद्याचारः । विजयसामान्यविवक्षया अकर्मकत्वम् । राजन्निरूनेन स्वसंबन्धं सूचयता विजयफलमुन्मीलितम् । इदं नरपमाणराक्षसवधोपयोगि । आसनादुत्थायेत्या-

राजा— (आसनादुत्थाय) अभिवादये भवन्तौ ॥

उभौ—स्वस्ति भवते । (फलान्युपहरतः)

राजा—(सप्रणामं प्रतिगृह्य) आज्ञापयितुमिच्छामि ॥

उभौ—विदितो भवानाश्रमवासिनामिहस्थः । तेन भवन्तं प्रार्थयन्ते ॥

राजा—किमाज्ञापयन्ति ॥

---

दरातिशयं द्योतयति । अभीत्याद्यपि आचारः । फलान्युपहरत इति ॥ "देवो राजा गुरुर्भार्या वैद्यो नक्षत्रपाठकः । रिक्तपाणिर्न गन्तव्यस्तत्र कार्यं न सिध्यती"त्युक्तेः । अनेन कार्यार्थित्वं च व्यज्यते । सप्रणाममिति भृत्यादेरुपहारवन्न तेषु प्रतीतिः । किन्तु गौरवबुद्धिरेवेत्यनेन प्रतीयते । प्रतिगृह्य हस्तेन परिग्रहं भावयित्वा । आज्ञापयितुमिच्छामीति । आत्मानं भवद्भ्यामिति शेष इति न तुमुनोऽनुपपत्तिरिति केचित् । आज्ञापनां प्रयोजयितुमित्यर्थ इत्यन्ये ; आज्ञापयितुमाज्ञां श्रोतुमित्यपरे । कार्यं विज्ञापयतो विदित इत्यादि । विदित इति वर्तमाने क्तः । अनेन भो भो इत्यादि पूर्वोपक्षिप्तमनुसंहितम् । प्रार्थयन्ते न त्वाज्ञापयन्तीत्यनेन राज्ञि बहुमानादयो द्योत्यन्ते । आश्रमवासिन इति विपरिणामः । एतेन तन्नियोगादावयोरागमनमिति दर्शितम् । किमाज्ञापयन्तीति पूर्ववद् बहुमानादिद्योतकम् । प्रार्थनाप्रकारमाहतुस्तत्रेत्यादि । विशेषणाभ्यां कण्वस्य प्रभावस्तेन तत्सान्निधाने विघ्नोत्पादनाभावश्च व्यज्येते । असान्निध्यादिति । वैखानसोक्तमनेनानुसंदधाति । इष्टिः यागः ; कतिपयरात्रमित्यत्यन्तसंयोगे द्वितीया । इष्टिदिवसानां रात्रिप्राधान्येन व्यवहारादेवमुक्तम् । यथा पञ्चरात्रं दशरात्रमित्यादि । किञ्च रात्रिशब्दस्तत्काले रक्षोभय-

उभौ—तत्रभवतः कण्वस्य महर्षेरसान्निध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ॥

राजा—अनुगृहीतोऽस्मि ॥

विदू—(अपवार्य) इअं दाणीं दे अणऊलअरा अब्भत्थणा । (इयमिदानीं तेऽनुकूलतराभ्यर्थना)

राजा—(सस्मितम्) रैवतक! मद्वचनादुच्यतां सारथिः । सबाणकार्मुकं रथमुपस्थापयेति ॥

दौवा—जं देवो आणवेदि ॥ (यद्देव आज्ञापयति) (निष्क्रान्तः)

---

बाहुल्यं द्योतयति । "कतिपयदिवसैः क्षयं प्रयायात्" "कतिपयदिवसस्थायिनी यौवनश्री" रित्यादिवत् कतिपयपदस्य परनिपाताभावेऽपि साधुत्वम् । सारथिद्वितीयेनेत्यनन्यापेक्षित्वं द्योतयता पूर्वोपवर्णितस्तत्प्रभावो द्योत्यते । नाथेन रक्षिता सहितः सनाथः । च्व्यर्थोऽविवक्षितः । अनुगृहीतोऽस्मीति । त्वहन्नियोगो ह्यभ्युदयहेतुत्वादनुग्रह इति स्वतपःप्रभावसाध्येऽप्यर्थे यदयन्नियोगः सोऽस्माकमनुग्रह एवेत्यर्थः । अनेन भङ्ग्या तदुक्तमङ्गीकृतम् । अत्रैतत्प्रार्थनायाः स्वाभिप्रेतानुगुणत्वादनुगृहीतोऽस्मीत्यर्थोऽपि प्रतीयते । अत एवेयमित्याद्यनुपदं वक्ष्यति ॥

इअं इत्यादि । इदानीमाश्रमवासोपायचिन्ताकाले । अनुकूलतरा अपदेशं विनापि वासोपायत्वात् । "अभ्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षण" मितिवदविलम्बेनाभीष्टसिद्धिर्भवेदित्यप्यनेन द्योत्यते । त इत्यनेन नगरगमनप्रतिबन्धकत्वान्न ममेति द्योत्यत इति केचित् । सस्मितमिति । स्वाभिप्रायस्य नर्मसचिवेन प्रका-

उभौ—(सहर्षम्)

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु पौरवाः खलु दीक्षिताः ॥ १६ ॥

राजा—गच्छतां पुरो भवन्तौ । अहमप्यनुपदमागत एव ।

उभौ—विजयस्व । (इति निष्क्रान्तौ)

---

शनात् स्मितम् । तदुत्तररूपोऽनुवादश्च । रैवतकेत्यादि मुन्युक्तानुष्ठानसम्भ्रमद्योतकम् । तद्वचनादिति विशेषप्रतिपत्त्यर्थम् ॥

सहर्षमिति । तद्वचनश्रवणं हर्षहेतुः । अत एवाभिनन्दतोऽनुकारिणीत्यादि । अनुकारिणि तुल्य इति हेतुगर्भम् । पूर्वेषां पूरुप्रभृतीनां कर्मणि षष्ठी । युक्तरूपं प्रशंसायां रूपप् । अथ पूर्वेषां स्वभावं विवृण्वन्नादावुक्तं समर्थयत आपन्नेत्यादि । आपन्ना इत्यनेनापदेवाभयप्रदानोपाधिः, न तु विषयभेद इति द्योत्यते । यथा । 'दत्तो दत्तमनोरथाधिकफलः कल्पद्रुमोऽप्यर्थिन' इत्यात्रार्थित्वमेव दाननिमित्तम् । तेषामभयान्यभयदानानि एव सत्राणि यागाः । सत्रत्वारोपेणावश्यकर्तव्यत्वं लोकोत्तरफलप्रसावकत्वमन्यदुष्करत्वं च व्यज्यते । तेषु विषये दीक्षिताः धृतव्रताः नित्योद्युक्ता इति यावत् । खल्विति प्रसिद्धौ । अत्राद्यार्द्धे काव्यलिङ्गमुत्तरार्धे रूपकानुप्राणितोऽर्थान्तरन्यासश्च । पूर्ववत् हर्षाद्युपस्कृता मुनिनिष्ठा राजरतिर्भावः । गच्छतामित्यादि यज्ञोपक्रमार्थं मुनिजननिवेदनार्थमिति भावः । पदस्य पश्चादनुपदमित्यव्ययीभावः पृष्ठत इत्यर्थः । आगत इति भूतत्वेन निर्देशो विलम्बाभावं द्योतयति । अत्र मुनिकुमारप्रवेशफलं स्पष्टम् ॥

राजा—माढव्यास्ति शकुन्तलादर्शने कुतूहलम् ॥

विदू—पुढमं सपरिवाहमासी । दाणिं रक्खसवुत्तन्तेण से विंदू वि णावसेदिदो। (प्रथमं सपरिवाहमासीत । इदानीं राक्षसवृत्तान्तेनास्य बिन्दुरपि नावशेषितः)

राजा—ननु मत्समीपे वर्तिष्यसे ।

विदू—एस रक्खसादो रक्खिदोह्मि । (एष राक्षसाद्रक्षितोऽस्मि)

(प्रविश्य)

दौवारिकः—देव सज्जोरहो भट्टिणो विजअपत्थाणं अपेक्खदि । एसो उण णअरादो देवीणं आणत्तिहरओ करभओ

---

अथ मुनिकुमारागमनेन प्रकृतकथायां विच्छिन्नायामवसरप्राप्तौ नायकस्तामेवानुसंदधानः समयोचितमाह माढव्येत्यादि । अस्तीत्यत्र काका प्रश्नः । अत्र मध्ये प्रशमनं मध्ये पुनरुद्दीपनं च प्रकृतरसस्य परिपोषकमेव । यथोक्तं ध्वनिकृता "उद्दीपनप्रशमने यथावसर"मित्यादि । पुढममित्यादि । कुतूहलमित्यनुषज्यते । प्रथमं चित्रेत्यादिवर्णनात् प्रभृत्येतदागमनपर्यन्तम् । सपरिवाहं जलवृद्धिवाचिना परिवाहपदेन वृद्धिर्लक्ष्यते । तदाधिक्यं व्यङ्ग्यम् । अस्य कुतूहलस्य । बिन्दुपदेनाल्पत्वं लक्ष्यते । तदतिशयो व्यङ्ग्यः । अत्र कुतूहलस्य जलसाम्यं राक्षसवृत्तान्तस्यातपसाम्यं च व्यज्यते । तेन तयोरानन्दत्रासकरत्वं च । अनेन वाक्येन नगरगमन एव कुतूहलमिति गूढाभिप्रायः प्रकाश्यत इति केचित् । अथ न भेतव्यमिति कारणमुखेनाह नन्वित्यादि । इयत्नर्मोक्तिः । विदूषकस्तदुक्तमनुवदन् सपरिहासमाह एसो इत्यादि ॥

प्रविश्य दौवारिक इत्यादि । प्रविश्येत्यनुष्ठानत्वरासूचकम् । सज्जः सन्नद्धः । अत्र रथ्यानामुत्साहो रथे उपचरितः । "पारि-

आअदो । (देव! सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामाज्ञाप्रहारकः करभक आगतः)

राजा—किमज्जुभिः प्रेषितः ॥

दौवा—अह किं । (अथ किं)

राजा—ननु प्रवेश्यताम् ॥

दौवा—तह । (तथा)

(निष्क्रम्य करभकेण सह प्रविश्य)

एसो भट्टा उपसप्पदु । (एष भर्ता उपसर्पतु)

करभकः—(उपेत्य) जअदु भट्टा देवी आणवेदि । आआमिणि चतुट्ठे दिअहे णिव्वुत्तपारणो मे उपवासो भविस्सदि । तहीं दीहाउणा अवस्सं संभावइदव्वं ति । (जयतु भर्ता । देवी आज्ञापयति । आगामिनि चतुर्थे दिवसे निर्वृत्तपारणो मे

प्रहारोहणबन्धनादौ यथानुकूल्यं तुरगोत्तमानाम् । राज्ञः शुभं स्या"-दित्यादिवचनेन निमित्तगुणाद्विजयस्य हस्तलब्धत्वं व्यङ्ग्यम् । अत एवाह विजयप्रस्थानमपेक्षत इति । किं च सज्जीकरणसौष्ठवेन गमनानुगुण्यं चानेन द्योत्यते । अथ नर्मसचिवविसर्जनोपायलाभाय प्रकरणान्तरमारभते । एसो इत्यादि । पुनःशब्देन रथारोहणकालक्षेपः सूच्यते । देवीनामम्बायाः । भृत्याचारात् पूज्यत्वाच्च बहुवचनम् । अत एव 'देवी'ति वक्ष्यति । आज्ञाप्रिया आज्ञा । तस्या हारक आनेता । करभकस्तन्नामा ॥

किमज्जुभिरित्यादि । अज्जुभिरम्बाभिः । पूर्ववद्बहुवचनम् । आज्ञाप्रकारमाह आआमिणीत्यादि । आगामिनि चतुर्थे अस्मादिनाच्चतुर्थे इत्यर्थः । उपवासो व्रतविशेषः । पारणा तदङ्गम् ।

उपवासो भविष्यति । तस्मिन् दीर्घायुषावश्यं सम्भावयितव्यमिति)

राजा— इतस्तपस्विजनकार्यमितो गुरुजनाज्ञा । द्वयमप्यनतिक्रमणीयं किमत्र प्रतिविधेयम् ॥

विदू— तिसंकु विअ अंतरा चिट्ठ । (त्रिशंकुरिवान्तरा तिष्ठ)

राजा— सत्यमाकुलीभूतोऽस्मि ॥

कृत्ययोर्भिन्नदेशत्वाद् द्वैधीभवति मे मनः ॥
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥ १७ ॥

---

दीर्घायुषेति वात्सल्यद्योतकं त्वयेत्यर्थे प्रौढिः । संभावयितव्यं संभावनं कर्तव्यम् । तच्च ब्राह्मणपूजादिः सत्कारः । तदर्थमागन्तव्यमिति भावः ॥

तदाकर्ण्य चिन्तयतीति इत्यादि । इतोऽत्र तपोवने । इतोऽन्यत्र नगर इत्यर्थः । आज्ञा आज्ञप्तं कार्यम् । अनतिक्रमणीयमिति निषेधमुखेनोक्तिरतिक्रमणस्य दोषत्वं सूचयति । अत्र तपस्विकार्यं गुरुजनाज्ञेत्याभ्यां द्वयोरवश्यानुष्ठेयत्वेन समप्राधान्यमित इत इत्याभ्यां युगपत्कर्तुमशक्यत्वं च व्यज्यते । तेन कर्तव्यमूढत्वं च । अत आह किमिति । किं कतरत् । अत्र अनयोः कार्ययोः । प्रतिविधेयमनुष्ठेयम् । यद्वा अत्र किं प्रतिविधेयं का प्रतिक्रिया । नर्मसचिवस्तच्छ्रुत्वा सपरिहासमाह तिसंकु इत्यादि । त्रिशङ्कुकथा रामायणादिप्रसिद्धा । अन्तरा मध्ये । युगपदनुष्ठानस्याशक्यत्वात्, एकतरानुष्ठानस्यानर्थत्वाच्चोभयत्रानुपयोगोऽसीति परिहासः । नायं परिहासावसर इत्याह । सत्यमित्यादि । आकुलीभूतः कव्यर्थो विवक्षितः आकुलीभूतोऽस्मीति यत् तत्सत्यमित्यर्थः । आकुलीभावं विवृणोति कृत्ययोरिति । भिन्नदेशत्वात्तपोवननगररूपदेशद्वयसा-

(विचिन्त्य) सखे! त्वमज्जुभिः पुत्र इव परिगृहीतः । ततो भवानितः प्रतिनिवृत्तो मे तपस्विकार्यव्यग्रतामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति ॥

विदू—ण खु मं रक्खोभीरुअं गणोसि । (न खलु मां रक्षोभीरुकं गणयसि)

राजा—(सस्मितम्) कथमेतद्भवति संभाव्यते ॥

---

ध्यत्वात् । द्वैधीभवति । द्वैधीभवनं प्रकृते युगपद्द्वयोः कर्तव्यत्वबुद्ध्या संशयः । स्रोतःपक्षे चोभयतो गमनम् । मन इत्यन्वर्थम् । उपमामाह पुर इत्यादि । पुर इति स्रोतःप्रभवशैलनिवृत्त्यर्थम् । प्रतिहतं ताडितं निरुद्धप्रवाहमिति यावत् । तथा सत् । तस्मादित्यर्थः । शैल इति शिलाः सन्त्यस्येत्यन्वर्थं प्रतिहननसामर्थ्यं द्योतयति । स्रोतोवहा नद्याः । अन्येभ्योऽपि दृश्यत इति कर्तरि विच् । इदमप्यन्वर्थं स्रोतसो महत्त्वं द्योतयति । तस्याल्पत्वे तत्रैव स्थितिः स्यान्न द्विधा गमनम् । उपमया द्वयोः कृत्ययोः समप्राधान्यमप्रतिविधेयत्वादिकं च द्योत्यते ॥

विचिन्त्येति प्रतिभागुणं द्योतयति । चिन्तितमाह सख इत्यादि । येन त्वं पुत्रवत् परिगृहीतस्ततसखित्वमद्य फलितमिति संबुद्ध्या द्योत्यते । पुत्रकृत्यमस्मत्कृत्यम् । का गतिरिति पूर्वं विदूषकेण चिन्तितस्य फलमनेन वाक्येन दर्शितम् । अथ नगरगमनोत्सुको नर्मसचिवस्तद्वचसा कृतार्थः सन् सपरिहासमाह ण खु इत्यादि । गणयसि अवगच्छसि । काका प्रश्नः । त्वन्नियोगेनैव गच्छामि न रक्षोभीरुत्वेनेति भावः । अनेनात्मनो रक्षोभयं स्थिरमेवेति द्योत्यते । अन्यथा तपस्विकार्यमात्मना राज्ञा गुरुजनाज्ञा च कर्तव्यमपि स्यादिति । किं च गमनानुज्ञया कृतार्थस्य वचन-

विदू--तेण हि जह राआणुएण गंतव्वं तह गच्छामि । (तेन हि यथा राजानुजेन गन्तव्यं तथा गच्छामि)

राजा--ननु तपोवनोपरोधः परिहरणीय इति सर्वानानुयात्रिकान् त्वया सह प्रस्थापयामि ॥

विदू--तेण हि जुवराओ दाणीं ह्मि संवुत्तो । (तेन हि युवराज इदानीमस्मि संवृत्तः)

राजा--(आत्मगतम्) चपलोऽयं वटुः । कदाचिदिमामस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत् । भवतु । एवं तावदेनं वक्ष्ये ।

---

मिदं विनोदप्रायमिति त्वया शकुन्तलादर्शनादिप्रसङ्गेनैवाहं नगराय प्रतिनिवृत्तः करिष्ये न तु मम तपोवनरक्षणासंभवादित्यपि प्रकाशयति । सस्मितमिति नर्मोक्तिः स्मितहेतुः । सबहुमानमाह कथमिति । एतद्रक्षोभीरुत्वम् । भवतीति गौरवद्योतकम् । कथं संभाव्यते नैवेत्यर्थः । मन्नियोगादेव गम्यत इत्यनुमतं तद्गम्यतामिति यावत् । न मया तव रक्षोभीरुत्वं संभाव्यते त्वमेव तत् प्रकाशयसीति नर्मोक्तिरर्थोयम् ॥

तदा संतुष्यन्नाह तेण हीत्यादि । तेन हि त्वत्प्रतिनिधित्वेन गमनमनुमतं चेत्तदेत्यर्थः । यथेत्यादि सपरिवारं मां प्रस्थापयेति भावः । अहमिव गच्छेत्याह । ननु तपोवनेत्यादि । अत्रानुयात्रिकाणामपि विसर्जनार्थमिदं कल्पितम् । प्रहृष्टो नर्मसाचिवः सचापलमाह तेणेत्यादि ॥

अथ नर्मसचिवस्य विसर्जने कंचिद्दोषमाशङ्कते चपल इत्यादि । चपलः अनवस्थितचित्तः । वटुरिति ब्राह्मणनिन्दायाम् । वाच्यावाच्यादिविवेकविधुर इत्यर्थः । विशेषणे हेतुगर्भे । इमां

(विदूषकं हस्ते गृहीत्वा) वयस्य! ऋषिगौरवादाश्रमं गच्छामि । न खलु सत्यमेव तापसकन्यकायां शकुन्तलायां ममाभिलाषः । पश्य ॥

क्व वयं क्व परोक्षमन्मथो मृगशावैः सममेधितो जनः ।
परिहासविजल्पितं सखे! परमार्थेन न गृह्यतां वचः ॥ १८ ॥

विदू—अह किं । (अथ किम्) (निष्क्रान्ताः सर्वे)

द्वितीयोऽङ्कः ॥

---

शकुन्तलाविषयिकाम् । कथयेत् संभावनायां लिङ् । अस्मद्वृत्तान्तप्रसङ्गेन कथयेदिति संभावयामीत्यर्थः । तथा सत्यदाक्षिण्यप्रसङ्गेन दोषः स्यादिति भावः । अथ तत्परिहारं विमृशन्नाह भवत्वित्यादि । भवतु तत्परिहारोपायो निश्चित इत्यर्थः । निश्चितमाहैवमित्यादि । एवं वक्ष्यमाणप्रकारेण । तावदद्येत्यनेनावसरविशेषे तत्त्वमपि वक्ष्यामीति द्योत्यते । हस्ते गृहीत्वेति । अनेन सख्यं व्यञ्जयन् रहस्यभेदशङ्कां निराकुर्वन् तमावर्जयति । अत एव वयस्येति । प्रसक्तं कारणान्तरं निषेधति न खल्वित्यादि । तापसकन्यकायामित्यभिलाषाभावे हेतुः । अभिलाषः अस्तीत्येतन्न खलु सत्यमेवेत्यर्थः । अभिलाषः न खलु नैव । सत्यमेवोक्तं सत्यमेवेत्यर्थ इति वा । अथ तापसकन्यकायामित्यनेन सूचितं तस्यामभिलाषस्यात्यन्तासंभाव्यत्वमाह क्वेत्यादि । वयमित्यनेन नागरिकत्वं द्योत्यते । परोक्षमन्मथ इत्यनेन तत्प्रतियोगितया ग्राम्यत्वं च । मनो मथ्नातीति मन्मथः । सोऽपि परोक्ष अप्रत्यक्षो यस्य । एतत्समर्थनायाह मृगेत्यादि । शावैः शिशुभिः । समं तुल्यम् । एधित इति कर्तरि, णिजन्तात् कर्मणि वा क्तः । जनः शकुन्तलारूपः । यद्वा वयमित्यनेन निसर्गतः संसर्गतश्च कामतन्त्रप्रावीण्यं जनविशेषणाभ्यां तदभावश्च क्रमेण व्यज्यते । समं सह । अत्र क्वेत्यधिकरणा-

क्षेपे । स चोभयत्रोपात्त उभयोरैकाधिकरण्यमाक्षिपति । वयं तादृशो जनश्चेत्युभयमेकस्मिन्नभिलाषरूपेऽधिकरणे कर्तृतया कर्मतया च नान्वेतीत्यर्थः । अतः परमार्थमेतदिति मा मंस्था इत्याह परीत्यादि । परिहासार्थं नर्मार्थं विजल्पितं विविधं सल्लपितम् । अत्र हेतुमाह सख इति । परमार्थेन प्रकृत्यादित्वात्तृतीया । गृह्यतां ज्ञायताम् । वचः पूर्वोक्तवचनजातम् । "न नर्मयुक्तं ह्यनृतं हिनस्ती"त्यादिवचनेन नर्मण्यनृतं न निषिद्धमिति भावः । अत्र विषमः परिकरश्चालङ्कारः । यद्यपि न वितथा परिहासकथास्वपीत्याद्याचारादनृतोक्तिर्न युक्ता तथापि धीरोदात्तत्वपरिपालनार्थं नायकेनैवमुपन्यस्तम् । गाम्भीर्यशैथिल्ये संजातेऽपि पुनः समाधानादिति । यद्वा न खलु सत्यमेवेत्यत्र ऋषिगौरवान्न खलु गच्छामि किन्तु सत्यमेव शकुन्तलायामभिलाषः अतस्तस्मादिति । यद्वा न खलु सत्यमेवेत्यस्यावृत्तिः । वक्ष्यमाणमिति शेषः । यद्वा परमार्थेनेत्यादेरावृत्तिः इति नानृतोक्तिः । नर्मसचिवस्तदनुवदति अह किमिति । अत्र देवीवृत्तान्तकल्पनं विदूषकविसर्जनाय । तच्च राज्ञो वक्ष्यमाणस्य नायिकासल्लापश्रवणादेर्गान्धर्वस्य चोपपत्त्यर्थम् । आनुयात्रिकाणामपि विसर्जनं तस्यातः परमवसराभावात् तैः प्रयोजनाभावात्तेषु कस्यापि शकुन्तलावृत्तान्तावगमो मा भूदिति च कल्पितम् । विदूषकं प्रति शकुन्तलावृत्तान्तगोपनकल्पनफलं षष्ठाङ्के स्फुटीभविष्यति । अत्राङ्के विदूषकस्य का गतिरित्यादौ निरूपणस्य फलं नगरगमनं साधु संघटितं नायकेन निरूपित आश्रमवासोपायश्च । परं तु कामं प्रियेत्यादिना निरूपितस्यानिर्वाहादनन्तराङ्के तद्घटनं साधु दर्शयिष्यत इत्यन्यदपि सहृदयैरालोचनीयमिति सर्वं शिवम् ॥

इति सारार्थदीपिकायां शाकुन्तलव्याख्यायां

द्वितीयोऽङ्कः ॥

# ॥ तृतीयोऽङ्कः ॥

( ततः प्रविशति कुशानादाय यजमानशिष्यः । )

शिष्यः— अहो महानुभावः पार्थिवो दुष्यन्तः । प्रविष्टमात्र एवाश्रमपदं तत्रभवति राजनि निरुपद्रवाणि नः कर्माणि प्रवृत्तानि ॥

---

अत्रादौ शिष्यस्य पश्चाद्राज्ञः ससखीजनायाः शकुन्तलाया गौतम्याश्च प्रवेशः । विप्रलम्भो रसः प्रधानम् । अन्यद्दृक्ष्यते । अथ कथासंघटनाय विष्कम्भमारभमाणः तापसप्रसङ्गेन सूचितस्य शिष्यस्य प्रवेशमाह तत इत्यादि । अथ शिष्यो यजमाननियोगेन दर्भान् विलूयाददानो यज्ञशालां व्रजन् मध्येमार्गं राज्ञः प्रभावं विचिन्तयन् विस्मयमान आहाहो इति । विस्मयविभावमाह महानुभाव इत्यादि । अनुभावः अनभिभवनीयताप्रतीतिहेतुस्तेजोविशेषः । 'अनुभावः प्रभावे च'त्यमरः । पार्थिव इत्यनेन प्रभुशक्तिसंपत् दुष्यन्त इति नाम्ना मुनीनां वात्सल्यातिरेकश्च द्योत्यते । अनुभावमहत्तां कार्यमुखेन साधयति प्रविष्टेत्यादि । प्रविष्टमात्र एव प्रवेशकाल एवेत्यर्थः । मात्रपदैवकाराभ्यां कालविलम्बाभावः प्रकाश्यते । आश्रमपदमेवेति वा संबन्धः, न तु विघ्नकारिसमीपमित्यनेन तदवलोकनादिविलम्बो नाभूदिति द्योत्यते । राजन्येवेत्यपि योऽयमसहायेऽपीत्यर्थः । आश्रमस्य पदं स्थानमिति विस्तारं द्योतयति । तत्रभवतीति प्रशंसागर्भम् । राजनीति दुष्टनिग्रहशिष्टानुरञ्जनं प्रतिपादयति । प्रवृत्तानि न तु प्रवर्तितानीत्यनेन स्वाभिप्रा-

का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।
हुङ्कारेणेव धनुषः स हि विघ्नानपोहति ॥ १ ॥

---

पितयागोपकरणानां मुनीनां यागोपक्रमस्य तदागमनप्रतिपादनं द्योत्यते । प्रविष्टमात्र इत्यनेनाहमप्यनुपदमागत इत्यनुसंहितम् । अत्र राज्ञः आश्रमप्राप्तिर्मुनीनां कर्मारम्भे रक्षसामागमनं तेषामुत्सारणेन यथावत् कर्मनिर्वृत्तिश्चेत्यतीतः कथांशो दर्शितः । क नु खल्वित्यादिना चायमनुवदिष्यते । कथं निरुपद्रवाणीत्यत्राह का कथेति । बाणसंधाने का कथा किमुच्यत इति कैमुत्येनार्थापत्तिः । यद्वा बाणसंधाने विषये का कथा तत्प्रसङ्ग एव नास्तीत्यर्थः । अत्र हेतुर्ज्येत्यादि । ज्याशब्देनेत्येकवचनार्थो विवक्षितः । एवेत्यनेन साधनान्तरव्यवच्छेदः । दूरतः दूरस्थितः । ज्याशब्दमुत्प्रेक्षते धनुषः हुङ्कारेणेवेति । निग्रहसूचको मन्त्रतुल्यो हुमित्यनुकरणशब्दो मुनीनाम् । तेनैव तैः प्रायो विघ्नानामपसारणादित्थमुत्प्रेक्षितम् । स राजा । हीति हेतौ । विघ्नान् यज्ञविघ्नकारिणः । अपोहति निरस्यति । दूरत इत्यत्राप्यन्वेति । तेन विघ्नानां प्रत्यापत्तिनिराशत्वं द्योत्यते । अत्रोत्प्रेक्षायां विघ्नदूरीकरणं निमित्तं ज्याशब्दस्यानायाससाध्यत्वं भयावहत्वमव्यभिचारि निग्रहसामर्थ्यं च द्योत्यते । धनुषो मुनित्वप्रतीत्या समासोक्तिगर्भेयमुत्प्रेक्षा । रूपकगर्भा वा । हुङ्कारेणेव धनुषो ज्याशब्देनेति संबन्धः । उपमया धनुषो मुनिसाम्यं गम्यत इति केचित् । काव्यलिङ्गं च । अत्र व्यज्यमानो वीररसो मुनिनिष्ठविस्मयादेरङ्गं विस्मयादिभिश्च राजविषयिका रतिरुपस्क्रियते । अत्र कुलकुण्डलिनीविषयः समाधिः । हुङ्कारस्य कवचत्वं विघ्ननिवारकत्वात् प्रसिद्धम् । अत्र राज्ञो वधानुद्यमद्योतकेन विघ्नापोहनकथनेनास्त्रप्रयोगेऽप्यव्यापारः शकुन्तलौत्सुक्यादित्यपि गम्यते ॥

यावदिमान् वेदिसंस्तरणार्थान् दर्भानृत्विग्भ्य उपनयामि । (परिक्रम्यावलोक्य च) (आकाशे) प्रियंवदे! कस्येदमुशीरानुलेपनं मृणालवन्ति नलिनीपत्राणि च नीयन्ते । किं ब्रवीषि । आतपलङ्घनाद् बलवदस्वस्था शकुन्तला । तस्याः शरीरनिर्वापणायेति । तत्त्वरितमुपगम्यतां सखी । सा खलु भगवतः कुलपतेरुच्छ्वसितम् । अहमपि वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि । (निष्क्रान्तः)

(शुद्धविष्कम्भकः)

---

अथ स्वकृत्यमनुसंदधाति यावदित्यादि । वेदिसंस्तरणार्थानिति । वक्ष्यति च प्रान्तसंस्तीर्णदर्भा इति । अनेनाविलम्बेनावश्यमुपनेयत्वं द्योत्यते । यावदुपनयामि समर्पयिष्यामि । यद्वा यावत्तस्मात् । उपनयामि वर्तमानसामीप्ये लट् । आकाश इति प्रियंवदाया अप्रवेशार्थम् । किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यदित्यादि तल्लक्षणम् । प्रियंवद इति । कस्येति सामान्ये नपुंसकम् । जनस्येति शेषो वा । नीयन्त इत्यत्र संबन्धः । शरीरनिर्वापणायेत्यपकृष्यत इति केचित् । उशीरं लामज्जकम् । मृणालवन्तीति । स्तनन्यस्तेति वक्ष्यमाणोपयोगि । भावनया तदुत्तरमनूद्य पृच्छति किमित्यादि । आतपो ग्रीष्मः, तस्य लङ्घनात् प्राप्तेः । आतपः सूर्यप्रकाशः तत्र लङ्घनात् सञ्चारादिति वा । शकुन्तलेत्यस्याश्यालालनीयत्वं द्योतयति । अनेन वक्ष्यमाणः कथाभागः सूचितः । सावेगमाह तदित्यादि । तत्तर्हि । त्वरितमित्यावेगातिशयं द्योतयति । सखी शकुन्तला । सखीति त्वरितं प्राप्यत्वं द्योतयति । अत्र हेतुः सेत्यादि । भगवतः कुलपतेरिति तदुच्छ्वसितमस्माकमायुरुच्छ्वसितमेवेति द्योतयति । उच्छ्वसितं जीवितमिति रूपकं त-

(ततः प्रविशति कामयमानावस्थो राजा)

राजा—

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ॥ २ ॥

---

द्वदतिवत्सलेति भावः । अत एवाहमपि सहकरिष्यामीत्याहाङ्कमपीत्यादि । वैतानिकं यागसम्भवम् । शान्त्यर्थमुदकं शान्त्युदकं, यागीयजलशेषं तीर्थजलमित्यर्थः । गौतमी कण्वस्य स्वसा शकुन्तलामातृस्थानीया काचित् तापसी । तद्धस्ते विसर्जनं स्वच्छन्दतया शरीरोक्षणाद्यर्थम् । एतेन तत्प्रवेशो दर्शितः । विष्कम्भ इति । 'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शक' इत्यादि तल्लक्षणमिति ॥

अथ प्रवृद्धरागयोर्नायकयोः कामावस्थावर्णनेन विप्रलम्भं सोपस्कारं प्रदर्शयिष्यन् आदौ सूचितस्य नायकस्य प्रवेशमाह तत इत्यादि । कामयमानस्य विरहिणोऽवस्थास्यास्तीत्यर्शाद्यच् । कामयमानस्यावस्था यस्येति कामयमानत्वमवस्थायामारोप्य कामयमाना अवस्था यस्येति वा विग्रहः । तदवस्थाश्च "दृङ्मनःसङ्गसंकल्पा जागरः कृशतारतिः । ह्रीत्यागोन्मादमूर्च्छान्ता" इत्याद्युक्ताः । तत्राद्याः सप्त नायकस्य वर्णितप्रायाः उन्मादमूर्च्छयोरुदयोऽत्र वर्णयिष्यते । षष्ठे चोन्मादस्योत्कटत्वेन वर्णनं, नायिकाया मूर्च्छापि स्फुटं वर्ण्यत इति विवेकः । अथ नायको नगरं प्रति नर्मसाचिवमानुयात्रिकैः संप्रेष्य तापसप्रार्थनया तपोवनं प्राप्य तत्क्षणमेव विघ्नान्निवार्य यज्ञरक्षां यथावदनुतिष्ठन्नेकदा द्वितीयसवनानन्तरं तापसैरादिष्टविश्रमो विजनमुपगम्य प्रियामेवानुध्यायन्मदनानलज्वालावलीढमानसो झटिति तत्प्राप्त्यर्थमुपायमालोचयंस्तस्य वैषम्यमसाधकत्वं च पुनर्निरूपयन् सोत्कण्ठमाह जान इत्यादि । तपसः, "तत् सर्वं तपसा साध्यं

तपो हि दुरतिक्रम''मित्यादिवत् सामान्येनैकवचनम् । वीर्यं निग्रहानुग्रहसामर्थ्यरूपं प्रभावम् । जाने अहं जानामीति विश्वासं द्योतयति । अनेन तस्या बलादपहारो न कार्य इति कार्यरूपः प्रस्तुतार्थः प्रतीयते । ननु सा स्वयं संगमाय प्रवर्तेतेत्यत्राह सेत्यादि । सेत्यनुभूतार्थकं कटाक्षमन्दस्मितादीनां स्मृतिं ततस्तस्याः स्वानुरागं च द्योतयति । तर्हि संगमः सुघट इत्यत्राह बालेति । बाला कर्तव्यं स्वयमजानती । ननु सख्योरुपदेशेन प्रवर्तेतेत्यत्राह परवतीति । परवती गुरुपरतन्त्रा । अत्र बाल्यपरवत्त्वयोरेकस्याभावे प्रवृत्तिः स्यादिति द्वयोरुक्तिः । इति मे विदितं मया ज्ञायमानं न त्वन्यमुखेन श्रुतमिति पूर्ववद्विश्वासः । एतेन तदनुमत्या संगमोऽपि न भवतीति पूर्ववद्गम्यते । अयं भावः । बलादपहारो गान्धर्वो वा झटिति संगमोपायः तत्राद्यो न कार्यः शापस्य शङ्कनीयत्वात्, द्वितीयश्च तस्या बाल्यादिना न घटेतेति । तत्र गान्धर्वस्य पश्चान्निर्देशस्तदुपायस्य निरूप्यत्वं सूचयति । एवं चेत्ततो मनो निवर्त्यतामित्यत्राहालमित्यादि । अलं समर्थः । ततः शकुन्तलातः । तथापि पूर्वोक्तप्रकारेण निश्चयेऽपि इदमेवं निरर्गळप्रसरम् । एवं निश्चयेऽपि ममेदं हृदयं लज्जाविनयादिना दुर्लभत्वबुद्ध्या प्रत्यवायभयेन वा केनचित्ततो निवर्तयितुं न शक्नोमीत्यर्थः । अनेन तन्निवर्तनाय यत्नो बहुशः क्रियत इति द्योत्यते । निवर्तयितुमिति णिचा स्वयं न निवर्तत इति किमु वक्तव्यमिति च । अत्राद्यार्द्धे कारणनिबन्धनाप्रस्तुतप्रशंसा । हृदयनिवर्तनहेतोः सत्त्वेऽपि तदनुत्पत्तिप्रदर्शनेन विशेषोक्तिः स्वभावोक्तिश्च । अत्र राज्ञो रत्नहारी तु पार्थिव इति तस्या वीरत्वादादावपहारे बुद्धिरौत्सुक्यात् पश्चात्तथा सति मुनेः शापः स्यादिति शङ्का, अनुयास्यन्मुनितनयामित्यादिवद्विवेकमूला ततो न हर्तव्येत्यादिबुद्धिरित्येते भावाः पूर्वार्द्धे व्यज्यन्ते । तव मतिः प-

(मदनबाधां निरूप्य) भगवन् ! कुसुमायुध त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः । कुतः ।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ ३ ॥

---

धानं निवर्तयितुं नालमित्यनेन चिन्ताविषादादयश्च । प्रथममपहारानुपाये बुद्धिः पश्चान्निषेधे पुनश्चापहारादाविति पर्यायेण मनःप्रवृत्तिप्रतीतेरुन्मादोदयोऽपि व्यज्यत इत्यप्याहुः । एतैरुपस्कृतस्य विप्रलम्भस्य प्राधान्येन ध्वनिः । अत्र बालाख्याया: सरस्वत्याः समाधिश्च ॥

अथ विप्रलम्भपरिपोषप्रदर्शनाय नायकस्य दशाविशेषमाह मदनबाधान्निरूप्येति । केशादिपादान्तं तद्रूपवर्णनेन कामपारवश्यं मोहप्रायं नाटयित्वेत्यर्थः । पुनर्लब्धसंज्ञस्य भगवन्नित्याद्युक्तिः । अथ प्रतिक्षणं प्रवर्द्धमानां मदनबाधां सोढुमक्षमः शरपातानुमितपुरोवस्थानमुन्मादेन पुरः प्रत्यक्षीकृतं वा मदनं सबहुमानमभिमुखीकृत्य बाधानिवृत्तिप्रार्थनां प्रकाशयन्नुपालभते भगवन्नित्यादि । भगवन्निति तस्य गौरवं बोधयदेवमतिसंधाने तदपि व्याहन्येतेति द्योतयति । कुसुमायुधेति तदानीं तथा प्रतीयमानत्वादुक्तम् । अनेन लोकोत्तरं तव धनुर्द्धरत्वमिति पूज्यत्वे कश्चिदतिशयः सूच्यते । कुसुमानामेवायुधत्वकरणेन स्वतः परपीडावैमुख्यं च विश्वसनीयत्वे हेतुः । कुसुमस्य केशप्रसाधनादिविषयत्वेन संगमकाले रागसन्धुक्षणमेव कार्यं न पीडेत्यपि द्योत्यते । त्वयेति त्वमेवान पश्चान्तरमिति भावः । तेन च यदि

त्वं विरमसि तदा चन्द्रोऽपि विरमेदित्यपि सूच्यते । चन्द्रमसं-ति शैत्यकान्तिसौम्यत्वादिभिराह्लादकरत्वं तत्स्वभाव इति स्वतः परोपकारपरत्वं विश्वसनीयत्वे हेतुं द्योतयति । चेति समुच्चये । तेन पवनानलयोः समागमवदतिसंधानस्य बलवत्तरत्वं द्योत्यते । विश्वसनीयाभ्यां सर्वथा सौम्यत्वाद्विश्वासयोग्याभ्याम् । क्रौर्यं ह्यविश्वासजनकं तच्च युवयोः स्वप्नेऽपि न संभाव्यत इति विश्वास एव विधेय इत्यर्थः । अनेन कामिनां तयोरुपरि विश्वासो द्योत्यते । तेन तद्वञ्चनस्यात्यन्तमयुक्तत्वं च । अत्र मदनचन्द्रमसोः स्वाम्यमात्यभावात् सह प्रसङ्गः । चन्द्रमसः प्रसङ्गो दृष्टान्तार्थ इति केचित् । अतिसंधीयते वञ्च्यते । वञ्चनं हि गूढतया विप्रियाचरणं तदत्रानुपदं वक्ष्यमाणं कामस्य कुसुमशरेषु वज्रशक्तिसमर्पणं चन्द्रस्य शीतरश्मिभिरग्निविसर्जनं च । द्वयमिदमत्रादौ विषमिश्रणवदत्यन्तमसंवेद्यमनुचितं चेदतो नैवं बाधतामिति प्रार्थनानेन प्रकाश्यते । अत एव भगवन्निति संबुद्धिः । कामिजनसार्थः कामीत्यनेन सौम्यस्वभावत्वं तथा कामसंबन्धित्वं तेन समानगुणेषु स्वसंबन्धिषु च सर्वस्यापि पक्षपातः समुचित इति तदतिसन्धानमयुक्ततमामिति जनशब्देन कामिनां प्रभूतत्वं सार्थशब्देनातिसन्धानस्य व्याप्तत्वं यौगपद्यं च द्योत्यते । अत्र परिकरः कामीत्यादौ सामान्यनिबन्धनाप्रस्तुतप्रशंसा च । अथातिसंधानज्ञापकमाह तवेत्यादि । कुसुमशरत्वमित्यनेन शराणां कोमलत्वसौम्यत्वादयो द्योत्यन्ते । शीतरश्मित्वमिति शैत्यकारित्वमेव संभाव्यं न तापकारित्वं किं पुनर्दाहकृत्त्वमिति द्योतयति । इन्दोरित्यन्वर्थम् । अयथार्थमनन्वर्थं विरुद्धार्थमिति यावत् । दृश्यते ज्ञायते । एतेन त्वं वज्रायुध इति इन्दुरुष्णरश्मिरित्येव वक्तव्यमिति द्योत्यते । मद्विधेषु इदमुत्तरवाक्येऽपि संबध्यते । अतिसन्धिप्रकारं विवृण्वन् उक्तमर्थं

(परिक्रम्य) क्व नु खलु संस्थिते कर्मणि सदस्यैरभ्यनुज्ञात-

---

साधयति । विसृजतीति । विसृजति विशेषतो वर्षति । वर्तमाननिर्देशस्तदापि दुःखातिशयेन तदनुसन्धानान्न तु चन्द्रोदयात् । तत्कालो हि मध्याह्नः । अत एव चन्द्रस्यासंबोधनम् । हिमं गर्भे येषाम् । रश्मीनामन्तर्हिमं तदन्तश्चाग्निरिति भावः । अहिमगर्भत्वे वञ्चनं ज्ञातमपि स्यादिति वञ्चनकौशलमनेन द्योत्यते । कुसुमबाणानिति पूर्ववत् कोमलत्वादिकं द्योतयति । वज्रवत् साराः वज्रसाराः । यद्वा वज्रस्य सार इव सारो बलं येषां ते । वज्रसारो नामायोविशेष इति केचित् । अवज्रसारान् वज्रसारान् करोषि वज्रसारीकरोषि । वज्रस्येव कुसुमानां काठिन्यमाधाय प्रहरसीत्यर्थ इति तवाप्यहो वञ्चनकौशलमिति सूचयति । अत्रोक्तक्रियाभ्यां बहिरन्तश्च सुदुःसहः सन्तापः रश्मिभिः कुसुमबाणानिति बहुवचनाभ्यां तदतिशयो वर्तमाननिर्देशेन तदवसानाभावस्तेनेन्दुकामयोः क्रौर्यातिशयश्च सूच्यते । पद्मादिसौरभादिना चन्द्रिकामूर्च्छादिना चाहोरात्रस्यानिर्वाह्यत्वं चानेन गम्यते । अत्र कुसुमायुधस्य प्रकृतत्वात्तत्प्रदर्शनाय पश्चान्निर्देशः । यथा "एको ययौ चैत्ररथप्रदेशान् सौराज्यरम्यानपरो विदर्भान्" इत्यादाविति न प्रक्रमभङ्गः । केचित्तु चन्द्रप्रसङ्गस्य दृष्टान्तार्थत्वात् "उमावृषाङ्कौ शरजन्मना यथे"त्यादिवद् दृष्टान्तकथनेन प्रतिज्ञातार्थे स्थिरीकृते पश्चाद्दार्ष्टान्तिककथने तत्प्रतीतेः सौकर्यमिति तवेत्याद्युद्देशक्रमेण पश्चान्निर्देष्टव्यस्यापि चन्द्रस्य पूर्वनिर्देश इति नात्र तद्दोष इत्याहुः । वस्तुतस्त्वत्र प्रक्रमभङ्गोऽपि तस्योन्मादव्यञ्जकत्वाद् गुणत्वमेव । अत एव न कथितपदत्वदोषोऽपीत्यवधेयम् । अत्र हिमगर्भैरग्निमिति विरोधश्च । उन्मादो मतिश्च भावः ॥

अथ मन्मथव्यथां सोढुमक्षमो विनोदनोपायं चिन्तयति क्व

विश्रमः क्लान्तमात्मानं विनोदयामि । (निश्वस्य) किं किल मे प्रियादर्शनादृते शरणमन्यत् । यावदेनामन्विच्छामि । (सूर्यमवलोक्य) इमामुग्रातपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव तावद् गच्छामि ॥

---

न्विरूादि । क कस्मिन् देशे । उपविश्येत्यर्थात् । नुशब्दः खलुशब्दश्च वितर्के । खलुशब्दो वाक्यालंकारे वा । संस्थिते समाप्ते । 'संस्था व्यवस्थाप्रणिधिसमाप्त्याकारमृत्युषु'इति वैजयन्ती । कर्मणि द्वितीयसवने । प्रातःसवन इति केचित् । 'सदस्या विधिदर्शिनः' इत्यमरः । तैरभ्यनुज्ञातविश्रम इति । अनेन कृतकृत्यस्य कामेऽधिकार इति विनोदनावसरोऽयमिति सूच्यते । पूर्वं यज्ञरक्षाव्यग्रतया मदनपीडा कथंचित् सह्यासीदिति च । क्लान्तं सदस्यदृष्ट्या यागरक्षणात् क्लान्तिः । वस्तुतो विरहासहनात् । आत्मानं मनः । विनोदयामि । क्लेशापनोदनं विनोदनम् । निश्वस्येति दुःखानुभावः । विनोदनोपायं निरूप्याह किं किलेत्यादि । किमित्याक्षेपे । किलेति संभावनायाम् । संभाव्यं किमपि नास्तीत्यर्थः । मे ईदृशं दुःखमनुभवतः । प्रियादर्शनादृते तद्वर्जयित्वा । प्रियेत्यन्वर्थकं तद्दर्शनस्य शरणत्वं प्रतिपादयति । शरणमात्मनिर्वापणक्षमम् । अन्यच्छरणं किं किलेति संबन्धः । प्रियादर्शनमेव शरणमिति भावः । अत एवाह यावदिति । अन्विच्छामि अन्विष्यामि । सूर्यमवलोक्येति कालपरिज्ञानार्थम् । तेन प्रियाधिष्ठितं देशं वितर्कयतीमामित्यादि । उग्रातपामिति वेलाया औष्ण्यातिशयः, तेनान्यत्रानतिबाह्यत्वं च द्योतयति । वेलां समयम् । प्रायेणेति संभावनार्थकमव्ययं ग-

(परिक्रम्य । स्पर्शं रूपयित्वा) अहो प्रवातसुभगोऽयमुद्देशः ।

---

मयतीत्यत्र संबन्धाति । लतावलया लतामण्डपास्तद्वद्भिर्व्रति शैत्या- तिशयं द्योतयति । तीरेष्विति बहुवचनं लतावलयबहुत्वकटाक्षे- ण । तेन विश्रमस्थानव्यत्यासे सन्तापोऽपि किञ्चिदिवोपशाम्यती- ति द्योत्यते । यथा मेघे 'वसतिं रामगिर्याश्रमेष्वि'ति । स- खीजनेति शकुन्तलाया अपि सन्तापातिशयेन शिशिरोपचाराद्य- पेक्षां सूचयति । अत एव विशेषतोऽपि लालनीयत्वाभिप्राय- गर्भं शकुन्तलेति । गमयति कृच्छ्रेणातिवाहयति । कर्तव्यं नि- श्चिनोति तत्रैवेति । तावत् प्रथमम् ॥

अहो इत्यादि । अहो इति हर्षे । प्रवातः शैत्यादिम- त्त्वेन प्रकृष्टः प्रभूतश्च वातो यत्र अत एव सुभगः सुखकरश्च प्रवातेन सुभग इति वा । वातस्य प्रकृष्टत्वं प्रभूतत्वं चोपपादय- ति शक्यमित्यादि । अत्र वामनः । शक्यमिति रूपं विलिङ्गवच- नस्यापि कर्माभिधायां सामान्योपक्रमादिति । यथा 'शक्यमोषधि- पतेर्नवोदयाः कर्णपूररचनाकृते तव । अप्रगल्भयवसूचिकोमलाश्छे- त्तुमग्रनखसंपुटैः कराः' इति । अत्र महाभाष्यवचनं लिङ्गम् । यथा 'शक्यं श्वमांसादिभिरपि क्षुत् प्रतिहर्तु'मिति । न चैकान्तिकः सा- मान्योपक्रमः । यथा 'शक्या भर्तुर्नभसि बिसिनीकन्दवच्चन्द्रपादा' इत्यादि । इदं विभक्तिप्रतिरूपकमव्ययमिति केचित् । अरविन्दे- त्यादिविशेषणाभ्यां सौरभ्यशैत्यमान्द्यान्युक्तानि । अनङ्गतप्तैरित्यनेन शैत्यस्य स्फुटप्रतिपत्तिर्द्योत्यते । अविरलमविच्छिन्नं सर्वाङ्गीणं च । तादृशः पवनस्तादृशैरङ्गैरविरलमालिङ्गितुं शक्यमिति संबन्धः । अत्र सौरभाधारभूतैररविन्दकेसरेणुभिस्तरङ्गसूक्ष्मकणैश्च सान्द्रत्वान्म-

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ४ ॥

---

न्दघनत्वाच्च पवनस्य मूर्तत्वप्रतीतेरालिङ्गनशक्यत्वमुत्प्रेक्ष्यत इति गम्योत्प्रेक्षा । तच्छक्यत्वासंबन्धेऽपि तदुक्तेरतिशयोक्तिर्वा । स्वभावोक्तिश्च । अत्र पवनस्य शिशिरोपचारप्रवृत्तप्रियसुहृत्समाधिः । षडाधारपद्मेषु लिपिजातक्रमोत्क्रमसन्निवेशप्रतिरूपो दहनाप्लवसमाधिश्च । अरविन्दानि षड् मालिनी मातृका तापो दहन आलिङ्गमाप्लव इत्यप्याहुः । अनङ्गतप्तैरित्यनेन ग्लान्यालस्यादयः "किञ्चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाता" इत्यादिवदौत्सुक्यं प्राधान्येन हर्षश्च व्यज्यन्ते । अत्र केचित् । तथाविधस्य वायोरुद्दीपकत्वेन विरहिणां दुःखहेतुत्वेऽपि तत्स्पर्शेन हर्षप्रदर्शनात्तत्र नायिकागमनस्य वायोस्तदङ्गस्पर्शस्य च सम्भावना नायकस्यास्तीति प्रतीयते । यथोक्तं "तदङ्गसृष्टानामुपगतवतां स्पर्शनमपि प्रतीकार" इति । यथा मेघे "आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवे"ति । यथा मालत्यां "तामीषत्प्रचलविलोचनां नतांगीमालिङ्गन् पवन मम स्पृशाङ्गमङ्ग"मितीत्याहुः । अन्यच्छायायोनिश्चायं श्लोकार्थः । यथा श्रीरामायणे "मेघोदरविनिर्मुक्ताः कल्हारस्पर्शशीतलाः । शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः" इति । अत्र पुरातनकविदृष्टार्थस्वीकारो न दोषाय ध्वनिप्रभेदानुगृहीतत्वात् । तदुक्तं ध्वनिकृता "अतो ह्यन्यतमेनापि प्रकारेणाविभूषिता । वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपी"ति । अत्र पवनस्वभाववर्णनं विप्रलम्भाङ्गतया चमत्कारैकघनस्वात्मह्रदयहृदयमुल्लासयति । न तु प्रावृड्वर्णनमात्रमेवेति विवेकः ॥

(परिक्रम्यावलोक्य च) अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे सन्निहितया तया भवितव्यम् । तथा हि ॥

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ५ ॥

यावद्विटपान्तरेणावलोकयामि । अये लब्धं नेत्रनिर्वाणम् । एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिश-

---

अस्मिन्नित्यादि । परिक्षिप्ते परितो वृत इति भवितव्यमित्यत्र हेतुः । भावे संभावनायां तव्यः । तत्सन्निधानं संभावयामीत्यर्थः । उक्तार्थे लिङ्गमाह अभ्युन्नतेत्यादि । पुरस्तादङ्गुल्यादिभागे । अवगाढा निम्ना । पश्चात् पार्ष्णिभागे । विशेषणे पदपङ्क्त्यास्तदीयत्वप्रतिपादनद्वारा संभावनायां सोपयोगे । जघनगौरवादवगाढेति पूर्वानुभूततदीययौवनदशापरिपोषणस्मरणं तेन तदानीन्तनमौत्सुक्यविशेषं च व्यञ्जयति । पाण्डुसिकत इति दर्शने हेतुः । तेन पदपङ्क्तेः स्पष्टत्वं हृद्यत्वं च द्योत्यते । पदपङ्क्तिः पादन्यासप्रतिबिम्बानां श्रेणिः । अभिनवेति तदानीं तत्सन्निधानसंम्भावनोपयोगि । अनेन पदपङ्क्तेरविकलत्वं तदानीमेव लतामण्डपप्रवेश इति तदीयविस्रम्भालापश्रवणादेरवकाशश्च द्योत्यते । अत्र पदपङ्क्तिस्वभावोक्तिः काव्यलिङ्गपरिकरौ प्रत्यक्षं च । मत्यौत्सुक्यादयो भावाः । अत्र द्वारे मोक्षोपाये साध्ये अभिनवा अपूर्वा पदपङ्क्तिः श्रीपरमेश्वरपाद इत्याद्यर्थात् शिरसि परमेश्वरपादार्पणसमाधिरित्यप्याहुः ॥

यथाचिन्तितं लतामण्डपे प्रियतमामवलोक्याह अये इत्यादि । अये इति हर्षे । तमेव विवृणोति लब्धमिति । लब्धमिति नष्टत्वप्रतियोगितयोक्तिः पूर्वनष्टत्वं सूचयति । नेत्रयोर्निर्वाणं निर्वृतिकरं यद्वा निर्वृतिः । अनेनेन्द्रियान्तराणामप्याचिरेण निर्वाणं स्यादित्या-

याना सखीभ्यामन्वास्यते । भवतु । श्रोष्यामि तावदासां विस्रम्भकथितानि । (विलोकयन् स्थितः)

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला)

सख्यौ—(उपवीज्य) हळा सउंदले अवि सुहाअदे णळिणीपत्तवादो । (हला शकुन्तले! अपि सुखायते नलिनीपत्रवातः)

---

शंसा सूच्यते । लाभे हेतुरंषेत्यादि । मनोरथेन न तु परिग्रहेण प्रियतमा तत्त्वेन संकल्पितेत्यर्थः । मनोरथपदेन तद्विषयो लक्ष्यते । स चासावत एव प्रियतमेति वा । कुसुमान्येवास्तरणमुत्तरच्छदः काठिन्यपरिहान्यर्थं कल्पिता पुष्पशय्येत्यर्थः । वक्ष्यति च "तस्याः पुष्पमयी"त्यादि । शिलापट्टं प्रशस्तशिलाम् । शिलेति शैत्यं सूचयति । अधिशीङित्यादिना कर्मत्वम् । अन्वास्यते सेव्यते परिचर्यत इत्यर्थः । श्रोष्यामीति श्रोत्रनिर्वाणपूर्वरङ्गः । विस्रम्भकथितानि रहस्यवार्ताः । विलोकयन्नित्यादिना श्रवणावहितत्वं द्योत्यते ॥

अथ पूर्वोपवर्णितवृत्तान्ताया राजसन्निधानादुटजगमनानन्तरं प्रतिदिनप्रवर्धमानमनोभवातङ्कायाः पितुरागमनमपश्यन्त्या राजानं लब्धुमुपायान्तरं प्रयोक्तुमप्रभायाः सखीमात्रशरणाया निदाघातपव्यपदेशेन मालिनीतीरलतामण्डपसन्निविष्टाया मूर्छारूपामवस्थां प्राप्ताया नायिकायाः प्रवेशमाह तत इत्यादि । सखीजनस्तस्या स्त्रीजनाप्रतिपत्तिशङ्कया कातरः पृच्छति हल इत्यादि । दुःखव्यञ्जिकया संबोधनकाक्वा समदुःखसुखः सखीजन इति सख्योरपि दुःखानुवेधः सूच्यते । अपीति प्रश्ने । ते तव सुखाय तादर्थ्ये चतुर्थी । यद्वा सुखायते सुखं करोति । नलिनीपत्रवातः पद्मिनीपत्रसम्बन्धेन वातस्य शैत्यातिशयः सूच्यते । अनेन प्रश्नेन त-

शकु—किं वीजअंति मं सहीओ । (किं वीजयतो मां सख्यौ)

सख्यौ—(विषादं नाटयित्वा परस्परमवलोकयतः)

राजा—बलवदस्वस्था शकुन्तला दृश्यते । तत् किमातपदोषः स्यादुत मदनदोषः । उभयथा मे मनसि वर्तते । अथवा कृतं संदेहेन ॥

---

स्याः संतापातिशयो गम्यते । किमित्यादिनायिकोक्त्या वीजनादिकं किमपि तया न ज्ञातमिति मूर्छावस्था सूच्यते । तेन मदनतापस्य प्राबल्यं च । एतेन वक्ष्यमाणैश्च नायिकाया ग्लान्यालस्यादयो भावा व्यङ्ग्याः । सख्यौ विषादमिति । तस्यास्तदवस्थाज्ञानं तद्धेतुः । अहो किमपीयं न जानाति, कथं मूर्छितोऽयं मदनव्यापारः, किमत्र कुर्व इति परस्परावलोकनाभिप्रायः । अभाषणं च तदनवबोधार्थम् । अत्रेदं वक्ष्यमाणं च सर्वं वचनं नायकयो रतेः परिपोषप्रदर्शनार्थमिति स्पष्टम् ॥

अथ तथाविधाया नायिकायाः सखीप्रवृत्तेश्चावलोकनेन तदालापश्रवणेन च तस्याः सन्तापातिशयमवगम्याह बलवदित्यादि । शकुन्तलेति पूर्ववदुक्तिः । दृश्यते शयनवीजनादिना ज्ञायत इति सखीहृदयानुमोदः । अथास्वास्थ्यहेतुं विकल्पयति तदित्यादि । तदस्वास्थ्यम् । आतपस्य ग्रीष्मस्य दोषः, आतप एव दोष इति वा । अत्र हेतुहेतुमतोरैक्यारोपः । किं स्यादिति सम्भावनायाम् । अथ विकल्पान्तरमाहोत इति । स्यादित्यनुषज्यते । उपपत्त्या विचारेऽपि संशय एवेत्याहोभयथेति । कालस्य मध्यंदिनत्वादातपदोष इति अस्या यौवनाविर्भावान्मदनदोष इति च मे प्रतिभाति । वीजनादिशिशिरोपचारस्य चोभयसाधारण्यादित्यर्थः । पुनः सूक्ष्मं

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं सदपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ६ ॥

---

निरीक्ष्य कमपि विशेषमुपलक्ष्य द्वितीयपक्षं सिद्धान्तीकुर्वन्नाहाथ-वेत्यादि । कृतमिति निषेधे । संदेहस्यात्रानवकाश इत्यर्थः । अत्र हेतुमाह स्तनेत्यादि । स्तनयोर्न्यस्तं अनेन घनत्वं द्योत्यते । उशीरं उशीरानुलेपनं यत्र । प्रशिथिलानि म्लानान्ययथास्थितानि च, प्रोपसर्गेण प्रतिक्षणं म्लानिर्द्योत्यते, मृणालानामेकान्यसहायानि वलयानि यत्र । एकेत्यनेनाभरणान्तराभावस्तेन प्रशिथिलेत्यनेन च कार्श्यं च सूच्यते । अत एव साबाधमा-समन्तात् बाधया सहितम् । सदपीति विरोधे । तदपीत्यपि पाठः । कमनीयमक्लिष्टलावण्यतया दर्शनीयम् । वक्ष्यति च "केवलं लावण्ण" इत्यादि । कमनीयत्वमभिलषितपुरुषभावनया तन्मयत्वेन लावण्यवृद्ध्या । यथा मालत्यां "निकामं क्षामाङ्गी सरसकदलीगर्भसुभगे"त्यादि । तथा सदपीदं वपुः कमनीयमित्यन्वयः । अत्रानेन श्लोकार्द्धेन अस्यास्तापः काममूलकः कमनीयतासमानाधिकरणतापत्वादित्यनुमाने विशेषणांशस्य पक्षधर्मता प्रदर्शिता । अथ व्याप्तिं दर्शयितुमाह सम इत्यादि । समः ग्लान्यालस्यादिजनकत्वेन शिशिरोपचारादिप्रतिविधेयत्वेन च तुल्यः । कामं यद्यपि । मनसिज इत्यन्वर्थं, निदाघो ग्रीष्मः तयोः प्रसरः प्रकर्षेण मूर्च्छनं तयोः । तद्धेतुक इत्यर्थः । तयोस्तापः समः काममित्यन्वयः । वस्तुतस्तयोस्तापस्य भेदात् काममित्यकामानुमतिः । भेदमाह न त्वित्यादि । तुशब्दो विशेषे । एवं

प्रियं—(जनान्तिकम्) अणसूए तस्स राएसिणो पुढमदंसणादो आरहिअ पज्जुसुअमणा आवण्णा विअ सउंदला । किंणुखु से तण्णिमित्तो अअं आदङ्को भवे । (अनसूये ! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकमना आपन्नेव शकुन्तला । किन्नु खल्वस्यास्तन्निमित्त एवायमातङ्को भवेत्)

---

दृश्यमानप्रकारेण । मनसिजोपरोधवदिति वा । अपराद्धं भावे क्तः । ताप इत्यर्थः । युवतिषु यौवनवतीषु विषये । युवतिषु ग्रीष्मस्यापराद्धमेवं सुभगं नेति संबन्धः । ग्रीष्मतापे वपुरेवं कमनीयं न भवतीत्यर्थः । यथा श्रीरामायणे "ज्योत्स्ना तुषारमलिना पौर्णमास्यां हि लक्ष्मण । सीतेव चातपश्यामा दृश्यते न च शोभते" इति । अत्र स्तनन्यस्तेत्यनेन स्तनयोः सन्तापातिशयप्रतीत्या ततोऽपि तापस्य काममूलत्वमनुमिनोमीति गम्यते । अत्रानुमानालंकारो गम्यः । न त्वित्यादिना वैधर्म्यप्रतिपादनाद्व्यतिरेकः । युवतिष्विति सामान्यनिबन्धनाप्रस्तुतप्रशंसा च । प्राधान्येन नायकस्य मत्यौत्सुक्ये नायिकाया ग्लान्यालस्यादयश्च भावा व्यङ्ग्याः । संतापस्य काममूलत्वानुमानात्तदानीं विशेषतोऽपि तस्याः प्रीतिकरत्वात् प्रियाया इति ॥

अथ तापस्य शिशिरोपचारेणासाध्यशमनत्वात् काममूलत्वमाशङ्कमानाहाणसूए इत्यादि । तस्येत्यनुभूतार्थकम् । राजर्षेरित्यनुरूप एवास्या अभिलाष इति, प्रथमदर्शनादिति तत्समय एव निर्द्धारितोऽयमर्थ इति, आरभ्येति यज्ञरक्षादौ तस्य बहुवारदर्शनं च द्योतयति । पर्युत्सुकमना उत्कण्ठमाना । अत एवापन्ना । अनेन जागराद्यवस्था उच्यन्ते । इवेत्यवधारणे संभावनायां वा । तन्निमित्तः राजर्षिनिमित्तकः । अयमनुभूयमानः । आतङ्कः बाधा ॥

अन—सहि मम वि ईदिसी आसंका हिअअस्स । होदु । पुच्छिस्सं दाव णं । (सखि ममापि ईदृशी आशङ्का हृदयस्य । भवतु । प्रक्ष्यामि तावदेनाम्) (प्रकाशम्) सहि पुच्छिदव्वासि किं वि । बलिओ खु दे संदावो । (सखि प्रष्टव्यासि किमपि । बलीयान् खलु ते सन्तापः)

शकु—(पूर्वार्द्धेन पुष्पशयनमुदस्य) हला किं वत्तुकामासि । (हला किं वक्तुकामासि)

अन—हला सउंदले अणब्भंतरा खु अह्मे मअणगअस्स वुत्तंतस्स । किंदु जादिसी इदिहासणिबंधेसु कामअमाणाणं समवस्था सुणीअदि तादिसी दे लंखेमि । कहेहि

---

तदुक्तमनुवदति सखीत्यादि । ममाप्येवमेव प्रतिभातीत्यर्थः । पुनर्निश्चित्याह प्रक्ष्यामीति । सहि इत्यादि । सखीति प्रष्टव्यत्वे हेतुः । प्रष्टव्येति प्रश्नस्यावश्यकत्वमुक्तम् । कुतः प्रष्टव्यत्वमित्यत्राह किमपीत्यादि । किमप्यत्यर्थम् । किमपि किञ्चित् प्रष्टव्येति वा । पूर्वार्द्धेनेति । उदस्य परित्यज्य । शिरः किञ्चिदुन्नम्येत्यर्थः । इदं श्रवणादरं द्योतयति । अत आह हलेति ।

अथ तदादरदर्शनेन सभूमिकाबन्धं विवक्षितं पृच्छति हलेत्यादि । अनभ्यन्तरे न विद्यते अभ्यन्तरं रहस्यं न ज्ञातमित्यर्थः, ययोः । यद्वानभ्यन्तरं बहिः सप्तम्यन्तमिदं भवाव इति शेषः । मुनिकन्यकात्वादनभिज्ञे इत्यर्थः । अनेन वक्ष्यमाणाभ्यूहस्य कदाचिद्व्यभिचारित्वेऽपि मिथ्यारोपशङ्का मा भूदिति द्योत्यते । कथं तर्हि तत्संभावनेत्यत आह किन्त्विति । इतिहासनिबन्धनेषु पुराणप्रबन्धेषु । श्रूयते तेषु शिष्यैर्वाचितेषु कुलपतिना व्याख्याने क्रियमाणे श्रुतपूर्वे-

किंणिमित्तो अअं दे आआसो । विआरं खु परमत्थदो अजाणिअ अणारंभो पडिआरस्स । (हला शकुन्तले अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किन्तु यादृशी इतिहासनिबन्धनेषु कामयमानानां समवस्था श्रूयते तादृशी ते लक्ष्यते । कथय किन्निमित्तोयं तवायासः । विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य)

राजा—अनसूयामप्यनुगतस्तर्को मदीयः । न हि मे स्वाभिप्रायेण दर्शनम् ॥

शकु—(आत्मगतम्) बलिअं खु मे अहिणिवेसो । एदओविअ सहसा ण सक्कुणोमि णिवेदिदुम् । (बलीयान् खलु मे अभिनिवेशः । एतयोरपि सहसा न शक्नोमि निवेदयितुम)

---

त्यर्थः । तादृशीति समवस्थेत्यनुषज्यते । लक्ष्यते लक्षणैर्ज्ञायते । एवमितिहासपुरस्कारेण विदग्धायाः सख्या उक्तिस्तदवस्थाया अगोपनीयत्वद्योतनाय । तर्हि किमत्र मया कार्यमित्यत आह विकारमिति । विकारं रोगम् । अनारम्भः आरम्भो नास्ति । प्रतीकारस्य चिकित्सायाः । वस्तुतो विकारज्ञाने प्रतिक्रियां कुर्मः, तत्त्वायासनिमित्तं कथयेति भावः ॥

तच्छ्रुत्वा सन्तुष्यन्नाहानसूयामित्यादि । तर्कः सन्तापः काममूलक इत्यभ्यूहः । अनसूयामप्यनुगतः प्राप्तः । अत आह न हीत्यादि । मे कामिनो मम । दर्शनं तर्कः । कामिनामेवंविधतर्कसंभवेऽप्ययं न तथा अकामिनोऽपि जनस्यैवमेव प्रतिभानादिति भावः । अनेन स्वतर्कस्य प्रामाण्यावगमेन हृदयोल्लासो द्योत्यते । चिन्तयति बलिअं इत्यादि । अभिनिवेशः अनुरागः बलीयानिवेत्यनेन तद्धेतुरवश्यमद्य निवेद्य इति द्योत्यते । तर्हि निवेद्यता-

प्रियं—सहि सुट्ठु एसा भणादि । किं अत्तणो आदंकं उवेक्खासि । अणुदिअसं खु परिहीअसे अंगेहिं । केवळं ळावण्णमई छाआ तुमं ण मुञ्चइ । (सखि! सुष्ठ्वेषा भणति । किमात्मन आतङ्कमुपेक्षसे । अनुदिवसं खलु परिहीयसेऽङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति)

---

मित्यत्राहैतयोरपीति । एतयोरपीत्यनेन सख्योः स्नेहविस्रम्भबहुमानपात्रत्वं तेन कस्याप्यनिगूहनीयत्वं च द्योत्यते । सहसेति क्षणान्तरे शक्यमपि स्यादिति द्योतयति । न शक्नोमीति लज्जातिरेकादिति भावः । अनेन निवेदनेच्छा वर्तत इति द्योत्यते । अत्र लज्जा ततः किं कर्तव्यमिति चिन्ता च व्यज्यते ॥

अथ लज्जया नायिकाया अवचनमाशङ्क्य लज्जां शिथिलीकृत्य तया वाचयितुमाह सहि इत्यादि । सुष्ठु युक्तियुक्तम् । भणतीत्यनेन तद्वचसो ग्राह्यत्वं द्योत्यते । अत आह किमिति । आत्मन इत्युपेक्षानर्हत्वं द्योतयति । किमुपेक्षसे उपेक्षणं न युक्तमित्यर्थः । अतः कथयेति भावः । उपेक्षा च प्रतीकाराकरणम् । यथा "क्षयायोपेक्षिताः सर्वे" इत्यादि वाहटः । अथातः परमप्युपेक्षायां शरीरमेव नाशमेष्यतीत्याहानुदिवसमित्यादि । अनुदिवसमित्यनेन परिहाणेः क्रमस्फुटत्वं द्योत्यते । परिहीयसे क्षीयसे । वर्तमाननिर्देशेन क्षयस्य विरतिर्नासीदिति द्योत्यते । "शरीरमाद्यं खलु धर्मसाधन"मिति शरीरनाशे सर्वपुरुषार्थहानिः स्यादिति भावः । अथातङ्कस्य कामनिमित्तत्वसम्भावनामात्मीयां सूचयितुमाह केवलमिति । लावण्यमयी तत्प्रचुरा । लावण्यन्नामावयवसंस्थानाभिव्यङ्ग्यं निखिलावयवव्यतिरिक्तं किमपि तत्त्वान्तरमिति ध्वनिकृतः । "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा ।

राजा— अवितथमाह प्रियंवदा । तथा हि ।

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डरा ।
शोच्या च प्रियदर्शना च मदनाक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ ७ ॥

---

प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यत" इत्यन्ये । छाया कान्तिः । अत्र स्त्रीलिङ्गेन न मुञ्चतीत्यनेन च यथा प्रियसखी विरहादिना खिन्नां नायिकां कदाचिन्न परित्यजति तथा छाया त्वामपीत्युपमा ध्वन्यते । अत्र सखीभ्यामातङ्कनिमित्ते तत्त्वेन ज्ञातेऽपि तन्निबन्धनः प्रश्नो नायिकामुखेन निवेदितस्य तस्य श्रोतुमभीष्टत्वात् तथात्व एव तत्प्रतिक्रियायाः सुष्ठु कर्तव्यत्वाच्च ॥

अथ नायिकाया विरहवेदनां तामात्मविषयां च सम्भावयन्नायकः प्रियंवदोक्तां तदवस्थां श्रोत्रद्वारेण नयनपुटेन चास्वाद्य प्रहर्षपरवशस्तदुक्तमनुमोदतेऽवितथमित्यादि । अवितथं सत्यम् । उक्तमुपपादयति क्षामेत्यादि । अस्या इत्यस्य विपरिणामेन इयमित्यस्य पूर्वार्धे संबन्धः । वाक्यचतुष्टयेनादौ प्रियंवदोक्तं कार्श्यमनूद्यते । क्षामक्षामौ अतिशयेन क्षीणौ संकुचितावित्यर्थः, कपोलौ यस्य । संकोचो दुःखात् । सुखे हि विकासः । यथा माघे "परिफुल्लगण्डफलकाः परस्परं परिरेभिरे" इत्यादि । कपोलयोः संकोचोक्त्या तत्र रजतदर्पणवद्विशेषतोऽपि लावण्यस्यौज्ज्वल्यं द्योत्यत इति मुखवर्णनं चेदम् । एवमुत्तरत्रापि । काठिन्यमुक्तौ वल्कलाशिथिलीकरण दृष्टपूर्वः प्रतिक्षणं परिपोषस्तेन काठिन्यं च तेन मुक्तौ सुकुमारौ जाताविति भावः । प्रवृद्धस्य कार्श्ये हि मार्दवं भवति, स्तनौ यत्र । उरस्तथाविधमित्यनेन पूर्वं स्तनमण्डला-

न्तरितत्वादुरो द्रष्टुं न शक्यमिदानीमिमौ स्तनाविदमुर इति स्पष्टं ज्ञातुं शक्यमिति द्योत्यते । मध्यस्य पूर्वं स्तनमण्डलाक्रान्त्या क्लान्तत्वात् क्लान्ततर इति । विनतत्वं स्त्रीणामंसयोः स्वभाव इति प्रकामेति । अनेन बाह्वोर्ग्लान्यतिशयः सूच्यते । वैवर्ण्यमाह छविः पाण्डरेति । पाण्डुत्वमुत्कण्ठया । यथा मालत्यां 'अभिनवकरिदन्तच्छेदकान्तिः कपोल' इति । शोच्या उक्तकार्श्यवैवर्ण्यादिना । प्रियदर्शना लावण्यानपगमात् । मदनाक्लिष्टेत्युक्तार्थे हेतुः । इयमेवंविधावयवविशिष्टा मज्जीवनालम्बभूता । आलक्ष्यते दृश्यते । यतः उक्तप्रकारेण शोच्या प्रियदर्शना च ततो मदनाक्लिष्टेत्यालक्ष्यतेऽनुमीयत इति केचित् । ननु कथं शोच्यत्वप्रियदर्शनत्वयोः समावेश इत्याशङ्कां परिहर्तुमुपमामाह पत्राणामिति । पत्राणामित्यङ्गानां प्रतिनिर्देशः । शोषणेन साररूपरसग्रहणाच्छोषं कुर्वता । नन्द्यादित्वात् कृत्यल्युटो बहुलमिति बहुलग्रहणाद्वा कर्तरि ल्युट् । माधवीति लताविशेषणान्मरुतः शैशिरत्वं गम्यते । स्पृष्टा स्पर्शेन तत्कार्थं पत्रपाण्डरीकरणं लक्ष्यते । लावण्यानपायो व्यङ्ग्यः । पाण्डरीकृतपत्रेत्यर्थः । माधवीति स्वतो हृद्यत्वं द्योतयति । सा खलु शुष्कपाण्डुपत्रत्वादिना शोच्यापि प्रियदर्शनेत्यनुभवसिद्धम् । उपमा काव्यलिङ्गं स्वभावोक्तिश्च । अत्र प्रतीयमानया वायूपमया मदनस्य दुर्निवारत्वं माधव्युपमया नायिकायाः सौकुमार्यातिशयस्तेन सन्तापासहिष्णुत्वं च द्योत्यते । किञ्च माधवसमागमे माधव्याः पल्लवकुसुमादिसमृद्ध्या परिपोषवत् प्रियतमसमागमे भविष्यन्नवयवोपचयस्तेन तद्धेतुभूतो निर्वृत्यतिशयश्च ध्वन्यते । मदन इत्यन्वर्थन्तमेव द्योतयति स हि स्वकार्यमकृत्वा न विरमतीति । अत एवैवंविधाया दर्शनात् क्षणमपि न विरन्तव्यमित्याशयेनापि प्रियदर्शनेत्युक्तिरिति । प्राधान्येन नायकनिष्ठमौत्सुक्यं नायिकाया ग्लान्यालस्यादयश्च भावा व्यङ्ग्याः ॥

शकु— कस्स वा अण्णस्स कहइस्सं । आआसइत्ती दाणिं वो भविस्सं । (कस्य वान्यस्य कथयिष्यामि । आयासयित्री-दानीं वां भविष्यामि)

उभे— अत एव्व खु णिब्बन्धो । संविभत्तं हि दुःखं सज्झवेअणं होइ । (अत एव खलु निर्बन्धः । संविभक्तं हि दुःखं सह्यवेदनं भवति)

---

अथ सखीनिर्बन्धेन शिथिलीकृतलज्जापि स्वातङ्कस्याप्रतीकार्यत्वं मनसिकृत्याह कस्सवेत्यादि । अन्यस्य युवाभ्यामन्यस्य । कस्य वा कथयिष्यामि न कस्यापि । स्नेहविस्रम्भादिना युवयोरेवावश्यं कथनीयमिति भावः । अनेनाकथने हेतुतया संभाव्यमानमविस्रम्भादिकं परिहृतम् । तर्हि कुतो न कथ्यत इत्यत्राहायासयित्रीत्यादि । इदानीमातङ्कनिमित्तकथनकाले । आयासयित्री भविष्यामीति मदातङ्कस्याशक्यप्रतिक्रियत्वात् समदुःखयोर्युवयोर्दुःखमेव भविष्यतीत्यर्थः । अतो न कथयामीति भावः । अथ सख्यौ तत एव कथनीयमित्याहतुरत एव्व इति । अत एवावयोरायासः स्यादित्यत एव । निर्बन्धः कारणकथननिर्बन्धः । ननु ततः किमित्यत्राह संविभक्तमिति । संविभक्तं समदुःखेषु कथितम् । सह्यवेदनं शिथिलम् । यथा वोढुर्भारसंविभागेन दुःखं लघु भवति तथेति भावः । यथा किराते "तुल्याद्विभागादिव तन्मनोभिर्दुःखातिभारेऽपि लघुः स मेने" इति । अत्र संविभक्तमित्यादि सामान्यनिबन्धनाप्रस्तुतप्रशंसा तदर्थस्य पूर्ववाक्यार्थसाधकत्वात् काव्यलिङ्गम् । अत एवेत्यादौ यदेवाकथने हेतुत्वेनोक्तं तदेव सखीभ्यां कथने हेतुत्वेन समर्थितामिति व्याघातश्च ॥

राजा— पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥ ८ ॥

---

अथाहमेवास्या आयासनिमित्तमिति निश्चिन्वानोऽप्यपायशङ्कया परामृशति पृष्टेत्यादि । समदुःखसुखेनेति । सुखसाम्यादपि दुःखसाम्यस्य प्रेमप्रकर्षगमकत्वात्तद्द्योतनाय दुःखपदस्य पूर्वनिपातः । तेन जनेन पृष्टेति न वक्ष्यति नेत्यत्र हेतुः । बाला दुस्सहसंतापासहिष्णुतया विचाराक्षमा स्वयं प्रतिक्रियाशक्ता चेत्यनेन प्रतिवचनस्याविलम्बो द्योत्यते । बाला कैतवानभिज्ञेति वचनस्य सत्यत्वं द्योतयतीति केचित् । इयमेवंविधा । न वक्ष्यति न लज्जया न वक्ष्यतीति संभाव्य तन्निषेधः, वक्ष्यत्येवेत्यर्थः । मनोगतमिति प्रश्नावकाशं द्योतयति । आधेर्व्याधिरूपेण परिणतायाः हेतुं हेतुभूतं कमपि अनेन गोपनाशक्यत्वं द्योत्यते । ननु वक्ष्यत्येव ततः किमित्यत्राह दृष्ट इत्यादि । दृष्टः दृश्यबुद्ध्या विलोकितः । विवृत्य न तु यदृच्छया । बहुशः न त्वेकवारं द्विवारं वा । सतृष्णं न तु सविस्मयम् । दृष्टोऽपीति संबन्धः । एवं वीक्षणेनाहमेवाधिहेतुरिति निश्चिन्वानोऽपीत्यर्थः । अपीति विरोधे । श्रवणकातरत्वस्यासम्भावनां द्योतयति । अत्रान्तरे प्रश्नप्रतिवचनयोर्मध्ये श्रवणात् कातरतां इदानीमन्यं कञ्चन शृणोमीति भीरुताम् । गतोऽस्मीति । अहो प्रेम्णो गतिर्विचित्रा यन्निश्चितेऽप्यर्थे कातरता इति । अनेन "अभावभीत्या वैदेह्या" इत्यादिवत् न श्रोतव्यमिति गमनोद्यमो वा युक्त इति बुद्धिश्च सूच्यते । अत्र शङ्काचापल्ये प्राधान्येन व्यज्येते । अथवा । सखीनायिकयोः प्रश्न-

शकु— सहि जदप्पहुदि मम दंसणपहं आअदो तपोवणरक्खिदा सो राएसी ततो आरहिअ तग्गदेण अहिळासेण एतदवस्थाह्मि संवुत्ता । (सखि! यदाप्रभृति मम दर्शनपथमागतस्तपोवनरक्षिता स राजर्षिस्तत आरभ्य तद्गतेनाभिलाषेण एतदवस्थास्मि संवृत्ता)

राजा— (सहर्षम) श्रुतं श्रोतव्यम् ।

---

प्रतिवचनयोरन्तराले संभ्रमप्रकारमौत्सुक्यातिरेकजनितं परामृशति पृष्टेति । आधिहेतुं कामपीडाहेतुभूतानस्मान । ननु कुतस्तन्निर्णय इत्यत्र हेतुं विशेषणेन दर्शयंस्तथापि सावधानश्रवणमशक्यमित्याह दृष्ट इत्यादि । श्रवणकातरतामधीरतां, कालाक्षमत्वरूपाम् । अहं तद्गतेनाभिलाषेणैतदवस्थोऽस्मीत्येतन्मुखादेवाविलम्बेन श्रवणलोलुपतयात्यल्पमपि तदन्तरालकालं सोढुं न शक्नोमीत्यर्थः । यथा मालविकाग्निमित्रे "नैपथ्यगृहगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः" इत्यादि । अत्रौत्सुक्यं भावः । काव्यलिङ्गमुत्तरार्द्धे विभावना च ॥

सहि इत्यादि । सखीत्यनेन सख्यमेव प्रतिवचने हेतुर्न प्रतिक्रियाशेति द्योत्यते । यदाप्रभृति यस्मिन् क्षणे । दर्शनपथमागत इति दर्शनस्य दैवकृतत्वं द्योतयति । तपोवनरक्षितेति तैथवादौ प्रतीत्योक्तम् । अनेन शौर्यदाक्षिण्यादयो राजर्षिरित्यनेन महाकुलीनत्वादयश्च द्योत्यन्ते । तपोवनरक्षितेत्यनेन मामपि किन्न रक्षेदिति च ॥

अथ नायिकाप्रतिवचनमहोत्सवप्रमुदितः कृतार्थतां परामृशति श्रुतमिति । श्रोतव्यं श्रोतव्येषु सर्वोत्कृष्टमित्यर्थान्तरसंक्रमितम् । यद्वानेन श्रोतव्यविशेषो लक्ष्यते तेनैवंविधमन्यन्नास्तीत्यस्य

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ ९ ॥

---

सर्वोत्कृष्टत्वं द्योत्यते । श्रुतमिति । अतः परमस्मच्छ्रवणसुखकरं किमपि नास्तीति लब्धं श्रोत्रसत्तासाफल्यमिति भावः । अनेन कृतार्थता व्यज्यते । यथा तपतीसंवरणे "आयासितानामशरीरबाणैर्नितम्बिनीनां परिदेवितानि । आत्मार्थमाकर्णयतां हि यूनां समागमो नाम सुखान्तराय" इति । अथ हर्षातिरेकेणात्मनः कृतार्थतासम्पादकं मदनमभिनन्दति स्मर इत्यादि । स्मरः कामदेवः । तापस्य इयत्पर्यन्तमनुभूतस्य हेतुः । अस्यामनुरागोत्पादनेनेति भावः । निर्वापयिता निर्वृतेः कारयिता । अस्या अपि मय्यनुरागमुत्पाद्य तच्छ्रावणेनेति भावः । निर्वृतिपदेन सुधाम्भोधिमध्यावगाढवदाह्लादातिशयः प्रतीयते । सः स्मरः । एवकारद्वयेन तापननिर्वापणयोर्विरुद्धयोरेककर्तृकत्वं प्रतिपादयता स्मरस्य साम्राज्यमुत्तेजितम् । अत्रानुरूपदृष्टान्तमाह दिवस इत्यादि । अर्द्धे अपरार्द्धे श्यामः जलपूरितोदरमेघाच्छादितातपत्वेन कृष्णवर्णः । इदं तापहेतुत्वनिर्वापयितृत्वयोरुपपादकम् । अत्र हेतुमाह तपात्यय इति । तपस्य ग्रीष्मस्य अत्यये वर्षारम्भ इत्यर्थः । तदा ह्यामध्याह्नं महानातपः परतश्चानातप इति कालस्वभावः । तप इत्यनेन क्रमात् प्रवृद्धस्य चिरादनुवृत्तस्य सन्तापस्य पूर्वं सत्त्वमत्यय इत्यनेन झटिति तन्निवृत्तिरननुवृत्तिश्च द्योत्यते । अत एव वर्षारम्भ इति नोक्तम् । जीवलोकस्य प्राणिवर्गस्येति सर्वानुभवः सूच्यते । जीवेत्यनेन ग्रीष्मस्य प्रौढतया पूर्वं निर्जीवत्वमपि सम्भावितं पुनरर्द्धश्यामत्वेन जीवनप्रत्यासत्तिश्चेति । उपमया पूर्वं स्मरस्यातितीक्ष्णत्वं तदानीमत्यन्तानुकूलत्वं च द्योत्यते । किञ्च वृष्टेरिव तस्या लाभे भाविन्या निर्वृतेरति-

शकु—तज्जदि वो अणुमदं तह वट्टह जह तस्स राएसिणो अणुकम्पणीआ होमि । अण्णहा अवसिञ्चह मे उदअं । (तद्यदि वामनुमतं तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथावसिञ्चतं मे उदकम् )

राजा—संशयच्छेदि वचनम् ॥

---

शयः पुनश्च सस्यादिसम्पत्तिवत् भविष्यन्त्या पुत्रसम्पत्त्या तदतिशयश्च। सर्वत्रात्र स्मर एव हेतुरिति तस्मिन् प्रीतिबहुमानादयो द्योत्यन्ते । अत एवैवंविधपरमोपकारितया जनैः स्मर्यत इति स्मर इत्युक्तम् । स्मरः स्वानुरागः स एव स्वानुराग एव इति केचित् । सः तदनुरागः द्वयोः स्मरत्वेन सामान्येनैक्यकल्पनेत्यन्ये । अत्र काव्यलिङ्गं विरोधाभासश्च । हर्षो भावः ॥

अथ स्वाभिलाषस्य दुर्लभत्वबुद्धावपि सन्तापासहिष्णुत्वेनानुमतिपूर्विकां तत्सिद्धौ प्रवृत्तिं सखीजनं प्रार्थयते तं इत्यादि । तत् तदाभिलाषित्वम् । वर्तेथां प्रवर्तेथाम् । तथाशब्दार्थं विवृणोति यथेत्यादि । अनुकम्पनीया दयनीया सादरं परिग्राह्येति भावः । अन्यथाननुमतत्वेनाप्रवृत्तौ । उदकं निवापजलम् । अन्यथाहं म्रिय इत्यर्थः । अत्राप्रस्तुतप्रशंसा । निर्वेदादयो भावाः । अथ तद्यदीत्यादिवचनमाकर्ण्य सख्यावनुमंस्येते न वेति संदिहानः पुनरन्यथेत्यादि श्रुत्वा सहर्षमनुमंस्येते एवेत्याह संशयच्छेदीति । सख्योरनुमननसंशयच्छेदीत्यर्थः । अनुमंस्येते एवेति भावः । अनेनैते झटिति सङ्गमाय यत्नमपि करिष्येते इत्याश्वासः प्रतीयते । यद्वा स्वाभिलाषस्यौचित्ये सखीजनं प्रमाणीकुर्वन्ती तस्य दुर्लभत्वबुद्धावपि तापासहिष्णुतया तत्सिद्धौ प्रवृत्तिं प्रार्थयते तदित्यादि । अनेनाननुमतत्वे मा प्रवर्तथामिति द्योत्यते । अथानुमतौ झटिति प्रवृत्ति-

प्रियं—(जनान्तिकम्) अणसूए दूरगअमन्महा अक्खमा इअं काळहरणस्स । जस्सिं बद्धभावा एसा सो ळलामभूदो पौरवाणं ता जुत्तं से अहिळासो अहिणंदिदुं ॥ (अनसूये! दूरगतमन्मथा अक्षमेयं कालहरणस्य । यस्मिन् बद्धभावैषा स ललामभूतः पौरवाणाम् । तद्युक्तोऽस्या अभिलाषोऽभिनन्दितुम्)

---

रावश्यकीति दर्शयत्यन्यथेति । अन्यथा अप्रवृत्तौ । तदा नायकस्तस्याः पश्चिमं वचनं सहर्षमनुवदति संशयच्छेदीति । सत्यमियं विरहासहिष्णुतया मरिष्यति न संशयः । अहो धन्यतमाः स्म इत्यर्थः । अत्र हर्षो भावः । गुरुजनादिसंमत्या कमप्यन्यं वरिष्यति वा न वेति मम संशयच्छेदीत्यर्थः इति केचित् ॥

तस्या वचनेन नायके दृढप्रतिपत्तिमवधार्य सविषादं सहर्षं चाहाणसूए इत्यादि । दुःखव्यञ्जिकया संबोधनकाक्वा वयं संकटे पतिताः स्म इति द्योत्यते । दूरगतमन्मथा दशमदशाप्राप्तेरुपक्रमादत्यारूढमन्मथावस्था अत आहाक्षमेति । कालहरणस्य सदृशदर्शनचित्रलेखनादिभिरुपायैः कालयापनस्य । अक्षमेति अतः परमस्माभिरुपेक्षिते जीवितमेव नश्येदित्यविलम्बेन चिन्त्यं चिन्त्यतामिति भावः । अथात्र वरोऽनुरूपो न वेति पूर्वं चिन्त्यं तत्रायं संक्षेप इत्याह यस्मिन्नित्यादि । बद्धेति भावस्य दार्ढ्यं द्योतयति । पौरवाणां ललामभूत इत्यनेनाभिजात्यधार्मिकत्वादिगुणानामतिशयः सूच्यते । तेनानुरूपत्वं च । तत् तस्य पौरवललामत्वेनानुरूपत्वात् युक्त इत्यादि । अनेनास्याः समाश्वासनाय पूर्वमभिनन्दनं कार्यं, पश्चादनन्तरकर्तव्याय त्वरावहे इति द्योत्यते । अत्र कालहरणस्येत्यन्तेन विषादः यस्मिन्नित्यादिना हर्षश्च व्यज्यते ।

अन—तह जह भणासि । (तथा यथा भणसि) (प्रकाशम्) सहि दिठिआ दे अणुरूपो अहिणिवेसो । साअरं वज्जिअ कहिं व महाणई ओदरइ । को दाणीं सहआरं अ-

---

केचित्तु अक्षमेत्यनेन प्रियसमागमैकशरणत्वं द्योत्यते । एवं हि सा तेनाविलम्बितमेव घटयितुमुचितेति चेन्न शक्यमित्याह यस्मिन्नित्यादि । ललामभूत इत्यनेन सद्यस्तत्समागमसंपादनं दुष्करमिति द्योत्यते । तेन च विषादः । अथ तथाप्यभिलाषः श्लाघ्यतर इत्याह तदित्यादीत्याहुः ॥

तद्वचनमनुमोदते तह इत्यादि । एवमालोच्य सखीजनस्तामाश्वासयितुमभिनन्दति सहि इत्यादि । संबुद्धिरस्मत्सख्यभिदानीं हृद्यतममासीदिति सूचयति । दिष्ट्येत्यव्ययमानन्दे । अनुरूपोऽभिनिवेश इति युवयोरानुरूप्यात्तव तस्मिन्ननुरागोऽनुरूप एवेत्यर्थः । अथोक्तार्थं गुणैरानुरूप्यदर्शनेन साधयितुं दृष्टान्तमाह सागरमित्यादि । सागरं सगरेण राज्ञा निर्वृत्तम् । महानदी भागीरथी । समुद्रमेव भागीरथी प्रविशतीति भावः । सहकारमित्यन्वर्थम् । पल्लवितामित्यनेन लाभयोग्यता द्योत्यते । सहकार एव तादृशीं लतां लभत इत्यर्थः । भागीरथ्याः समुद्रानुप्रवेशवत् सहकारस्य तथाविधलतालाभवच्च तव तदभिनिवेशोऽनुरूप इति भावः । दृष्टान्तालंकारः । यद्वोक्तमर्थं साधयितुं द्वयोरानुरूप्यमप्रस्तुतप्रशंसया दर्शयति सागरमित्यादि । अत्र समुद्रोपमानेन गाम्भीर्यादिकं सागरमित्यन्वर्थेन कुलीनत्वं च, सहकारोपमया सौभाग्याह्लादकत्वादिकं च द्योत्यत इत्याभिजात्यादिना रूपेण चानुरूप्ये दृष्टान्तद्वयेन दर्शितम् । नायिकाया गङ्गोपमया पावनत्वादिव्योत्पन्नत्वविशिष्टजनोपभोग्यत्वादिकं लतोपमया कान्तिसौकुमार्यादिकं च

न्तरेण अदिमुत्तलदं पल्लविदं लहेइ ॥ (सखि! दिष्ट्या ते अनुरूपोऽभिनिवेशः । सागरं वर्जयित्वा कुत्र वा महानद्यवतरति । क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां लभते)

राजा— किमत्र चित्रं यदि विशाखे शशाङ्करेखामनुवर्तेते ।

---

द्योत्यते । स एव तवानुरूपः त्वमेव तस्यापीत्यर्थोऽपि दृष्टान्ताभ्यां द्योत्यते । केचित्तु दिष्ट्येत्यादिना श्लाघयित्वा यद्वा नैतत् श्लाघ्यमित्याह सागरमित्यादिना । स्वभाव एवायमिति भावः । अथ तामुद्धर्षयितुं स एवानुरूपां त्वां लभेत इत्याह क इत्यादीत्याहुः । अत्रेदं वचनं नायिकाया लज्जानिर्वेदाद्यपनयनपूर्वकं तामाश्वासयितुमिव नायकं संधुक्षयितुं च । अत्राद्यवाक्यं प्रियंवदायाः क इत्याद्यनसूयाया इति केचित् । तद्विपरीतमित्यन्ये । द्वयोरपीदमिति परे ॥

अथ तद्वाक्यचातुर्यमनुवादमुखेन प्रशंसति किमित्यादि । अत्र वक्ष्यमाणार्थे । किं चित्रं न चित्रमित्यर्थः । इदंपदार्थमाह यदीत्यादि । यदीति सिद्धानुवादे । यथा "तद्वक्त्रं यदि मुद्रिते"त्यादौ । विशाखे तदाख्ये तारके । विशाखाग्रहणं द्वित्वसिद्ध्यर्थम् । यद्यप्यस्य नक्षत्रस्यानेकतया लोकानुभवः, तथापि तद्देवतागतं द्वित्वं तत्रारोप्यैवमुक्तम् । यथा माधवीये "शूर्पद्विदैवसंज्ञा विशाखयो"रिति । विशाखयोश्चेति भगवान् पाणिनिः । "विशाखयोर्मध्यगतः संपूर्ण इव चन्द्रमा" इति श्रीवाल्मीकिश्च । इयं सादृश्यनिमित्ताप्रस्तुतप्रशंसा । विशाखे सख्यावुपमाने । चन्द्ररेखा नायिकायाः । अत एव स्त्रीत्वविवक्षया रेखाशब्दः । कार्श्यविवक्षाया नातीवोपयोगः । अनुवर्तनं विशाखयोः समीपस्थितिः । सख्योश्छन्दानुरोधे प्रवृ-

अन— सहि को उण उपाओ भवे; जेण अविळंबिअं णिहिअं अ सहीमणोरहं सम्पादअह्म । (सखि कः पुनरुपायो भवेत्, येनाविलम्बितं निभृतं च सखीमनोरथं संपादयावः)

प्रियं— णिहुअं ति चिंत भवे । सिग्घं ति सुअरं । (निभृतमिति चिन्ता भवेत् । शीघ्रमिति सुकरम्)

अन— कहं विअ । (कथमिव)

प्रियं— णं सो राएसी इमस्सिं सिणिद्धदिट्ठिसूइदाहिळासो इमाणि दिहयाणि पआअरकिसो लक्खीअदि । (ननु स राजर्षिरेतस्यां स्निग्धदृष्टिसूचिताभिलाषोऽमून्दिवसान् प्रजागरकृशो लक्ष्यते)

---

त्तिः । इमे सख्यौ यद्यस्याश्चित्तानुरोधेन मां स्तुतः, तत्र नास्माकमद्भुतमित्यर्थः । यतो ह्यनयोरेतदनुसरणकौशलातिशयमतोऽप्यधिकमुत्प्रेक्षामह इति । अत्र तद्वाक्यचातुर्येण प्रथमं चित्रोत्पत्त्या तन्निषेधः । केचित्तु सख्योर्नायिकानुवर्तनस्य स्वाभाविकत्वान्नात्र विस्मय इति भाव इत्याहुः । अत्रेत्यनेन सख्योर्नायिकानुवर्तनस्य विवक्षणाद्यदीत्यादिवाक्ये दृष्टान्तः, प्रतिवस्तूपमा वेत्यन्ये । अत्र सख्योर्नायिकायाश्च समागमस्यानुरूप्यप्रतीतेः समालङ्कारध्वनिरित्यप्याहुः ।

अथ संगमोपायमालोचयति सहि इत्यादि । विलम्बस्य प्रतिषेध्यत्वादविलम्बितमिति शीघ्रमित्यर्थः । निभृतं गूढम् । अनेन गान्धर्वो विवक्षितः, तस्यैवान्योन्यानुरागमूलकत्वेनातिश्लाघ्यत्वाद् झटिति संपाद्यत्वाच्च । विचिन्त्याह णिहुअं इत्यादि । चिन्ता उपायचिन्ता । दुष्करत्वान्निभृतं कर्तव्यमित्यत्रोपायश्चिन्त्य इत्यर्थः । तस्यैव कुतश्चिन्त्यत्वमित्यत्राह शीघ्रमिति । कथमिवेति । सुकरमिति शेषः । तस्यापि प्रबलतरात् सङ्गमौत्सुक्यादिति

राजा— सत्यमित्थंभूतोऽस्मि । तथा हि ।

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशिनिशि भुजन्यस्तापाङ्गप्रसार्पिभिरश्रुभिः ।
अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ १० ॥

---

कार्यमुखेनाह णं इत्यादि । लक्ष्यते दर्शनेन ज्ञायते । यज्ञरक्षणायाश्रमसन्निधान इति भावः । अत्र जागरादिकार्यमुखेन संगमौत्सुक्यस्य प्रबलतरत्वं दर्शितमित्यप्रस्तुतप्रशंसा ॥

प्रियंवदोक्तान्निजावस्थामनुवदति सत्यमित्यादि । इत्थंभूतो निर्निद्रः कृशश्च । उक्तमुपपादयतीदमित्यादि । इदं रहो मदुत्कण्ठानुभवसाक्षिभूतमिति तस्मिन् मित्रत्वबुद्धिर्द्योत्यते । अशिशिरैरुष्णैरिति विवर्णकरणे हेतुः । शैत्यप्रतिषेधः कादाचित्कस्यापि सुखलेशस्यासंभवं द्योतयति । अत्र हेतुरन्तस्तापादिति । मदनानलजनितान्मनस्तापादित्यर्थः । विवर्णा विच्छाया मणयो यत्र तत् । अविवर्णमणि विवर्णमणि संपादितं विवर्णमणीकृतम् । मणीनामुष्णाम्बुसंबन्धाद् वैवर्ण्यं प्रसिद्धम् । अनेनाहमिव वलयमप्यतिशोच्यं जातमिति द्योत्यते । प्रत्युत रत्नजातं विच्छायत्वादिना मामनुरोदितीवेत्युत्प्रेक्षापि । कथमश्रूणां मणौ संबन्ध इत्यत्राह निशीत्यादि । निशिनिशि तद्दर्शनात् प्रभृति सर्वासु रात्रिषु । दिवा मुनिपरिचरणेन परिजनसन्निधानेन सदृशदर्शनादिना च कथंचित् कालयापना भवतीति निशाग्रहणम् । अथ च निशासु प्रायेण विरहोऽसह्यतम इति कामिस्वभावः । नितरां श्यति तनूकरोतीत्यन्वर्थम् । भुजे अन्यत्रारत्या भूपृष्ठशयने उपधानीकृते वामभुजे; भुज्यतेनेनेत्यन्वर्थेनाहो तथाविधोयमेवंविधो जात इति वि-

प्रियं— (विचिन्त्य) मअणलेहो से करीअदु । तं सुमणोगोविदं

---

षादो व्यज्यते । न्यस्तादपाङ्गात् प्रसर्पिभिः प्रवाहनीत्या निर्गच्छद्भिः । अनेन चिन्ताविषादादयो व्यज्यन्ते । अश्रुभिरिति बहुवचनेन सदानिर्यन्त्रणप्रसृमरत्वं तेन दुःखबाहुल्यं च द्योत्यते । अनतिलुलितः कार्श्यादनातिस्पृष्टः ज्याघाताङ्को येन तत्तथा सत् स्रस्तमिति संबन्धः । स्रंसनक्रियाविशेषणं वा । मणिबन्धनात् बाहुपाणितलसन्धिबन्धात् । प्रतिसार्यत इत्यत्र संबन्धः । कनकवलयं मङ्गलार्थतया ध्रियमाणम् । वक्ष्यति च "बिभ्रत् काञ्चनमेकमेव वलय"मिति । विरहचिह्नमिदमिति केचित् । कनकेति वर्णपरभागं प्रकाशयति । स च मौर्वीकिणस्य काष्ण्यात् कनकस्य पीतत्वाच्च । स्रस्तं स्रस्तं करवलनादौ स्वस्थानात् पुनः पुनर्विलम्बितम् । प्रतिसार्यते प्रकोष्ठरूपस्वस्थानस्थं क्रियते । अत्रानुवादमुखेनाश्रुप्रसरणोक्त्या जागरणमुत्तरार्द्धेन कार्श्यं चोपपादितम् । अत्र स्वभावोक्तिः काव्यलिङ्गं च । यदि च इत्थंभूतोऽस्मीत्युक्त एवार्थोऽनेन भङ्ग्यन्तरेण वर्ण्यते तदाश्रुप्रसरणादिकार्यमुखेन जागरादिप्रतिपादनादप्रस्तुतप्रशंसापि । अत्र नायकालम्बितो निशातदाक्षिप्तचन्द्रोदयादिभिरुद्दीपितोऽश्रुकार्श्यादिभिरनुभावितस्तदभिव्यक्तचिन्ताविषादग्लान्यौत्सुक्यादिभिः सञ्चारितो नायकाश्रयो विप्रलम्भः स्फुटमभिव्यज्यते । एवमत्रानुसंधीयमानः पूर्वानुभूतप्रकारस्तदानीं स्वाभिप्रायसिद्ध्या कृतकृत्यप्रायस्य नायकस्य "क्लेशः फलेन हि पुनर्नवतां विधत्त" इति नीत्या अमृतायमानतामेवोपगच्छति । इत्थं चात्र व्यज्यमानो विप्रलम्भः संभोगायमानः । यथा रघौ त्रयोदशसर्गे प्रतिप्रयाण इति ॥

शकुन्तलामनोरथं निभृतं साधयितुमुपायमाह मअण इत्या-

देवसेसापदेसेण तस्स राएसिणो हत्थं पापइस्सं । (मदनलेखोऽस्य क्रियताम् । तं सुमनोगुप्तं देवशेषापदेशेन तस्य राजर्षेर्हस्तं प्रापयिष्यामि)

अन — रोअदि मे सुउमारो अअं पओओ । किंवा सउंदळा भणादि । (रोचते मे सुकुमारोऽयं प्रयोगः । किं वा शकुन्तला भणति)

शकु — किं णिओओ वो विकप्पिअदि ॥ (किन्नियोगो वां विकल्प्यते)

प्रियं — तेण हि अत्तणो उपण्णासरूपं चिन्तेहि किंवि ललिअ-

---

दि । मदनोऽनुरागः । तत्सूचको लेखः पत्रिका । अस्य राज्ञः । अस्या इति पाठे मदनेत्यत्र संबन्धः । तं लेखम् । सुमनोभिः पुष्पैः गुप्तमाच्छादितम् । देवस्य शेषा निर्माल्यम् । "प्रसादाद्दीयते यत्तु देवस्य पुरतोऽर्चकैः। स्रक्चन्दनादिनिर्माल्यं तत्र शेषेति सा स्त्रिया"मिति धारानाथः । तस्या अपदेशेन नाम्ना व्याजेन वा । मुनिभिः कल्पितं देवनिर्माल्यमिदमिति व्याजेनेत्यर्थः । एवंविधा ह्युपाया वात्स्यायनीये । यथा कुमारे "न्यस्ताक्षरा धातुरसेन यत्रे"त्यादि । तदुक्तं संवदति रोअदि इति । मे मह्यम् । सुकुमारः सुकरो निरपायश्च । किंवेत्यादिना कार्यकल्पनायां शकुन्तलायाः प्राधान्यं द्योत्यते । सखीहृदयं जानती भङ्ग्या तद्वचनमनुमन्यते किमित्यादि । किं विकल्प्यते नैवेत्यर्थः । नियोगश्चेदविलम्बितमेवानुष्ठातव्यो न विकल्पयितव्य इति भावः ॥

तर्हि तथैवानुष्ठीयतामित्याह तेण हीत्यादि । तेन हि उपास्याभिनन्दितत्वादित्यर्थः । आत्मनः आत्मविरहावस्थायाः । उपन्यासरूपं योजनारूपम् । चिन्तय सावधानं निरूपय । अ-

पदबंधणं। (तेन ह्यात्मन उपन्यासरूपं चिन्तय किमपि ललितपदबन्धनम्)

शकु— हळा चिंतेमि अहं, अवहीरणाभीरु वेपदि मे हिअअं ॥ (हळा चिन्तयाम्यहं, अवधीरणाभीरु वेपते मे हृदयम्)

राजा— अयं स ते तिष्ठति सङ्गमोत्सुको
विशङ्कसे भीरु यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥ ११ ॥

---

नेनार्थशुद्धिप्रकार उक्तः । किमप्यत्यर्थं ललितं माधुर्यादिगुणप्रधानं पदबन्धनं पद्यम् । अनेन शब्दवैशिष्ट्यमुक्तम् । किमपीति लोकोत्तरचमत्कारकारीति वा । तदुक्तमनुवदन्त्याह हळेत्यादि । चिन्तयाम्यहं आत्मोपन्यासस्वरूपं चिन्तयामीत्यर्थः । अत्र विशेषोऽस्तीत्याहावधीरणेत्यादि । अवधीरणया तत्संभावनया भीरु । अयमर्थः पत्रिकाप्रदानेन प्रणयित्वे प्रकाशिते तत्कृतामवज्ञां संभावयामि ततो भीरुत्वान्मम हृदयं कम्पत इति । अनेन नायिकाया मानिनीत्वं दर्शितम् । यथा कुमारे "अभ्यर्थनाभङ्गभयेन मानी माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे" इति । एवमपि चिन्तयामीत्युक्तिः सखीवाक्याङ्गीकारः ॥

अथ तदीयामवधीरणाशङ्कामसहमानस्तां परिहरत्ययमित्यादिना । अयं त्वद्वियोगाग्निसन्तापशान्तये त्वदालोकनचन्द्रिकामनुभवन् सविधवर्ती । सः यस्त्वया निश्चितानुरागोपि शङ्कितः । ते इत्यत्रापि संबन्धात् त्वत्सम्बन्धीत्यर्थश्च । ते निखिललोकहृदयङ्गमसमग्रगुणसंपन्नायास्तव । सङ्गमोत्सुकः सङ्गमे क्षणविलम्बमसह-

सख्यौ— अत्तगुणावमाणिणि को दाणीं सरीरनिव्वापइत्तअं

मानः । तिष्ठति अवसरं परिपालयन् व्यवधाय स्थितिं करोति। वर्तमानप्रत्ययेन सङ्गमावधि त्वत्समीपान्नापगच्छतीति द्योत्यते। तच्छब्दार्थं विवृणोति विशङ्कस इति । विशङ्कसे विविधं शङ्कसे । अहो तव मानिनीत्वमिति भावः । भीरु भयशीले शीलं हि यत्नेनापि वारयितुं न शक्यमिति भावः । अवधीरणाजन्यस्य भयस्य नायमवकाश इति च । यतः यस्मात् मत्तः । अत्रानेनार्द्धेन त्वया मत्तोऽवधीरणा न शङ्कया किं तु त्वत्तो मयैवेत्यर्थो दर्शितः । तमर्थं दृष्टान्तेन साधयति लभेतेत्यादि । लभेतेति संभावनायां लिङ् । प्रार्थयिता प्रार्थनापूर्वं प्रयत्नान् कुर्वन् । श्रियं समृद्धिलक्षणां संपदम् । प्रार्थयिता श्रियं लभेत वा न वेति संबन्धः । दैवस्यापि पौरुषसहकारित्वाद्विकल्पविषयोऽयमर्थ इत्यर्थः । श्रीः प्रार्थयितुर्दुर्लभेति भावः । दुरापः दुर्लभः । ईप्सितः स्वयमाप्तुमिष्टः । कथं भवेत न भवेत । श्रिया ईप्सितः सुलभ एवेति भावः । यथा "न रत्नमन्विष्यति मृग्यते हि त" इति । इयं सादृश्यनिमित्ताप्रस्तुतप्रशंसा , त्वां प्रार्थयितुस्त्वं दुर्लभा त्वया प्रार्थ्यमानस्ते सुलभ इत्यर्थः। यतोऽहं सुलभस्ततो न मत्तोऽवधीरणा शङ्कया यतस्त्वं दुर्लभा ततस्त्वत्त एवेति पूर्वापरसंबन्धः । यद्वा अयं स इत्यादिना त्वं मम दुर्लभा तवाहं सुलभ इत्यर्थो भङ्ग्या दर्शितस्तत्र लभेतेत्यादिदृष्टान्त इति प्रतिवस्तूपमा । हर्षौत्सुक्यादयो भावाः ॥

उक्तदृष्टान्तसब्रह्मचारिणा दृष्टान्तेन सखीजनस्तदाशङ्कां परिहरति अत्त इत्यादि । वारयतीत्यपि पाठः । अत्राप्यप्रस्तुतप्रशंसा । पूर्वमेव त्वत्समागमसमुत्सुकः प्रियतमस्तत्समागमप्रवृत्तां त्वां कथमव-

जोसिणीं पडंतेण वारइस्सदि । (आत्मगुणावमानिनि क इदानीं शरीरनिर्वापयित्रीं ज्योत्स्नां पटान्तेन वारयिष्यति)

शकु — णिओइदा दाणीं ह्मि ॥ (नियुक्तेदानीमस्मि)

(उपविष्टा चिन्तयति)

राजा — स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि ।

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १२ ॥

---

जानीयान्नैवेति भावः । अत्र नायिकामौग्ध्यासहनादात्मगुणावमानिनीति निन्दागर्भं संबोधनम् । एतदनुसारेणाक्षेपद्वारा अप्रस्तुतार्थेन प्रस्तुतार्थप्रतिबोधनमिति बोध्यम् । तदवधीरणाभीरुत्वं मा कृथा इति भावः । तदभिप्रायं जानन्त्याह णिओइदा इत्यादि । पूर्वं नियोगमात्रं कृतमिदानीं तु शङ्कापरिहारपुरस्कारेण सोपपत्तिकमात्मोपन्यासे नितरां नियोजितास्मीत्यर्थः । सस्मितमिति पाठे निन्दास्तुतिश्रवणात् हृदयङ्गमेन दृष्टान्तेन मनोगतार्थस्य दृढप्रत्ययाच्च स्मितम् । उपविष्टेति पुष्पशयनादुत्थाय कथञ्चिदासीनेत्यर्थः । अनेन तत्रादरः प्रतिभागुणाविर्भावश्च प्रकाश्यते । शयने हि प्रतिभा विश्रान्तप्राया । उपवेशन एव लेखनसौकर्यं च ॥

अथ नायकः प्रियामवलोकयन्निदानीं किमपि विशेषदृश्यत्वमापततीत्याह स्थान इत्यादि । स्थाने खलु "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । इदानीं विशेषेण दर्शनं युक्तमेवेत्यर्थः । अत एवाह विस्मृतनिमेषेणेति । अनेन दर्शने कौतुकाधिक्यं द्योत्यते । प्रियां एवमन्था का पुनः प्रियेत्यत्यन्तनिर्वृतिकारित्वं द्योतयति । अवलोकयामि सुष्ठु पश्यामि । अथ चिन्तास्वभाववर्णनेन युक्तत्वमुपपादयति उन्नमितेत्यादि । उन्नमितैकभ्रूलतमिति चिन्तानुभावः ।

शकु— हळा चिन्तिअं मए पत्थुअं । असण्णिहिदे उण ले- हणसाहणे । (हळा चिन्तितं मया प्रस्तुतम् । असन्निहिते पुनर्लेखनसाधने)

प्रियं— इमस्सिं सुओदरसुउमारे णळिनीपत्ते णहेहिं णिक्खित्तव- ण्णं करेहि । (अमुष्मिन् शुकोदरसुकुमारे नळिनीपत्रे नखै- र्निक्षिप्तवर्णं कुरु)

---

यदुक्तं "स्त्रीणां कोपे वितर्के च दर्शने श्रवणे निजे । भ्रूर्लीलाहे- लयोश्चैव कार्योत्क्षिप्ता विचक्षणै' रिति । अनेन रचनायां पदे पदे सावधानत्वमस्या व्यज्यते । आननं अनति जीवत्यनेनेत्यन्वर्थम् । भ्रूलतोन्नमने हेतुमाह पदानि रचयन्त्या इति । संदेशपद्ययोग्यानि सुबन्तादीन्यूहापोहाभ्यां पद्ये निवेशयन्त्या इत्यर्थः । कण्टकितेन रोमाञ्चितेन । रोमाञ्चः प्रियतमानुसंधानजन्यानन्दस्याप्यनुभावः । प्रथयति विस्तारयति प्रकाशयतीति यावत् । मयीति स्वस्य धन्यतां सुभगम्मन्यतां च द्योतयति । कपोलेनेति तदानीमेकस्यैव दर्शनोपपत्तेरेकवचनम् । रोमाञ्चस्यानुरागानुभावत्वात्तद्धता कपोलेन तमनुमापयतीत्यर्थः । अत एवानुमानालङ्कारः स्वभावोक्तिश्च । अत्र- त्यरचनास्वभावदर्शनेन नायकस्य कोऽपि चमत्कारोदयः प्रतीयत इति हर्षो भावः ॥

नियोगानुष्ठानं निवेदयति हळेत्यादि । हर्षगर्भमामन्त्रणम् । चिन्तितमिति भूतप्रत्ययेन वस्तुनः पारिपूर्ण्यमुक्तम् । लेखनसाधने लेखनी पत्रिका च । इमस्सिं इत्यादि । प्रस्तुतमित्यनुषज्यते । अमुष्मिन्नित्यङ्गुल्या सन्निहितस्य निर्देशः । शुकोदरसुकुमार इत्यक्ष- रविन्यासनौकर्यं द्योतयति । दरनया श्यामलत्वं तेन परभागश्च

शकु — (यथोद्दिष्टं रूपयित्वा) हळा सुणह दाव एदं सङ्गअत्थं ण वात्ति । (हळा शृणुतं तावदेतत् संगतार्थं न वेति)

उभे — अवहिदे ह्मः ॥ (अवहिते स्वः)

शकु — (वाचयति)

तुझ ण आणे हिअअं मम उण मअणो दिवावि रत्तिं वि ।
णिग्घिण तवइ बलिअं त्वदहिमुहमणोरहं हिअअं ॥ १३ ॥
(तव न जानामि हृदयं मम पुनर्मदनो दिवापि रात्रिमपि ।
निर्घृण तपति बलीयस्त्वदभिमुखमनोरथं हृदयम्)

---

द्योत्यते । नखैरित्यादि । नखैरत्र लिखेत्यर्थः । अनेन तस्या अक्षरलेखनकलाकौशलं दार्शितम् । यथान्यत्रापि "नखपदलिपयोऽपि सूचितार्थाः प्रणिदधिरे दयितैरनङ्गलेखाः" इति । यथोद्दिष्टमित्यादि । नखैर्लिखित्वेत्यर्थः । हळेत्यादिसंबुद्धिः सावधानश्रवणप्रार्थनां द्योतयति । शृणुतं श्रुत्वा परीक्षेथाम् । अनेन तद्वाचनायां तस्याः कौतूहलं प्रतीयते । अवहिदे ह्म इति तच्छ्रवणादरं द्योतयति ॥

अथ मदनतापासहिष्णुतया सोपालम्भं स्वावस्थां निवेदयन्ती स्वीकारं प्रार्थयते तुझ इत्यादि । तव न जानामि हृदयं मदनस्तपति वा न वेति न जानामीत्यर्थः । एवं सति स्वहृदयनिवेदनमनुचितं तथापि तत करोमीत्याशयेनाह ममेति । अनेन तद्धृदयाज्ञानेऽपि स्वहृदयनिवेदनेन नायिकाया दुःखातिशयो लज्जाप्रशमादिश्च प्रतीयते । यथा किराते "तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया ममाधयः" इति । मम स्त्रीत्वादस्पृष्टधैर्यायाः पुनःशब्दो विशेषे । मम पुनर्हृदयमिति संबन्धः । मदन इत्यन्वर्थं प्रथमदर्शने हर्षकारित्वात् । अनेन स कथं पुनस्तापं करोतीति

राजा— (सहसोपसृत्य)

---

द्योत्यते । दिवापि रात्रिमपीति कालभेदेनास्य वृद्धिह्रासौ नेति सामान्यतो रागाद्यतिरेकं व्यञ्जयति । तेनातिदुस्सहत्वं च । दिवा चिन्त्यते रात्रौ किञ्चित् स्वास्थ्यं भवेदिति तत्र तदलाभात् पुनर्निरूप्यते रात्रेरवसाने किञ्चित् सुखं स्यादितीति विशेषं बोधयितुमेवमुक्तम् । तपति तापयति । लटा तापावसानं न दृश्यत इति, बलीय इत्यनेनाविलम्बमेव प्रतिविधेयमन्यथा प्राणापायोऽपि भवेदिति च द्योत्यते । एवं तापने हेतुस्त्वदभीत्यादि । त्वदभिमुखः त्वद्विषयः मनोरथोऽनुरागः । यद्वा त्वदभिमुखा मनोरथा आलिङ्गनचुम्बनाद्यभिलाषाः यस्य तत् । एवमनुभूयमानाया दुरवस्थायाः तदेकहेतुत्वमनुसंधायाह निर्घृणेति । यतस्त्वन्निमित्तमेव मदनेनैवं तप्यमानायां मयि दयां न तनोषि ततो निर्दयेत्यर्थः । "वेपमानजननीशिरश्छिदा प्रागजीयत घृणा ततो मही"तिवदेवमुपेक्षायां स्त्रीवधाख्यपातकमपि तव पतिष्यतीत्यनेन द्योत्यते । एवमुपालम्भः । अनेनातः परमपि निर्दयत्वं विहाय झटिति त्वदेकशरणायां मयि दयां विधेहीति प्रार्थना प्रकाश्यते । अत्र काव्यलिङ्गं परिकरश्च । दिवापि रात्रिमपि तपतीत्यनेन तद्व्यापारेण कालयापनादिव तव हृदयं न तपतीवेत्युत्प्रेक्षा । त्वदभिमुखेत्यादिना त्वयि मत्सरादिव त्वत्संबन्धि हृदयं तपतीवेत्युत्प्रेक्षा च । मदनस्तपतीत्यत्र विरोधाभासश्च ध्वन्यते । अत्र बहवो भावा व्यज्यन्ते । तेषु कोपौत्सुक्ये प्रधाने । विप्रलम्भश्च स्फुटः । अधिकं राघवीये श्रीनिवासीये च द्रष्टव्यम् ॥

अथोपलब्धरहस्यसारस्य संतोषपरवशस्यात्मावस्थां निवेदयितु-

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ १४ ॥

---

मयमेवावसर इति मन्वानस्य राज्ञो व्यापारमाह सहसोपसृत्येति । अयं निर्घृणेत्यादितद्वचनश्रवणजनितावेगस्य हर्षस्य चानुभावः । उपसर्पणस्यातर्कितत्वेन रसपरिपोषः प्रकाश्यते । यथा "प्रणयिनो निशमय्य वधूर्बहिःस्वरमृतैरमृतैरिव निर्ववा"वित्यादौ । अथ भवती मदीयं हृदयं न जानात्येवेति दर्शयितुं स्वावस्थां निवेदयति तपतीत्यादि । तापः. शरीरस्य मनसः संक्रान्तं प्रबलतरमौष्ण्यं तेन गात्राणां तनुत्वमेव भवति न तु सद्यश्शरीरापायप्रसङ्ग इति तनुगात्रीति संबोधनं श्लाघात्मकं च । अनिशमित्युभयशेषः । प्रथमवाक्यं नायिकोक्तानुवादः । स च तदपेक्षया स्वीयविप्रलम्भखेदस्य प्रबलतरत्वं ख्यापयितुम् । तदेव निवेदयति मामिति । पुनश्शब्दो विशेषे । दहत्येवेति । दह भस्मीकरणे । अनेनात्युत्कटस्तापो लक्ष्यते । वैवर्ण्यादिकं व्यङ्ग्यम् । दहत्येवेत्यनेन समागमविलम्बे देहस्यापायोऽपि भवतीति द्योत्यते । न तु त्वद्वञ्चनार्थमेतच्चाटुभाषणं अपि तु भूतार्थमेवेत्येवकारेण सूच्यते । तथा च भवती तापमात्रं जानाति न तु दाहमतो मदीयहृदयं कथं जानीयादिति प्रत्युपालम्भः । उक्तार्थे सार्वलौकिकं दृष्टान्तमाह ग्लपयतीत्यादि । ग्लपयति ग्लानं करोति, निश्शोभं करोतीत्यर्थः । शशाङ्कमिति नक्तं ज्योत्स्नाबाहुल्याच्छशरूपाङ्कः स्फुटः दिवा तस्य कथापि नास्तीति सूचयति । हीत्यवधारणे प्रसिद्धौ वा । अयमर्थः दिवसश्चन्द्रमसो वैवर्ण्यादिकं करोति तत्प्रेयस्याः कुमुद्वत्यास्तु मुकुलनलक्षणं कार्श्यमेवेति । अत्र दृष्टान्तः प्रतिवस्तूपमा वा । राज्ञस्तापयोरुत्कर्षव्यञ्ज-

सख्यौ ( सहर्षम् ) साअदं अविलंबिणो मणोरहस्स । (स्वागतमविलम्बिनो मनोरथस्य)

शकु— (अभ्युत्थातुमिच्छति)

राजा— अलमलमायासेन ।

संदष्टकुसुमशयनान्याशुक्लान्तबिसभङ्गसुरभीणि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ ५ ॥

---

नाव्यतिरेकः, मदनस्तपतीति पूर्ववद्विरोधश्च ध्वन्यते । प्राधान्येनौत्सुक्यं भावः ॥

सहर्षमिति । अतर्कितोपगमनेन हर्षः । अथाभीष्टलाभमुदितः सखीजनः प्रथममनुष्ठेयमनुतिष्ठति साअदमित्यादि । अविलम्बिनः दर्शनोपायचिन्तन एवाविलम्बमुपनतस्य । अनेन तद्वृत्तान्तप्रस्तावे स्वयमेव तदागमनं मङ्गलमिति तासां हृदयोल्लासः कार्यसिद्धेरविलम्बबुद्धिश्च प्रतीयते । यथा रघौ "इति वादिन एवास्य होतुराहुतिसाधन"मित्यादि । मनोरथस्येत्यनेन तद्विषयो नायको लक्ष्यते । तेन तदागमने मनोरथप्राप्तिबुद्ध्या कृतकृत्यताभिमानो व्यज्यते । अभ्युत्थातुमिति । इच्छति आरभते । अनेनाभ्युत्थानासामर्थ्यं द्योत्यते । नायिकाया लज्जासाध्वसहर्षादिपारवश्यमप्यत्र प्रतीयते ॥

तदारम्भमवलोकयन्नवसरोचितं सात्त्विकरूणमाहालमित्यादि । औत्सुक्यादरः प्रतीयते । आयासेन अशक्यकरणेन । अलं आयासो मास्तु । सुखमुपविशेति भावः । उक्तार्थे हेतुमाह संदष्टेत्यादि । ते गात्राणि उपचारं नार्हन्तीति संबन्धः । गात्राणि अवयवाः । गात्रमङ्गं कलेवर इति विश्वः । तत्तदङ्गेन तत्तदुपचारस्य कर्तव्यत्वाद्बहुवचनम् । उपचारमभ्युत्थानवन्दना-

अन— इदो सिळादळेक्कदेसं अणुगिण्हदु वअस्सो । (इतः शिलातलैकदेशमनुगृह्णातु वयस्यः)

---

दिकम् । उपचारानर्हत्वं "सर्वेषामातुरो गुरु"रिति न्यायात् । आतुरत्वं दर्शयति गुरुपरितापानीति । गौरवमतिशयः । गुरुत्वे सत्यभ्युत्थानानर्हत्वमित्यर्थोऽप्यत्र स्फुरति । परितापगौरवं कथं ज्ञायत इत्यत्राह संदष्टेत्यादि । संदष्टं ग्लानतया स्वेदार्द्रतया च संश्लिष्टम् । संदष्टेत्यनेन संश्लेषो लक्ष्यते । तेन कुसुमानां सहाभ्युत्थानं तेन तद्धारणे गात्राणामशक्तता च द्योत्यते । कुसुमशयनं तद्गतं कुसुमकदम्बकं येषु तानि । अनेन गात्राणां परिवर्तनपरिक्षेपादिकं ध्वन्यते । आशु तापगौरवात्स्पर्शकाल एव क्लान्ता बिसभङ्गा वलयहारादिस्थानीया मृणालखण्डाः येषु तानि । तानि च सुरभीणि उशीरानुलेपनात् पुष्पशयनसम्मर्दाद्वा । नात्र तृतीयासमासः । क्लान्तबिसभङ्गसौरभाप्रसिद्धेः । तत्प्रसिद्धौ तु सोऽस्तु । आशुक्लान्ताः गात्राणामस्पर्शादीषच्छ्वेता अन्ताः पर्यन्ता येषां ते प्रकृतिस्था एवेति यावत्, तैर्बिसभङ्गैरिति केचित् । विशेषणाभ्यां शिशिरोपचारवैफल्यं तेन सखीजनविषादादिकं च प्रतीयते । "मनोरागस्तीव्रं विषमिव विसर्पत्यविरत"मित्यादि मालतीवचनमस्य श्लोकस्य भाष्यरूपं बोध्यम् । अत्र काव्यलिङ्गम् । नायिकाश्रया ग्लान्यालस्यादयो नायकाश्रया आवेगौत्सुक्यादयश्च भावा व्यज्यन्ते ॥

अथानन्तरोचितमाहेदो इत्यादि । वयस्य इति । अनभ्युत्थानानुज्ञया वयस्यत्वं त्वयाङ्गीकृतं सहृदयो हि वयस्य इत्युच्यते । सहृदयत्वं च सुखदुःखादावनुभवस्य तुल्यरूपत्वमिति भावः । किं चानेन भवानस्मत्सख्याः पतित्वेन वृत इति च सूच्यते ।

राजा— (उपविशति)

शकु— (सलज्जं तिष्ठति)

अन— वअस्स दुवे वो अण्णोण्णानुराओ पच्चक्खो। सहीसिणेहो मं पुनरुत्तवाइणीं करेइ। (वयस्य द्वयोर्वामन्योन्यानुरागः प्रत्यक्षः। सखीस्नेहो मां पुनरुक्तवादिनीं करोति)

राजा— भद्रे नैतत् परिहार्यम्। विवक्षितं ह्यनुक्तमनुतापं जनयति॥

---

अत एवाहेतः शिलातलैकदेशमिमि। त्वत्प्रियतमाधिष्ठितशिलातलैकदेशमित्यर्थः। अनुगृह्णात्वित्यनेन उपवेशनं लक्ष्यते। शिलातलस्य धन्यत्वादिकं व्यज्यते। रहोपवेशे युवयोः परस्परानुरागदर्शनादिना नः प्रीतिर्भविष्यतीति तथा करोत्विति भावः। अत एवानुपदं वक्ष्यति। "वअस्स दुवे वो" इत्यादि। शकुन्तला सलज्जमिमि। एतदवस्थायामपि लज्जाया अत्यागः कन्यात्ववासनया॥

अथोचितप्रतिपत्तिजागरूकानसूया लोकोत्तरयोरन्योन्यानुरूपयोः चिराभिलषितसमागमयोर्दैवाद्रहसि संगतयोर्नायकयोर्मनोरथसरण्यवगाहनायावतारं रचयति वअस्स इत्यादि। पुनरुक्तवादिनीमिति पुनरुक्तपदेनानुपादेयं लक्ष्यते। इतरेतरानुरागो हि विवाहकर्मणि परार्ध्य मङ्गलमिति परस्परानुरागे विदिते सत्यन्येन वक्तव्यं किमपि न। अतः सखीस्नेहेन मया यद्विवक्षितं तदनुपादेयमेव। अतो न वच्मीत्यर्थः। अथ तस्योपादेयत्वं सोपपत्तिकमाह भद्र इत्यादि। तद्विवक्षितश्रवणकुतूहलत्वरया तत्समावर्जनार्था संबुद्धिः। वार्तायामपि भद्रतरा ते वैदग्धीति भावः। एतत् त्वया विवक्षितम्। न परिहार्यम्। उपादेयमेवेति भावः। अत्र हेतुः विवक्षितमित्यादि। अतो वक्तव्यमेवेति भावः॥

अन— आवण्णस्स विसभवासिणो जणस्स अत्तिहरेण रण्णा होदव्वं ति एस वो धम्मो । (आपन्नस्य विषयवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमित्येष वो धर्मः)

राजा— नास्मात् परम् ॥

अन— तेण हि इअं णो सही तुमं एव्व उद्दिसिअ इमं अवत्थंतरं भअवदा मअणेण आरोविदा । ता अरुहसि अ-

---

विवक्षितं भङ्ग्या वक्तुमुपक्रमते आवण्णस्स इत्यादि । इयमुक्तिः साधारण्येन । आपन्नस्य परचक्रादिभ्यः कामाच्च आपादं प्राप्तस्य । विषयः स्वदेशः अनुभवश्च । जनस्य जनसामान्यस्य स्त्रीजनस्य च । आर्तिः अनर्थः उत्कण्ठा च । राज्ञा क्षत्रियेण रागिणा च । एषः आर्तिहरणम् । वः क्षत्रियाणां रागिणां च । धर्मः अवश्यानुष्ठेयः स्वभावश्च । उक्तार्थे स्वसम्मतिं प्रदर्शयितुं मध्येऽनुवदति नास्मादिति । अस्मात् आर्तिहरणात् । परमन्यत् । न धर्म इत्यनुषज्यते ; यद्वा परमुत्कृष्टम । धर्ममिति विपरिणामेनानुषङ्गः ॥

तेन हीत्यादि । तेन हि उक्तस्य धर्मत्वेन । इयमिति पारवश्यस्य प्रत्यक्षविषयत्वं नौ सखीति वात्सल्यातिशयं त्वामेवोद्दिश्येति केनाप्यन्येन घटयितुं त्वया यत्यतामित्यस्माभिर्न नियुज्यस इति च दर्शयति । अवस्थान्तरमवस्थाविशेषं दशम्यवधिकां दशामित्यर्थः । भगवतेति । "अन्येषु जन्तुषु च यस्तमसावृतेषु विश्वस्य धातरि समः परमेश्वरेऽपि । सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा" इत्यादिवत् प्रख्यातविभवत्वं तत एव बहुमानादिकं च द्योतयति । अत एवैवं महापुरुषेऽनुरागजननेनानन्दकारित्वादाह मदनेनेति । आरोपिता आरोपणेनानयनं लक्ष्यते । मूर्छनाद्यतिशयो व्यज्यते । अर्हसि अधिकारी भवसि अनेन प्रार्थना गम्यते । अभ्युपपत्त्या अभ्युपपत्तिरनुग्रह इत्य

ब्भुववत्तीए जीविअं से अवलंबिदुं । (तेन हि इयं नौ सखी त्वामेवोद्दिश्य इममवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम्)

**राजा— साधारणोऽयं प्रणयः । सर्वथानुगृहीतोऽस्मि ॥**

**शकु—** (अनसूयां विलोक्य) अळं दे अंतउरविरहपज्जुसुअस्स

---

मरः । अवलम्बितुमित्यनेन धारणं लक्ष्यते । आलस्यादिनिवृत्तिर्व्यङ्ग्या । किं चावलम्बितुमित्यनेन जीवितस्य पतनोन्मुखत्वं द्योत्यते । तेनानवलम्बने अवश्यं पातश्च । जीवितावलम्बनप्रार्थनया प्राणत्राणजं महत्सुकृतमपि ते सुलभमिति च । यथा शुकसन्देशे "प्रज्ञातर्या"मित्यादि । त्वदनुरक्तामेनां परिगृहाणेति भावः । राजा स्वप्रार्थनां भङ्ग्या दर्शयन्ननुमोदमान आह भद्र इत्यादि । भद्र इति नागरिकाणामपि वैदग्ध्यमतिशेष इति भावः । साधारण आवयोः समानः । अयमभ्युपपत्त्या जीवितालम्बनविषयः । प्रणयः प्रार्थना । युवाभ्यां सखीसमर्पणेन तदनुरागपरवशोऽहं कृतजीवितावलम्बः कार्य इत्यस्मत्प्रार्थनेत्यनेन भङ्ग्या दर्शितम् । उपसंहरन्नाह सर्वथेति । सर्वथा सर्वप्रकारेण न त्वेकेन । वयस्यव्यवहारेणार्धासनदानेन अस्मत्प्रार्थनामन्तरा युष्मत्प्रार्थनेन चेत्यथः । अनुगृहीत इति । अभीष्टसिद्ध्यनुकूलाचरणमनुग्रहः । युवाभ्यामित्यर्थात् । अथ च दैवेनानुगृहीत इत्यर्थः ॥

अनसूयां विलोक्येति । वअस्स इत्यादि सर्वं प्रियंवदावचनमिति पक्षे प्रियंवदां विलोक्येति पाठः । त्वया किमेवमस्य हृदयमनिश्चित्यैवास्मत्प्रार्थना प्रकाशिता तुल्यानुरागत्वे हि सर्वं सुघटमन्यथा नः प्रार्थनाभङ्गेन परिहास एव स्यादिति अवलोकनेन

राएसिणो उवरोहेण ॥ (अलं तवान्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन)

राजा— इदमनन्यपरायणमन्यथा
हृदयसन्निहिते हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे
मदनबाणहतोऽस्मि हतः पुनः ॥ १६ ॥

---

प्रकाश्यते । यथा "किन्नस्तत्कथया गोप्यः कथाः कथयतापराः । यात्यस्माभिर्विना कालो यदि तस्य तथैव न" इति । अत एव इतः पूर्वमेव राज्ञः स्वाङ्गीकारानुद्यमेनान्तःपुरानुरागहेतुकं स्वस्मिन्नादरमाशङ्क्य प्रणयकुपिता तन्निर्बन्धात्सखीं निरुणद्धि अलंइत्यादि । अन्तःपुरविरहपर्युत्सुकस्येति प्रार्थनाया उपरोधत्वे हेतुः । महाराजस्य विरहदुःखमिदं न मत्कृतमिति भावः । राजर्षेरित्यनेन उपरोधानर्हत्वं दुर्भगासु तपस्विकन्यकासु कथमभिरुचिः स्यादिति च सूच्यते । उपरोधेनालमिति एवंविधस्यास्य नः प्रार्थना उपरोध एव तं मा कृथा इत्यर्थः । उपरोधेनास्य मनोरथभङ्गः अस्माकं लाघवं च स्यात् । सर्वथेत्याद्युक्तिर्दाक्षिण्येनेति भावः ॥

अथ तद्वचनवज्राहतो राजा तत्प्रणयभङ्गभीरुतया तन्मनःकालुष्यमपनेतुमाहेदमित्यादि । नायिकानुसन्धानेन हृदयस्य साक्षात्कारादिदमिति । अन्यत् परायणमभिप्रेतमन्यत्र परायणमासङ्गो वा यस्य तत् । अन्यदित्यन्तःपुराद्यर्थकं सामान्ये नपुंसकम् । "परायणमभिप्रेत" इत्यादिविश्वः । "साकल्यासङ्गवचने पारायणपरायण" इत्यमरः । तन्नेत्यनन्यपरायणं त्वदेकपरायणमिति भावः । अन्यथा अन्यपरायणत्वेन । अन्तःपुरविरहपर्युत्सुकत्वेन दाक्षिण्यनि

अन— त्रअस्स बहुवल्लहा राआणो सुणीयदि । जह णो पि·

---

न्नत्वेन चेति भावः । हृदयसन्निहिते शिलादिप्रतिमायां परदेवतावत् मम मनसि सम्यङ्निहिते इति संबुद्ध्या त्वत्प्रत्ययार्थं व्याजेन चाटुभाषणं नैतत् । किं तु भूतार्थमेवेति त्वयैव ज्ञातुं शक्यमिति सूच्यते । अन्यथा समर्थनमनुपपन्नमिति च । समर्थयसे युक्त्या साधयसे । मदिरा मद्यं तत्तुल्ये ईक्षणे यस्या इति संबुद्ध्या तवान्तःपुरविषयकासूया स्फुटैव यदपाङ्गे लौहित्यं दृश्यत इति सूच्यते । मदिरोपमया एवं संरम्भेऽपि हृद्यो मदकरश्च ते कटाक्षमोक्ष इति प्रशंसापि । मदनस्येति पूर्वं हर्षकारित्वं द्योतयति । बाणैः त्वन्निमित्तेन प्रयुक्तैः हतः पूर्वमेवात्यन्तं पीडितः । अस्मीत्यहमर्थेऽव्ययम् । हतः पुनः । त्वद्विरहस्यासह्यतया गत्यन्तराभावादतः परं प्राणापायशरणो भविष्यामीत्यर्थः । अविलम्बद्योतनार्थो भूतनिर्देशः । तदेवं मा समर्थयस्व, त्वदेकावलम्बने मयि प्रसीदेति भावः । हननोपरि हननं पिष्टपेषणवदनुपपन्नमिति शब्दशक्त्या द्योत्यते । अनन्यपरायणामिति निषेधमुखेनोक्तिरन्तःपुरविषयकासूयानिवर्तनार्था । अत्र प्रसादनपरेणानेन वचनेन मदिरेत्यादिसंबुद्ध्या च तस्याः प्रणयकोपोदयोऽभिव्यज्यते । नायकनिष्ठाः शङ्कादयो भावाश्च व्यज्यन्ते । एतैरुपस्कृतस्य मदनबाणहत इत्यनेन गम्यस्याभिलाषविप्रलम्भस्य पुनर्हत इतीर्ष्याविप्रलम्भेन अन्यथेत्यादिना हृदयसन्निहितायाः ततो वियोगप्रतीत्या वियोगविप्रलम्भेन च संभेदः प्राधान्येन ध्वन्यत इति चमत्कारातिशयः । अनुप्रासोऽपि रसं परमुपस्करोति । परिकरश्चालङ्कारः ॥

कार्यज्ञा कार्यं निष्कर्षति वअस्स इत्यादि । बहुवल्लभा इति ।

**असही बंधुजणसोअणीया ण होइ तह णिव्वह ॥** (वयस्य बहुवल्लभा राजानः श्रूयन्ते । यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वह)

**राजा— भद्रे किं बहुना ।**

---

तत्त्वं प्रभुत्वात् रत्नहारित्वात् दिग्विजयादौ स्त्रीरत्नानां लाभाच्च । वल्लभेति तासु प्रेमातिशयं सूचयति । श्रूयन्ते इतिहासादिमुखेन ज्ञायन्ते । इयं सामान्योक्तिः । तत्रापि राजत्वाद्बहुवल्लभत्वेन भाव्यमिति भावः । अत इत्यर्थात् । नौ प्रियसखीमनेनास्माभिरिदं वक्तव्यमेवेति द्योत्यते । तथा निर्वहेति भवतो बहुवल्लभत्वादस्यां कालेनानादरः शङ्कास्पदं स यथा न भविष्यति तथास्यामनुतिष्ठेत्यर्थः । ता इव एनामपि बहुमतां विदध्या इति भावः । निर्वहेति यावद्दाम्पत्यं तथा विधातव्यमिति द्योतयति । अत्र अलं दे इत्यादिग्रन्थस्यान्यथापि भावं व्याचक्षते । तथा हि । अथ नायिका नायकमनुरक्तमवधार्य तस्मादसाधारणीं पदवीं लिप्सुस्तस्मिन् कृतकमनादरलेशमारोप्य सखीं निर्बन्धान्निरुणद्धि अलमित्यादि । इदमित्यादि । मदिरे हृद्ये ईक्षणे यस्याः । अनेन नयनकालुष्याभावादन्यथा समर्थनं न वास्तवमिति द्योत्यते । अथापि । यदि समर्थयसे समर्थनं वास्तवं चेत्तदेत्यर्थः । शेषं पूर्ववत् । अथ सखी नायकस्य वैमनस्यं परिहरन्ती कर्तव्यं बोधयति वअस्स इत्यादि । अनेनापायदर्शी स्नेह इति न्याय उद्भावितः । इति ॥

समर्थमुत्तरमाह भद्र इत्यादि । भद्र इति मनोरथाधिकफलप्राप्त्या भद्रत्वमिदानीं वः संपन्नमिति भावः । किं बहुना ।

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्रवसना चोर्वी सखी च युवयोरियम् ॥ १७ ॥

---

युष्माभिरेवं बहु न वक्तव्यमित्यर्थः । कुत इत्यत्राह परीति । यद्वा । किं बहुना मम बहूक्तेन किम् । एवंविधवचनाक्षेपेण वक्ष्यमाणस्य सारत्वमल्पत्वं च द्योत्यते । परिग्रहेति । परिग्रहपदेन इयमेव वल्लभा इतरास्तु परिग्रहा एवेति द्योत्यते । तेषां बहुत्वेऽपीत्यनुवादः तन्ममास्तु तथापि मत्प्रतिज्ञा श्रूयतामित्याह द्वे इत्यादि । कुलस्य प्रतिष्ठे प्रतिष्ठापदेन तद्धेतुर्लक्ष्यते । अव्यभिचारेण प्रतिष्ठाकारित्वं व्यङ्ग्यम् । सगौरवस्थितिहेतू इत्यर्थः । अथवा भूमिर्गौरवस्य सखी स्थितेश्च हेतुरिति द्वयोरैक्याध्यवसायः । "प्रतिष्ठा गौरवे स्थितौ" इति हैमः । यद्वा कुलस्य प्रतिष्ठे कुले प्रतिष्ठिते परदेवतादिवत् स्थिरीकृते इत्यर्थः । मे पौरवस्य मम । के द्वे इत्यत्राह समुद्रेति । समुद्र एव वसनं यस्याः सा । अखण्डेत्यर्थः । अत एवाहोर्वीति । अन्वर्थमिदम् । समुद्रस्य वसनत्वरूपणात् परिग्रहेत्यादिवचनेन च उर्व्या नायिकात्वं गम्यते । अस्या दृष्टान्तत्वात् प्राङ्निर्देशः । युवयोरिति व्यासेन अस्या मनोरथस्य सिद्धौ युवयोरपि स सेत्स्यतीति द्योत्यते । अत्रोर्वीशकुन्तलयोर्द्वयोः कुलप्रतिष्ठात्वरूपैकधर्मान्वयाद्दीपकं, तेन उर्व्या उपमा व्यज्यते । ततश्च इयमेव प्रधानमहिषी, एतत्पुत्रो मे वंशकरस्तत्परम्परया एव साम्राज्यमिति प्रतिज्ञा प्रकाश्यते । युवयोरित्यनेन युवामत्र साक्षित्वेन व्यवस्थिते इति च । किं चोपमया स्नेहबहुमानादिपूर्वकपरिपालनलालनरूकत्वमस्या लाभेनात्मनः कृतकृत्यत्वबहुमानादिकं च द्योत्यते । परिग्रहबहुत्वेऽपि यथा पृथिवीपतिरित्येव व्यवहारस्त-

उभे— णिव्वुदे ह्म । (निर्वृते स्वः)

प्रियं— (सदृष्टिक्षेपम्) अणसूए जह एस उस्सुओ इदो तदो दिण्णदिट्ठी मिअपोदओ मादरं अण्णसइ एहि संओजंह्म एणं । (अनसूये यथैष उत्सुक इतस्ततो दत्तदृष्टिर्मृगपोतको मातरमन्विष्यति । एहि संयोजयाव एनम्)

(इति प्रस्थिते)

---

था शकुन्तलापतिरित्यपीति च । सति सापत्न्ये द्वयोरनयोरेव मिथः सापत्न्यमिति च । अत्रैकदेशविवर्ति रूपकम् । "कलत्रवन्तमात्मान"मित्यादिप्रयोगोऽप्येतत्सहोदरः ॥

तद्वचनमाकर्ण्य सानन्दमाह णिव्वुदे इति । निर्वृते स्वः मनोरथाधिकाभ्युदयप्राप्त्या परिपूर्णां निर्वृतिं प्राप्ते इत्यर्थः । अत्र अपायदर्शी स्नेह इति न्यायादुक्तेन "यथा बन्धुजनशोचनीये"त्यादिना भावी तत्परित्यागः परिग्रहेत्यादिना पश्चात् पुत्रस्य चक्रवर्तित्वप्राप्त्यादिकं च कविना संसूच्यते । एवं सिद्धमनोरथयोः सख्योर्मध्ये प्रियंवदायाः प्रवृत्तिमाह सदृष्टिक्षेपमिति । वयं सिद्धमनोरथाः संवृत्ताः तदनयोः समागमाय कालविलम्बो मा भूदुपायान्तरमारोप्यानयोः सकाशादपसराम इति दृष्टिक्षेपेण बोधितवतीत्यर्थः । निरूपितमुपायमाहाणसूए इति । यथा यतो हेतोः । एष इत्यङ्गुल्या निर्देशः । उत्सुकः जननीदर्शनस्तन्यपानाद्यावुत्कण्ठितः । अत्र चिह्नमितस्ततो दत्तदृष्टिरिति । मातरं तृणादिलोभेन दूरगताम् । अन्विच्छति अन्विष्यति । एवमनुमिनोमीति भावः । संयोजयावः मात्रा संगतं कुर्वः । एहि त्वं मातरमन्विष्यानय अहमप्येनमुद्धृत्यानयामि इत्युभाभ्यामेव साध्योऽयमर्थः एवमकरणे धर्मलोपः स्यात् अतस्त्वमेहीत्य-

शकु—हळा असरणं ह्मि । अण्णदरा वो गच्छदु । (हळा अशरणास्मि । अन्यतरा वां गच्छतु)

उभे—जो पुडुवीए सरणं सो तुह समीपे । (यः पृथिव्याः शरणं स तव समीपे)

(निष्क्रान्ते)

शकु—हं गआ एव्व ॥ (हं गते एव)

राजा—अलमलमावेगेन । नन्वाराधयिता जनस्तव समीपे वर्तते ॥

---

र्थः । इयं नायकयोः परिचयप्रसङ्गाय व्याजोक्तिः । यथा "दशत्यसौ परभृतः सहकारस्य मञ्जरीम् । तमहं वारयिष्यामि युवाभ्यामास्यतामिहे"ति । एवञ्जातीय उपायो वात्स्यायनादौ व्यक्तः । अनेन सख्योरौचित्यज्ञानं सूच्यते । प्रस्थिते इति प्रस्थातुमारब्धवत्यावित्यर्थः ॥

एवं प्रस्थितयोः सख्योः नायिका समुत्कण्ठितापि साध्वसाद्यभिभूता सवैक्लव्यमाह हळेत्यादि । अन्यतरा वां गच्छतु । एका मत्समीपे तिष्ठत्विति भावः । अत्र त्रासलज्जादयो भावाः । इदानीं भयस्य नावकाश इति सहासमाहतुः जो इत्यादि । समीप इति वर्तत इति शेषः । यः पृथिवीमपि रक्षितुं समर्थः स महाराजस्तव समीपे वर्तत इति कथमशरणेत्यर्थः । अत्र पृथिव्या इति स्त्रीलिङ्गेन यः पूर्वमपि भयाद्यपनोदनपुरस्सरं स्त्र्यन्तरानुनयदक्ष इत्यपि सूच्यते । हमिति विषादे । हेत्यपि पाठः । विषादश्च साध्वसादेः प्रतिक्रियाभावात् । गते एव न तु व्याजेन तिरोभूय स्थिते इत्येवकारार्थः ॥

तदानीं कन्याविस्रम्भणे चतुरतरो नायको लज्जासाध्वसा-

किं शीतलैः क्लमविनोदिभिरार्द्रवातान्
संचारयामि नलिनीदलतालवृन्तैः ।
अङ्के निधाय करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ १८ ॥

रत्नां नायिकां प्रियभाषणेनानुकूलयितुमारभते अलमित्यादि । आवेगः सखीजनासान्निध्यहेतुकः संभ्रमः । तेन अलं स मास्तु । कुत इत्यत्राह नन्वित्यादि । नन्विति प्रश्नेऽनुनये वा । आराधयिता प्रीणयिता । प्रस्तुतक्लेशसर्वस्वापनयनपूर्वकं ब्रह्मानन्दसब्रह्मचारिसुखप्रदातेति यावत् । ताच्छील्यप्रत्ययेन आराधनसामर्थ्यं सूच्यते । जनः अयं जन इत्यर्थः । अनेनात्मनो भृत्यादिवल्लाघवं द्योतयति । वर्तते आराधनायावसरं प्रेप्सुस्तिष्ठति । अहमेवैतदवस्थायास्तव शुश्रूषायां मुख्याधिकारीति भावः । अथातपलङ्घनेनोष्णातिरेकः तत्र संचरणेन चरणपीडा वा सम्प्रति भवतीमतीव बाधते तत्र यद्याद्यस्तदा वीजयामि यद्यन्त्यस्तदा संवाहयामि । द्वयोः कतरदाराधनापूर्वं कर्तव्यमित्याशयेनाराधनप्रकारं विकल्पयन् पृच्छति किमित्यादि । किमिति प्रश्ने । शीतलैः स्निग्धत्वान्नवत्वाच्च शीतैः इति साधारणतालवृन्ताद्व्यतिरेकः । अत एव क्लमं विनुदन्ति विशेषेणापनयन्तीति तैः । अनेन कारणगुणन्यायेन वातानामपि शैत्यं क्लमविनोदित्वं च सूच्यते । आर्द्रवातान् आर्द्रपदेन जलशीकरसाहित्यमुच्यते । संचारयामि सम्यक् सर्वाङ्गीणं चारयामि । नलिनीदलानि तालवृन्तानीव । आकृत्या साम्यम् । अत्र रूपकमिति केचित् । नलिनीपदेन सौरभ्यं सूच्यते । प्रतिक्षणं शरीरोष्मणा ग्लानिसम्भवात्तेषां विनिमयापेक्षा बहुवचनेन द्योत्यते । आद्यर्थे बहुवचनं कदलीदलतालवृन्तादयस्तेन गृह्यन्त इति केचित् । अथोक्तार्थेऽनुमतिम-

शकु—ण माणणीएसु अत्ताणं अवराहइस्सं ॥ (न माननीयेष्वा-
त्मानमपराधयिष्यामि)

(गन्तुमिच्छति)

---

पश्यन्नाराधनान्तरं पृच्छत्यङ्क इत्यादि । निधाय निक्षेपबुद्ध्या स-मर्थ्यत्यादरातिशयं द्योतयति । करभोरु । "मणिबन्धादाकनिष्ठं करस्य करभो बहि"रित्यमरः । अनुवृत्तत्वकोमलत्वादिना कर-भाविव ऊरू यस्यास्तथाभूते । नितम्बिनीनामूरू गमने सातिशयं खिद्येते इति वत्संवाहनं किं कर्तव्यमिति गूढतया संबुध्या द्योत्यते । यथासुखमित्यनेन संवाहनकौशलं सखीजनवदिच्छानुवृत्तिचातुर्यं च द्योत्यते । संवाहयामि । "संवाहनं मर्दनं स्या"दित्यमरः । चरणावित्यन्वर्थं संचरणजनितपीडां द्योतयति । उतेति विकल्पे । संचरणे लिङ्गमाह पद्मताम्राविति । यतो लौहित्यातिशयस्ततः संचरणं निश्चीयत इत्यर्थः । किं चानेन धर्मयोरेकनिर्देश इति न्यायेन पीडाहेतुभूतं सौकुमार्यादिकं च द्योत्यते । अत्र वाक्याभ्यां नायकस्य तत्तत् कर्तुमौत्सुक्यं प्रतीयते । तत्र वीजने सामीप्यं संवाहने तु गात्रस्पर्श इति तत्राधिकमौत्सुक्यं तत्रापि संबोधनेनोरुसंवाहने ततोऽप्यत्यधिकमौत्सुक्यं तत्स्पर्शकौतुकातिशयाद्गम्यत इति क्रमोत्कर्षश्च । अत्रैवंविधव्यापारेण स्वाभिप्रेतार्थः साध्य इति नायकस्य तत्प्रतारणेच्छापि प्रतीयते । तामपृष्ट्वा प्रागेव वीजनादावप्रवृत्तिरनुवृत्तिचातुर्यं प्रकाशयति । अत्र वात्स्यायनः "अनधिगतविश्वासैस्तु प्रसभमुपक्रम्यमाणास्ताः संप्रयोगद्वेषिण्यो भवन्ति कुसुमसधर्माणो हि योषित" इति । अत्र परिकरः ॥

अथ तदभिप्रायं जानती लज्जाद्याकुला भङ्ग्या तद्वचनं निषेधति

राजा—सुन्दरि अपरिनिर्वाणो दिवसः । इयं च ते समवस्था ॥

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ॥ १९ ॥

(बलादेनां निवर्तयति)

---

णेत्यादि । माननीयेष्विति सामान्योक्तिः पुरुषत्वाद्वयोधिकत्वाद्राजत्वाद्वरत्वबुद्धेश्च क्रमोत्कर्षेण माननीये भवतीत्यर्थः। अपराधयिष्यामि अपराधिनं करिष्यामि। अयमुपचारो मास्त्विति भावः। इयं तदानुकूल्यपरिहाराय व्याजोक्तिः सत्यानृतरूपा । गन्तुमिच्छतीति । न तु गतेत्यर्थः। अनेन औत्सुक्यलज्जे मिथः स्पर्द्धेत इति द्योत्यते ।

तदानीमतिनिपुणो नायकः कालदेशावस्थाभिगमनस्यानुचितत्वं भङ्ग्या प्रतिपादयन् स्वाभिप्रेतसिद्धये तां निवर्तयितुमारभते सुन्दरीत्यादि । उत्थाय गन्तुमारब्धां तामापादमस्तकं निरीक्ष्य तद्वर्णनद्वारा बलान्निवर्तयिष्यन् सुन्दरीति संबुद्ध्या समावर्जयति । निसर्गत आतपासहिष्णुत्वं च द्योतयति । अपरिनिर्वाणः अप्रशान्तातपः, ज्वलितातप इति भावः । कारणान्तरमप्याहेयञ्चेति । इयमीदृशसंतापातिशयशालितया सुतरां शोच्या । अवस्थैव समवस्था । अत इत्यर्थात् । उत्सृज्येति । कुसुमशयनं सन्तापहरेषु मूर्द्धन्यं सखीविरचितम् पुष्पशयनम् । उत्सृज्य । अनेन यदि सखीजनोऽत्र सन्निहितः तदा त्वामवश्यं निवारयेदिति द्योत्यते । नलिनीत्यादि । नलिनीदलं चातपे झटिति ग्लानिं गमिष्यति तदा च का गतिरिति भावः । आतपे आतपतीत्यन्वर्थे बलवतामपि सद्यो बलहर इति भावः । कथं गमिष्यसि । गमनमत्यन्तमनुचितमिति भावः । अत्र हेतुमाह परीत्यादि । परिबाधया परितः

शकु—पोरव रक्ख विणअं । मअणप्पतत्तावि ण अत्तणो पहवामि ॥ (पौरव रक्ष विनयम् । मदनप्रतप्तापि नात्मनः प्रभवामि)

---

सन्तापेन पेलवैः दुर्बलैः । अङ्गैः बहुवचनेन प्रत्यङ्गं पीडागौरवं द्योत्यते । उपलक्षितेति शेषः । इयं चेत्युक्तस्य किञ्चिद्विवरणमिदम् । अनेनालस्यपतनमोहादिकमपि गमने सम्भाव्यमिति द्योत्यते । स्वस्थोऽप्यद्य गन्तुमसमर्थः, त्वं तु स्वतः सुकुमारा तत्रापीदृगवस्था तथापि गमनायोपक्रमस इत्यहो तवाविमृश्यकारिता तदस्माद्विरमेति भावः । अत्रोत्सृज्य गमिष्यसीत्यनेन "असात्म्यजा हि दोषाः स्युः सहसा त्यागशीलनादि"त्यादि वाहटोक्तो दोषोऽपि प्रकाश्यते । अत्र नायकस्य हर्षौत्सुक्यकारुणिकत्वादयो नायिकाया ग्लान्यादयश्च भावा व्यज्यन्ते । बलादित्यादि । अनेन तद्वचनमतिलङ्घ्य लज्जया गन्तुं प्रवृत्तेति द्योत्यते ॥

पुनरपि लज्जाद्याकुला बलात्कारपरिग्रहं युक्त्या निषेधति पोरवेत्यादि । पौरवेति पूरुवंशसम्भावनायामयमविनयो न श्रुतपूर्व इति द्योत्यते । रक्ष विनयं हठान्मा स्पृशेति भावः । कारणनिबन्धनाप्रस्तुतप्रशंसा । अत्र हेत्वन्तरमप्याह नात्मनः प्रभवामीति । कन्यकानां पितृपारतन्त्र्यादिति भावः । यथा महाभारते तथैवोक्तम् । "यस्य मां दास्यति पिता स मे भर्ता भवेदिह । पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रो रक्षति वार्द्धक्ये न स्त्री स्वातन्त्र्यमर्हती"ति । ननु मदनप्रतप्तानामीप्सितवराभिसरणं श्रूयत एवेत्यत उक्तं मदनप्रतप्तापीति । स्वैरिणीनामेवायं धर्मो नाहं स्वैरिणीति भावः । यद्वा कुत इद-

राजा— भीरु अलं गुरुभयेन । दृष्ट्वा न ते गृहीतधर्मा तत्रभवा-
नत्र दोषं ग्रहीष्यति कुलपतिः ।
गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीताश्च पितृभिश्चाभिनन्दिताः ॥ २० ॥

---

मनानुकूल्यमित्यत्राह मदनेत्यादि । इदमनानुकूल्यं न रागाभावात् किं तु पितृपारतन्त्र्यादिति भावः ।

नायकोऽपि युक्त्या तन्निषेधं निषेधति भीर्वित्यादि । भीरु भयशीलत्वमेवात्रापराध्यतीति भावः । अलं गुरुभयेन अस्य समागमस्याधर्मत्वबुद्ध्या गुरोरनिष्टत्वबुद्ध्या वा तस्माद्भयं मा कृथा इत्यर्थः । तत्रादावधर्मत्वशङ्कां परिहरति दृष्ट्वेत्यादि । दृष्ट्वा दिव्यचक्षुषा विज्ञाय । गृहीतधर्मा ज्ञातधर्मरहस्यः । इदं दोषाग्रहणे हेतुः । "धर्मादनिच् केवला"दिति समासान्तः । धर्म इति पाठे समासान्तविधेरनित्यत्वात्तदभावः । तत्रभवानित्यनेन पूज्यत्वात् प्रामाण्यं, कुलपतिरित्यनेन तत्समीहितस्य सर्वाभ्युपगमश्च द्योत्यते । अत्र अस्मिन् समागमे । ते दोषं न ग्रहीष्यतीति संबन्धः । दोषमधर्मलक्षणम् । त्वां दुष्टेति न ज्ञास्यतीत्यर्थः । अथास्याधर्मत्वशङ्कां शिष्टाचारेणापि परिहरति गान्धर्वेणेत्यादि । गान्धर्वेण विवाहेन । ब्राह्मादिभेदादष्टविधेषु विवाहेष्वेको गान्धर्वः । "सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः । करस्पर्शस्तु गान्धर्व" इति तल्लक्षणम् । बह्व्यः न त्वेका । अथ गुरोरनिष्टत्वशङ्कां परिहरति पितृभिरित्यादि । अभिनन्दिता इति क्षत्रियाणां गान्धर्वस्य मुख्यत्वात् । यथोक्तम् । "क्षत्रियस्य तु गान्धर्वो विवाहः श्रेष्ठ उच्यते" इति । इयं सामान्यनिबन्धनाप्रस्तुतप्रशंसा । पिता त्वामभिनन्दिष्यत्येवेत्यर्थः । अनेनापि

शकु—अइ मुंच दाव । भूयोवि सहीजणं अणुमाणइस्सं ।
(अयि मुञ्च तावत् । भूयोऽपि सखीजनमनुमानयिष्यामि)

राजा—भवतु मोक्ष्यामि ॥

शकु—कदा ॥

राजा— अपरिक्षतकोमलस्य यावत्
कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते
सदयं सुन्दरि गृह्यते रसोऽस्य ॥ २१ ॥
(मुखमस्याः समुन्नमयितुमिच्छति)

---

नायकस्य कन्यानुवृत्तिचातुर्यं दर्शितम् । यथाह कामतन्त्रकारः "तत्र युक्तगुणं वश्यं सक्तं बलवदर्थिनं उपायैरनुयुञ्जानं कन्या न प्रतिलोमयेदिति" । मत्यौत्सुक्यादयोऽत्र भावाः ॥

एवं समागमस्य निर्दोषत्वादौ साधितेऽपि लज्जादिपरतन्त्रा पुनरपि केनाप्यपदेशेन वैमुख्यमाचरितुमारभते अइ इत्यादि । अयीति सानुनये सम्बोधने । तावदद्य । अनेनावसरान्तरे भवदधीना भविष्यामीति द्योत्यते । किमर्थं मोचनमित्यत्राह भूयोपीत्यादि । भूय इत्यनेन पूर्वं सखीजनेनानुमतिः प्रकाशितेति नात्र तयोर्वैमुख्यप्रसङ्ग इति द्योत्यते । अपिर्भिन्नक्रमः । सखीजनमप्यनुमानयिष्यामि अनुमतिं कारयिष्यामि । पिता दूरस्थितत्वान्नापेक्षितः, तथा सन्निहितं सखीजनं प्रत्यननुमाननं न युक्तम् । अतस्तत्समीपं गत्वा तदनुमतिं सम्पादयिष्यामीत्यर्थः । राजा तत्प्रीणनायानुमन्यते मोक्ष्यामीति । नायिका भविष्यदर्थं विचारयति कदेति । मोक्ष्यसीति विपरिणामितानुषज्यते ॥

अपरिक्षतस्य अनअन्यया मोक्षणकालमाहापरीत्यादि । अपरिक्षतस्य अन-

वाप्तदन्तपदस्य कुसुमपक्षे भ्रमराद्यनुपहतस्य । अत एव कोमलस्य मृदुलस्य । अपरिक्षतं कोमलं कोमलत्वं यस्येति केचित् । सदयग्रहणे हेतुरयं स्पृहणीयत्वातिशयं द्योतयति । नवस्य सद्योविकसितस्य । तथाविधस्यैव कुसुमस्यात्रोपमानार्हत्वम् । पिपासतेति कालाक्षमत्वलक्षणौत्सुक्यातिशयं, पिपासायाः फलपर्यन्तं व्यापारनिर्बन्धेन तत्राप्रतिविधेयत्वं च सूचयति । सदयमित्यनेन दशनक्षतादिना मम वैयात्यप्रकाशनादौदात्त्यक्षतिर्भवेदिति मा भैषीरिति द्योत्यते । सुन्दरीति तात्कालिकविलासवशात् संबुद्धिः । अत एवेदानीमधररसास्वादे निर्बन्धातिशय इति द्योतयति । अत्र विरोधिनी मा भूरित्यावर्जनपरा च । गृह्यते आस्वाद्यते । रसः माधुर्यरूपः । यथोक्तम् । “अधरस्य मधुरिमाणं कुचकाठिन्य”मित्यादि । पुष्पपक्षे मकरन्दश्च । अस्य चिरप्रार्थितस्य दैवादुपनतस्य । यावद्गृह्यते । तावन्मोक्ष्यामीति शेषः । अत्राधररसास्वादनस्य रतिसर्वस्वत्वात्तद्ग्रहणमुक्तम् । षट्पदोपमया राज्ञो ग्रहणचातुर्यं तदायतजीवनत्वं च कुसुमोपमया अधरस्य सौरभ्यमाधुर्यादिकं च द्योत्यते । अधरस्य रस इत्यनेनाधरस्य मधुतुल्यत्वं च । अत्र श्लेषः काव्यलिङ्गं परिकरश्च । औत्सुक्यावेगादयो नायकाश्रया भावा व्यज्यन्ते । मुखमस्याः समुन्नमयितुमिच्छतीति । इच्छतिना आरम्भो लक्ष्यते । तस्य साफल्याभावो व्यङ्ग्यः । शकुन्तला नाट्येन परिहरतीति । लज्जादिवशादंसे मुखविवर्तनादिना तत्परिहारं नाटयतीत्यर्थः । अत्र चुम्बनादीनामभिनयस्य नाटके निषिद्धत्वात्तदवधि वर्णनं कृतम् । उत्तरत्र च ‘जइवि गंधव्वेण विवाहविधिणे’त्यादिना गान्धर्वो निर्वृत्तत्वेन वर्णयिष्यते । अयं नाटकाचारः । काव्येऽपि बाह्यरतान्येव विस्तरेण वर्ण्यन्ते । आभ्यन्तरस्य रतस्य संक्षेपेणैव वर्णनं यतो गोप्यस्य विस्तरो रसभङ्गावहः । तत्तु व्यङ्ग्यतया र-

शकु— (नाट्येन परिहरति)

(नैपथ्ये)

चक्कवाअवहूए आमंतेहि सहअरं उपट्ठिआ रअणी ।

(चक्रवाकवधूके आमन्त्रयस्व सहचरम् । उपस्थिता रजनी)

शकु— (कर्णं दत्वा ससम्भ्रमम्) पोरव असंसअं मम सरीरउत्तं·

---

सावहं भवति । अन्यथा ग्राम्यत्वप्रसङ्गादिति । किं चात्र वर्णितः सम्भोगशृङ्गाराङ्गभूतः परिचुम्बनारम्भोऽपि अनिर्व्यूढत्वाद्विप्रलम्भरूपः पर्यवस्यति । अत्रानेन वाक्येन मुहुरङ्गुलीत्यादि वक्ष्यमाणस्य विप्रलम्भस्य बीजन्यासः कृतः । पानायोपक्रान्तवतस्तदलाभो दुःखाद्दुःखतर इति ॥

विष्कम्भदर्शितगौतमीप्रवेशं वर्णयितुमारभते नैपथ्य इति । अयमतिप्रसङ्गपरिहारायारम्भः । स च विप्रलम्भपरिपोषार्थः । चक्कवाअइत्यादि । गौतम्यागमनमवलोक्य तद्बोधनाय प्रकृतमर्थं सङ्गोप्य सख्योर्वचनमिदम् । वधूक इत्यत्रानुकम्पायां कः । आमन्त्रणे हेतुरुपस्थितेति । रात्रिर्हि वियोजनकारिणी चक्रमिथुनस्य । इयं सादृश्यनिमित्ताप्रस्तुतप्रशंसा । शकुन्तले सहचरं राजानं विसर्जय गौतम्युपगतेति भावः । अनेन सख्योर्नायकप्रतिपालनजागरूकत्वं वक्रोक्तिचातुर्यं च गम्यते । चक्रमिथुनोपमया नायकयोरन्योन्यानुरागस्य गाढत्वं द्योत्यते । यथा "किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मन" इति । सहचरमिति सिद्धवत्कृत्योक्तिः सख्योः कृतार्थताविश्रामं सूचयति । किं च रजन्यपगमे चक्रवाकयोरिव गौतमीगमने युवयोः पुनरपि समागमो भविष्यति, अतोऽत्यन्तं मा विषीदेति च । अनेन वाक्येनाङ्कावसानोपयोगिमार्थसमयप्रयाम*रपि प्रकाशिता । इदं नाट्योक्तमेकं प-

तोवलंभा अॅअगोदमी इदो एव्व आअच्छदि । ता विड-वंतरिदो होहि । (पौरव असंशयं मम शरीरवृत्तान्तोपलम्भा आर्यगौतमी इत एवागच्छति । तद्विटपान्तरितो भव)

राजा— तथा । (आत्मानमावृत्य स्थितः)

(ततः प्रविशति पात्रहस्ता तापसी सख्यौ च)

सख्यौ— इदो इदो अॅआ गोदमी । (इत इत आर्या गौतमी)

---

ताकास्थानकं च । "प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचकम् । पताकास्थानक"मित्यादि तल्लक्षणं दशरूपके । चूलिका चेदमिति बोध्यम् । ससंभ्रममिति । संभ्रमो भयाद्यनुभावः । राजानमाह पौरव इत्यादि । सखीभ्यां भङ्ग्यन्तरेणोक्तस्य तत्त्वावबोधो झटिति जात इति नायिकाया वक्रोक्तितात्पर्यग्रहणे कौशलमस्तीत्यनेन गम्यते । शरीरवृत्तान्तस्य उपलम्भो ज्ञानं यस्याः सा । मदीयमस्वास्थ्यं ज्ञातवती सतीत्यर्थः । उपलम्भायेत्यपि पाठः । विटपान्तरितो भवेति । प्रकाशनभीत्या बहिर्निर्गमनस्याशक्यत्वादिति भावः । अनेन नायिकायास्तत्कालोचितप्रतिभाविशेषः प्रकाश्यते । विटपान्तरितो भव दूरं मा गच्छेत्यौत्सुक्यस्य स्थिरानुवृत्तिश्च सूच्यत इत्यप्याहुः । आत्मानमावृत्येति । शाखाग्रपत्रादिभिरदृश्यो भूत्वेत्यर्थः । स्थितः इति । एवं स्थित्या नायकस्यापि तदनुष्ठानकौशलमौत्सुक्यस्यापि स्थिरानुवृत्तिश्च प्रकाश्यते ॥

तत इत्यादि । पात्रहस्तेति शान्त्युदककुम्भहस्तेत्यर्थः । अनेन "अहमपी"त्यादिशिष्योक्तस्य शान्त्युदकस्य संबन्धो घटितः । सख्यौ चेति । अनेन तयोस्तत्र सन्निहितत्वप्रकाशनेन प्रतारणकौशलं गम्यते । जाद इत्यस्य पुत्रीति छायेति केचित् जात इति

तापसी—(शकुन्तलामुपेत्य) जादे अवि लहुसंदावाणि दे अंगाणि। (पुत्रि अपि लघुसन्तापानि ते अङ्गानि)

शकु—अत्थि मे विसेसो ॥ (अस्ति मे विशेषः)

तापसी—इमिणा संदिदब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि । (अमुना शान्तिदर्भोदकेन निराबाधमेव ते शरीरं भविष्यति) (शिरसि शकुन्तलामभ्युक्ष्य) वच्छे परिणदो दिअहो एहि उडजं गच्छामो ॥ (वत्से परिणतो दिवसः । एहि उटजं गच्छाम।)

शकु—(आत्मगतम) हिअअ पुढमं एव्व सुहोवणदे मणोरहे

---

छाया पुत्रीति तदर्थ इत्यन्ये । अपीति प्रश्ने । लघ्वित्यादि । तवाङ्गानां सन्तापस्य लाघवमस्ति किमित्यर्थः । अत्थि इत्यादि । इदमुभयसाधारणं सत्यस्वरूपमुत्तरम् । शिशिरोपचारादिना सन्तापः सोढव्योऽस्तीति बाह्योऽर्थः । प्रियतमसंबन्धप्रसङ्गेनेत्यान्तरः ॥

इमिणा इत्यादि । शान्तिदर्भोदकेन शान्त्यर्थेन दर्भोदकेन कूर्चादिनिबद्धदर्भसहितेन उदकेन । निराबाधमपगतनिश्शेषबाधम् । सर्वेषु गात्रेषु शिरः प्रधानमिति शिरसीत्युक्तम् । अभ्युक्ष्य कूर्चेन जलबिन्दून् संगमय्य । वच्छे इत्यादि । परिणतः परिणामेनावसानं लक्ष्यते । पयसो दध्यादिरूपस्य इव स्वभावभेदप्रतीतिः फलम् । स्वभावभेदश्च उष्णनिवृत्त्या सौम्यत्वम् । अतो गमनं शक्यमिति भावः ॥

अथ प्रस्थिता शकुन्तला प्रियविरहातुरा तदारम्भे परिचुम्बनादौ चिरप्रार्थिते प्रतिकूलाचरणं स्मरन्ती सोत्कण्ठा पश्चात्तापपरवशा च सती हृदयमुपालभते हिअअ इत्यादि । प्रथमं गौतम्यागमनात् पूर्वं प्रियतमसन्निधान इति यावत् । एवकारो भिन्नक्रमः ।

कादरभावं ण मुंचेसि । साणुसअविहत्थिदस्स कहं दे संपदि । (हृदय प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि । सानुशयविहस्तितस्य कथं ते सम्प्रति) (पदान्तरे स्थित्वा) (प्रकाशम्) लदाघर सदावहरअ आमंतए तुमं भूयोवि परिभोआअ ॥ (लतागृह सन्तापहारक आमन्त्रये त्वां भूयोऽपि परिभोगाय)

(दुःखेन निष्क्रान्ता सहेतराभिः)

---

उपनत इत्यनेन मुञ्चसीत्यनेन वा सम्बध्नाति । मनोरथे तद्विषये प्रियतमे तत्कर्तृकचुम्बनादौ वा विषये । सुखोपनते मनोरथ इति कातरभावमोक्षकारणोक्त्या तस्य युक्तत्वं द्योत्यते । कातरभावं साध्वसम् । न मुञ्चसि वर्तमानसामीप्ये भूते लट् । न मुक्तवत्, किं तु अङ्गीकृतवदित्यर्थः । निषेधमुखेनोक्तिर्मोचनस्यावश्यकत्वं दर्शयति । सानुशयस्य पश्चात्तापसहितस्य अत एव विहस्तितस्य व्याकुलीकृतस्य । पश्चात्तापपरवशीकृतस्येत्यर्थः । अनेन कातरभावमोक्षाभावस्य फलं सद्य एवानुभवसीति द्योत्यते । कथं किमर्थम् । अनुचित इति भावः । कातरभावमोक्ष इति शेषः । पश्चात्तापातिशयात्तदनुक्तिः । कातरभावं मुञ्चसीत्यस्यानुषङ्गो वा । सम्प्रति प्रियतमस्यासन्निधाने । पूर्वं मनोरथसिद्ध्यनुकूलतया कातरभावमोक्षो युक्तः । स तु त्वया न कृतः, यदीदानीं कातरभावं नामोक्ष्यः तदैवंविधं पश्चात्तापवैवश्यं नान्वभविष्यः । सत्यप्येवमद्य कातरभावममुञ्चः फलं च तस्य न पश्याम इत्यहो तवाविमृश्यकारितेति भावः । अनेन हृदयं प्रति निन्दा तथा सङ्गमौत्सुक्यं तद्विप्राद्विषादश्च व्यज्यन्ते । केचित्तु कातरभावं न मुञ्चसीत्यनुषज्यते । कातरभावोऽयं वक्ष्यमाणामन्त्रणविषयकः । पूर्वं कातरभावमो-

राजा—(पूर्वस्थानमुपेत्य सनिश्वासम्) अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः । मया हि ॥

---

क्षाभावस्य फलमनुशयरूपमनुभवदपि त्वं सम्प्रति कथं न मुञ्चसीत्यर्थ इत्याहुः । अनेन वाक्येन नायिकाया विप्रलम्भोऽवतारितः । मूले सम्प्रतीत्यनन्तरं सन्ताप इति केचित् प्रतीकार इत्यन्ये निवृतिरितीतरे च स्वबुद्ध्यनुसारेण पाठं कल्पयन्ति । पदान्तरे स्थित्वेति । द्वित्राणि पदानि गत्वेत्यर्थः । अत्र विरहविधुरा नायिका प्रतिकूलाचरणेन अननुरागिणीयमिति प्रियस्य बुद्धिं पुनरपि संभोगौत्सुक्यव्यञ्जनेन परिहरन्ती लतागृहापदेशेन तत्र गूढस्थितं प्रियतममापृच्छते कदेत्यादि । लतागृहेत्यनेन प्रियतमो विवक्षितः । सन्तापहारकेति उभयत्र समानम् । सन्तापो ग्रीष्मजो विरहजश्च । आमन्त्रये त्वामिति । आमन्त्रणमेकत्र उपचारादन्यत्र मुख्यतया । परिभोगाय शिशिरोपचाराद्यनुभवाय संन्दर्शनादिरूपसंभोगाय च । हे हृदयनाथ सन्तापहारक पुनरपि संभोगोऽस्त्विति गूढार्थः । अत्रौत्सुक्यं प्राधान्येन ध्वन्यते । दुःखेनेत्यादि । इतरा गौतमी सख्यौ च । अत्र दुःखेन निष्क्रान्तेत्युक्त्या उपरि नायिकाभवे त्वनकरणं प्रायो दुःखानुवृत्तिः सूच्यते ॥

अथ नायकस्यापि पूर्वप्रसक्तं विप्रलम्भमवतारयति पूर्वेत्यादि । पूर्वस्थानं प्रियापरिभुक्तमुक्तं लतामण्डपम् । सनिश्वासमिति निश्वासो विषादानुभावः । अत्र चिरप्रार्थितस्यारब्धस्य संभोगस्य विच्छेदं स्मरन्नतिविषण्णः स्वयं परामृशत्यहो इत्यादि । अहो इति खेदे । विघ्नायः भूमार्थे मतुप् बहुविघ्ना इत्यर्थः । यथोक्तम् । "मङ्गलानि बहुविघ्नयुतानी"त्यादि । प्रार्थितार्थानां सिद्धयो लाभाः । लाभपर्यन्ते व्यापारेऽपि विघ्नः सुलभ इति

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु ॥ २२ ॥

---

सिद्धिशब्दो द्योतयति । लोके चिरात् प्रार्थितेऽर्थे महता प्रयत्नेन कथमपि निष्पत्त्युन्मुखेऽपि तस्य विच्छेदो भवति कष्टमेतदित्यर्थः । अत्र विधिरेवैवं घटयतीति तन्निन्दा व्यज्यते । यद्वा । अहो इति विस्मये । सिद्ध्युन्मुखेष्वप्यर्थेष्वतर्कितमेव विघ्नाः समापतन्तीत्यद्भुतमेतदित्यर्थः । उक्तं सामान्यं स्ववृत्तान्तेन साधयति मया हीत्यादि । हि यतः । मया मुखं कथमप्युन्नमितं न चुम्बितं तु तत इति संबन्धः । उन्नमिते सति चुम्बने कियानिव विघ्नः सम्भाव्येत तदपि झटिति गौतम्यागमनेन विघ्नितम् । ततः पूर्वोक्तं निश्चीयत इत्यर्थः । मुहुरिति । मुहुः पुनः पुनः । अत्र नायिकाया अङ्गुलिसंवरणपौनःपुन्योक्त्या नायकस्य तन्निषेधपौनःपुन्यं द्योत्यते । उत्तरोष्ठे चुम्बनस्याप्रसङ्गादोष्ठपदेनाधरोष्ठस्यैव लाभेऽप्यधरपदोपादानं पाटलिमसौकुमार्यमाधुर्यादिद्योतनाय । यथा कुमारे “उमामुखे बिम्बफलाधरोष्ठे” इति । प्रतिषेधाक्षरेति । अनेन नायिकाया अङ्गुलिसंवरणनिषेधनिवर्तनाप्रागल्भ्यं द्योत्यते । प्रतिषेधाक्षराणि निषेधबोधकानि मा मालमित्यादीनि । अक्षरपदेन लज्जासम्भ्रमाद्यतिशयो द्योत्यते । विक्लवो वैक्लव्यम् । विक्लवशब्दो जडादिशब्दवद्धर्मवचनोऽपि । वैक्लव्यमत्र तदुच्चारणपारवश्यम् । तदपि लज्जादिकृतम् । प्रतिषेधाक्षरैः विक्लवेन च अभिरामम् । अत्र वैक्लव्येनाक्षराणामस्फुटत्वं तेन मणितसादृश्यं च द्योत्यते । अत

एव तथाविधाक्षरश्रवणे तथाविधवैकृत्यदर्शने च राज्ञः कुतूहलातिशयादभितो रमयतीत्यभिराममित्युक्तम् । अंसविवर्तीति । अनेन प्रतिषेधाक्षरेष्वपि राज्ञोऽनादरो द्योत्यते । विवर्तीत्यत्र विशब्दोऽतिशयार्थोऽपि । अत्र आदावङ्गुलिसंवरणं पश्चात् प्रतिषेधाक्षराणि पुनरंसविवर्तनमिति क्रमो विवक्षितः । पक्ष्मलाक्ष्या इत्यक्षिसौन्दर्यकथनेन चक्षुषोस्तत्कालोल्लसिता नानाभावविशेषा व्यज्यन्ते । तथा हि । चिराभिलषितस्य संभोगस्याचिन्तितोपनतत्वेन हर्षः, तस्य विघ्नेन विषादः, समागमस्येदंप्रथमतया लज्जात्रासौ च । एवं सम्भवन्तोऽन्येऽपि भावा द्रष्टव्याः । सर्वे भावाश्चक्षुषि व्यज्यन्त इति न्यायात् । कथमपीति कृच्छ्रेणेत्यर्थः । "कथमादि तथाप्यन्तं यत्नगौरवबाढयोः" इत्युत्पलमाला । अनुवृत्तिव्याजबलात्कारादिना महता प्रयत्नेनेति यावत् । अनेनांसाविवर्तनस्य राज्ञो दुस्साध्यत्वं नायिकाया उन्नमननिरोधान्तरपौनःपुन्यं च द्योत्यते । उन्नामितमिति । भूतकालप्रत्ययेन राज्ञः कृतकृत्यप्रायत्वबुद्धिर्द्योत्यते । न चुम्बितमिति । चुम्बितमित्यनेन रसास्वादो लक्ष्यते । अधरस्य नातिपीडनं व्यङ्ग्यम् । तुशब्देनाङ्गुलिसंवरणनिषेधाद्यनेकयत्नसन्निधापितस्य सम्भोगसर्वस्वभूतस्य चुम्बनस्यालाभाद्विषादातिशयो ध्वन्यते । ध्वन्यालोके स्पष्टमेतत् । अत्र "चुम्बने विपरिवर्तिताधरं हस्तरोधि रशनाविघट्टने । विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम्" इति रघुवंशोक्तवत् नायिकाया विरोधाचरणेन नायकस्य मन्मथवृद्धिरवगम्यते । तेन तुशब्दसूचितविषादस्यात्यन्तातिशयश्चेति विप्रलम्भपरिपोषः । उन्नामितमित्यन्तेन नायिकागते लज्जासाध्वसे नायकगतमौत्सुक्यं चोत्कटत्वेन प्रतीयन्ते । तत्राङ्गुलिसंवरणादयो लज्जासाध्वसयोः तन्निवर्तनादयश्चौत्सुक्यस्यानुभावा बोध्याः । अपि चात्र पाणितलेनाच्छादनं बलात्कारे रोदनगमनादिकं वा

क्व नु खलु सम्प्रति गच्छामि । अथवा इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामि । (सर्वतो विलोक्य)

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्रान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि ॥ २३ ॥

---

अकृत्वा अङ्गुलिसंवरणाद्याचरणेन नायिकाया अर्द्धाङ्गीकारो गम्यते । तेन तथा चुम्बनारम्भेऽपि तद्वितर्कादङ्गुलिसंवरणेन च तस्या अप्यौत्सुक्यं प्रतीयते । अत एव पक्ष्मलाक्ष्या इत्युक्तिस्तस्या आनन्दनिमग्नत्वमपि द्योतयति । एभिरुपस्कृत उन्नमितमित्यन्तेन गम्यमानः सम्भोगोऽत्र विप्रलम्भतया परिणमतीत्याकलनीयं रसिकैः । अत्रानुभूतार्थस्य प्रत्यक्षायमाणत्वं गम्यत इति भाविकं स्वभावोक्तिश्च ॥

अथ विरहोत्कण्ठितो विनोदनोपायं निरूपयति क्व नु खल्वित्यादि । खल्वित्यवधारणे विशेषे वा । सम्प्रति खल्विति सम्बन्धः । अचिरातीतसङ्गमेऽस्मिन् काल इत्यर्थः । क्वेत्यादिना देशभेदेन कालभेदेन वा मद्विरहोत्कण्ठा शमं न यायादिति द्योत्यते । पुनः कर्तव्यमवधारयन्नाहाथवेति । वितर्को मास्तु विनोददेशः सम्भाव्यत इति भावः । सम्भावितमाहेहेत्यादि । इहेत्यनेन लतावलयस्य सुभगतमत्वं द्योत्यते । तत्र हेतुः प्रियापरिभुक्तेति । मुहूर्तमित्यनेन चिरस्थितावत्राप्यरतिरेव भविष्यतीति द्योत्यते । तत्र हेतुः प्रियामुक्तेति । प्रियया पूर्वं परिभुक्तं पश्चान्मुक्तं तस्मिन् । पूर्वकालेत्यादिना समासः । सर्वतो विलोक्येति वक्ष्यमाणसमर्थनार्थम् ।

तस्या इति । इयं तस्याः शय्येति । तावन्मात्रेण शय्यायां राज्ञो बहुमानो द्योत्यते । पुनर्निपुणं निरीक्ष्याह तस्याः शरीरलुलितेति । शरीरपरिवर्तनेन मृदितेत्यर्थः । अनेन बहुमानस्यातिशयः । पुष्पमयीति । एतादृशशय्यासहायस्यात्मनः कदाचिदेवं शरीरलुलितत्वं स्यादित्याशंसया तस्यामासङ्गो गम्यते । शिलायामिति शैत्यं सूचयति । इयमिति । अहमिव तद्विरहेण शोच्येति भावः । एषइदंशब्दयोरप्येवं बोध्यम् । क्लान्तः तदीयकरतलस्पृष्टनलिनीपत्रक्लान्ततया म्लानः । मन्मथलेखः स्वानुरागसूचको लेखः । नलिनीपत्रे नखैरर्पित इति तस्या हस्तकौशलं स्मारयति । यथायथं पञ्चानामप्युपयोगान्नखैरिति बहुवचनम् । अर्पितो लिखितः । अर्पणवल्लेखनमिति अक्षराणां स्फुटत्वं चतुरश्रत्वं च व्यङ्ग्यम् । तया लिखित ? इति तदनुरागसूचकश्चेति द्वेधात्रापि बहुमानः । बिसाभरणं बिसरूपमाभरणम् । आभरणत्वोक्त्या न केवलं तत्करसंबन्धेनैव किन्तु तच्छोभावहत्वेनाप्यस्मिन् बहुमान इति द्योत्यते । इतीति प्रकारे हेतौ वा । आसज्यमाने आभीक्ष्ण्येन सङ्गं कुर्वाणे कर्मकर्तरि शानच् । ईक्षणे यस्य स इति हेतुगर्भम् । सहसा सद्यः । शून्यात् प्रियतमाविरहितात् । किमतः परं शून्यत्वमिति शून्यादित्येवोक्तम् । अपीति विरोधे । अत्र निर्गमनहेतोः सत्त्वेपि तदभावस्य कथनाद्विशेषोक्तिः, काव्यलिङ्गादयश्च । अत्र लोलनक्लमभ्रंशैः क्रमाच्छय्यालेखबिसानां शोच्यत्वं नायिकायाश्चारातिसन्तापतानवानि तैस्तस्या दयनीयत्वं च द्योत्यन्ते । शून्यादित्यनेन वेतसगृहस्यापि निश्शोभत्वशोच्यत्वादिकं च । अत्र सिद्धानामर्थानामनुवादरूपेणानेनानुभूतार्थस्य स्मरणं तेनानुमोदनात्मिका प्रीतिर्व्यज्यते । सा च शोकस्य व्यभिचारिणी । अत्र शय्यादिषु तत्परिभुक्तत्वेन बहुमानवत् तदलाभादात्मनि निर्वेदश्च । एवं दैन्यालस्यचिन्ताग्लानिश्रमादयोऽपि प्रतीयन्ते । सर्वतोविलोकनवदशक्तत्वसमर्थनेन मूर्च्छितप्रायत्वेनाश्रु-

(आकाशे) राजन्!

सायन्तने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्रयस्ताः ।
छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्यापयोदकपिशाः पिशिताशनानाम् ॥ २४ ॥

राजा— अयमयमागच्छामि ॥

(निष्क्रान्तः)

तृतीयोऽङ्कः ॥

---

पातदीर्घश्वासादयोऽनुभावाश्च । एवं विप्रलम्भश्रृङ्गारः परिपोषं प्रापितः ॥

अथाङ्कसमापनाय नायकस्य गमनावकाशं सम्पादयितुं तस्य रसान्तरप्रवेशमवतारयत्याकाश इति । इदं च पात्रस्याप्रवेशार्थम् । राजन्नित्यादि मुनिशिष्यवचनम् । संबुद्धिः सम्भ्रमं द्योतयति अन्वर्था च । सम्भ्रमहेतुमाह सायन्तन इत्यादि । सायन्तने सायं निर्वर्तनीये । सवनकर्मणि यज्ञकर्मणि । संप्रवृत्ते भवत्सन्निधानबुद्ध्या सम्यगारब्धे सति । भूतकालप्रत्ययेन प्रारब्धस्य कर्मणो विघातशङ्कया मुनीनां विषादातिशयो द्योत्यते । हुताशनवतीमित्यन्वर्थं छायोपलब्ध्यर्थं, हुतानां गन्धादिना पिशिताशनानामागमनमिति द्योतयति । वेदीं परितः वेद्याः समन्तात् । अभितः परित इत्यादिना द्वितीया । वेदीसान्निध्योक्त्या शीघ्रप्रतिविधेयत्वं समन्तादिति रक्षोबाहुल्यं च द्योतयति । प्रयस्ताः व्याप्ताः । प्रवृत्ताः प्रकीर्णा इत्यपि पाठः । छायाः शरीरप्रतिकृतयः । बहुधा बहुप्रकारा इति भयाधाने हेतुः । आदधानाः आभीक्ष्ण्येनोत्पादयन्त्य इत्यनेन स्वेषां तत्प्रतीकारासामर्थ्यं द्योत्यते ।

छायास्वरूपमाह सन्ध्येत्यादि । सन्ध्यापयोदाः सायंकालिकमेघाः । सन्ध्यापदेन तत्काले सूर्यरश्मिसम्पर्काद्रक्तत्वं पयोदपदेन कृष्णत्वं च द्योत्यते । त इव कपिशाः कृष्णरक्ताः । राक्षसानां स्वतः कृष्णवर्णत्वात् केशश्मश्रवादौ रक्तत्वाच्च च्छायानां तत्त्वमुपचरितम् । पिशिताशनानामिति । अनेन मांसादिकं वेद्यां क्षिपन्त इव लक्ष्यन्त इति द्योत्यते । ततोऽपि शीघ्रप्रतिविधेयत्वं च । रक्षसां मायावित्वादाकाशवर्तित्वाद्वा तेषामदर्शनाच्छायाश्चरन्तीत्युक्तम् । अत्र सन्ध्येत्यादिना सायंकालोऽपि दर्शितः । त्रासावेगाद्युपस्कृतं राक्षसालम्बितं मुनिगतं भयं व्यज्यत इति भयानकोऽत्र रसः । राक्षसगतो रौद्रमिश्रो बीभत्सश्च । अथ राजा तदाकर्ण्य सावेगमाहायमित्यादि । आगच्छामीति आगमनमेव प्रतिविधाने विलम्ब इति द्योतयति । वर्तमानप्रत्ययेनागमनस्याविलम्बः, तेन आवेगद्योतिकया वीप्सया च राज्ञो मुनिजनेष्वादरबहुमानादयो द्योत्यन्ते । अत्र राज्ञो युद्धवीरत्वं दयावीरत्वं च गम्यत इति वीरो रसः । अत्रानेन रसान्तरप्रवेशवर्णनेन नायकस्य प्ररूढाया अपि रतेः किञ्चित्तिरोधानं द्योत्यते । तेनातः परं तिरोहितरतिकस्यैव तस्य प्रवेश इति च । इदं पञ्चमाङ्के स्फुटीभविष्यति । निष्क्रान्त इति । एवमस्मिन्नङ्के प्रथमप्रविष्टशिष्यप्रस्तुतराक्षसविघ्नोपशमः फलपर्यन्ततां नीतः । राज्ञश्च जाने तपस इत्यादिना प्रस्तुता शकुन्तलापरिजिघृक्षा च गान्धर्वप्रतिपादनेन निर्व्यूढा । तत एव शकुन्तलाया मदनतापस्य प्रतिक्रियापीत्यन्यत्सहृदयैरूह्यमिति सर्वं शिवम् ॥

इति सारार्थदीपिकायां शाकुन्तलव्याख्यायां

तृतीयोऽङ्कः ॥

# चतुर्थोऽङ्कः ॥

(ततः प्रविशतः कुसुमापचयमभिनयन्त्यौ सख्यौ)

एका—हळा पिअंवदे जइवि गंधव्वेण विवाहविहिणा णिव्वुत्तकल्याणा सउंदळा अणुरूपभत्तुयामिणी सव्वुत्तात्ति णिव्वुदं मे हिअअं । तहवि एत्तिअं चिंतणिज्जं ।
१ (हळा प्रियंवदे यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा शकुन्तला अनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम् । तथाप्येतावच्चिन्तनीयम् )

---

अथ कथासंघटनाय प्रवेशकमुपक्रममाणः पूर्ववर्णितयोः सख्योः प्रवेशमाह तत इति । अत्राङ्के शकुन्तलासंप्रेषणं प्रधानभागः तत्पूर्वभागतया पुष्पापचयदुर्वासःशापमोक्षादिः । तत्र शापमोक्षयोरुत्तरत्रोपयोगः पुष्पापचयफलमत्रैव देवतार्चनत्वेन दर्शयिष्यते । इतरे प्रमेयभागाः शकुन्तलायात्राङ्गतया वर्णयिष्यन्ते । कुलपतिः प्रधानपात्रं पताकानायकः । इतरे तदङ्गानि । करुणो रसः प्रायेण । करुणश्च शृङ्गारस्याङ्गं स च नायिकागताया रतेरुद्बोधनदर्शनेन तत्र तत्र प्रकाशयिष्यते । शापविप्रलम्भरूपश्चेति नाङ्गिनोऽननुसन्धानम् । दुहितृवात्सल्यादीनि लोकवृत्तानि च प्रदर्श्यन्त इत्यादि बोध्यम् । अथ स्नेहातिशयात् सततहृदयसन्निहितायाः शकुन्तलाया योगक्षेमपर्यालोचनरूपमालापं सखीजनः करोति एकेति । जइवि इत्यादि । यद्यपि निर्वृतमिति संबन्धः । कल्याणं विवाहमङ्गलम् । शकुन्तलेति स्नेहादिकं गान्धर्वेण विवाहविधिनेति निरातिशयपरस्परानुरागं च द्योतयति । इतीति

प्रियंवदा — कहं विअ ॥ (कथमिव)

अन—अज्ज सो राएसी इट्टीं परिसमाविअ इसिहीं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमाअदो इदोगअं सुमरेदि वा ण वेत्ति ॥ (अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसृष्ट आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं स्मरति वा न वेति)

---

हेतौ । तादृशानुरागपूर्वकानुरूपभर्तृगामित्वान्निर्वृतमित्यर्थः । तर्ह्यतः परं का चिन्तेत्यत्राह तथाप्येतावच्चिन्तनीयमिति । यथावन्मनो न निर्वृतमिति भावः । एतावदित्यनेन वक्ष्यमाणस्य परामर्शः । अत्रानसूयायाः शकुन्तलां प्रति कृतार्थताप्रतीतिः राज्ञि बहुमानादयः कल्याणे प्रमोदो राज्ञः प्रतिप्रयाणे शङ्का च व्यज्यन्ते । कहं विअ इति चिन्तनीयमित्यनुषज्यते । कोऽत्र चिन्ताप्रकार इत्यर्थः ॥

तमेवोपन्यस्यति अज्ज इत्यादि । विसृष्ट इत्यन्तेनाचिरेणैव राज्ञस्तपोवने पुनरागतौ हेतुर्नास्तीति सूच्यते । ननु तथाप्यस्यामभिलाषाद्यथाप्रतिज्ञातमनुतिष्ठेदित्यत्राहात्मन इत्यादि । इतः अत्र तपोवने । गतं जातं शकुन्तलाविवाहादिकमित्यर्थः । स्मरति वा न वेति । परिग्रहबहुत्वेऽपीत्यादिसमयेन स्मरति वा राजकार्येणान्तःपुरसमागमेन वा न स्मरति वेत्यर्थः । इत्येतावच्चिन्तनीयमिति संबन्धः । अतो राज्ञो दूतादिदर्शन एव नः कृतार्थता स्यादन्यथा कोऽस्यास्तत्समागमोपाय इति भावः । अत्र वितर्कचिन्ताविषादादयः सखीगता व्यज्यन्ते तत्परिपुष्टा शकुन्तलाविषया स्नेहपदवाच्या रतिः पूर्ववाक्य इवात्रापि प्राधान्येन ध्वन्यते । एवमुत्तरत्रापि बोध्यम् ॥

प्रियं—विस्सत्था होहि । ण तारिसा गुणविरोहिणो आकिदिविसेसा होन्ति । किंदु तादो दाणीं इमं उत्तंतं सुणिअ ण आणे किं पडिपज्जिस्सदि त्ति ॥ (विस्रब्धा भव । न तादृशा गुणविरोधिन आकृतिविशेषा भवन्ति । किं तु तात इदानीमिमं वृत्तान्तं श्रुत्वा न जानामि किं प्रतिपत्स्यत इति)

अन—जह अहं पेक्खे तह तस्स अणुमदं । (यथाहं पश्यामि तथा तस्यानुमतम्)

---

न विस्मरतीत्याह विस्सत्था इति । विस्रब्धा भव राजा सर्वं स्मरत्येव शकुन्तलामचिरेणैव स्वपुरं नेष्यति चेति भावः । कुत इत्यत्राह णेति । तादृशास्तदाकृतिसमानाः । आकृतिविशेषाः सामुद्रिकोक्तगुणविशिष्टाकृतयः । गुणविरोधिनो नेति विरोधशब्दोऽत्रासामानाधिकरण्यमाह । गुणसमानाधिकरणा एवेत्यर्थः । यथोक्तं "यत्राकृतिस्तत्र गुणा वसन्ती"ति "यदुच्यते पार्वति पापवृत्तये न रूप"मित्यादि च । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा । विशिष्टाकृतिशालिनि तस्मिंस्तदनुरूपा दाक्षिण्यसत्यप्रतिज्ञत्वादयो गुणा अप्रत्यक्षा अप्यवश्यं निश्चेतव्या इत्यर्थः । अत इति पूर्वेण सबंन्धः । गुणविरोधिनो नेति निषेधमुखेनोक्तिस्तेषां तद्विरोधित्वशङ्कां परिहृत्य गुणानां नैयत्यबोधनार्था । इदन्तु चिन्त्यमित्याह तात इत्यादि । इमं वृत्तान्तमात्मना विना कृतं गान्धर्वम् । किं प्रतिपत्स्यते युक्तमयुक्तं वा कल्पयिष्यते । वितर्कादयोऽत्र भावाः ॥

तत्र चिन्त्यमित्याह जह इति । विचार्यमाणे तातस्यानुमतमिति मे प्रतिभातीत्यर्थः । गुणवते इत्यादि । गुणवते

प्रियं—कहं विअ । (कथमिव)

अन—गुणवदे कण्णआ पडिपादणिज्जत्ति अअं तादस्स पुढमो सङ्कप्पो । तं जदि देव्वं एव्व संपादेदि णं अप्पआसेण किदहूो गुरुअणो ॥ (गुणवते कन्यका प्रतिपादनीयेत्ययं तातस्य प्रथमः संकल्पः । तं यदि दैवमेव सम्पादयति नन्वप्रयासेन कृतार्थो गुरुजनः)

प्रियं—एव्वं एदं । (एवमेतत्) (पुष्पभाजनं विलोक्य) सहि अवइदाइं बलिकम्मपॲआत्ताइं कुसुमाइं । (सख्यपाचितानि बलिकर्मपर्याप्तानि कुसुमानि)

अन—णं सउंदळाए सौभग्गदेवदा अच्चणीआ । (ननु शकुन्तलायाः सौभाग्यदेवता अर्चनीया)

प्रियं—जुज्जइ ॥ (युज्यते)

(तदेव कर्मारभेते)

---

प्रशस्तबहुगुणाय पुरुषाय । प्रतिपादनीया दातव्या । अयं तावत् अयमेव । प्रथमः पूर्वः । संकल्पः इदं पूर्वमेव संकल्पितमित्यर्थः। केचित्तु प्रथमः आदिमः । प्रतिपादितायाश्च सौभाग्यादिसंपदन्वेषणं पश्चादिति भाव इत्याहुः । तं सङ्कल्पम् । नन्वित्यादि तथा चाननुमतत्वं कथं सम्भाव्यमित्यर्थः ॥

पुष्पभाजनं वेणुकेरकपर्णादिनिर्मितपुष्पपात्रम् । सहि इत्यादि । बलिर्नित्यपूजा । नन्वपचितानीति । तद्रूच्छाव इति भावः । ऊनवदतिरेकस्यापि दोषत्वात् । यावदर्थपरिग्रहा हि मुनयः । णं इत्यादि । नन्विति प्रश्ने । सौभाग्यदेवता लक्ष्मीदेव्या मूर्तिभेदः । या ह्यर्चिता लोकस्य सौभाग्यं प्रतिपादयति । इन्द्राणी वा । यथा रघौ "सान्निध्ययोगात् किल तत्र श-

(नैपथ्ये)

अयमहं भोः ॥

अन—अदिहीणं विअ णिवेदिदं । (अतिथीनामिव निवेदितम्)

प्रियं—णं उडजसण्णिहिदा सउंदळा । (ननूटजसन्निहिता शकुन्तला)

अन—अज्ज उण हिअएण असण्णिहिदा । (अद्य पुनर्हृदयेनासन्निहिता)

प्रियं—होदु अळं एत्तएहिं कुसुमेहिं ॥ (भवत्वलमेतावद्भिः कुसुमैः)

(प्रस्थिते)

---

च्या" इत्यादि । काम इति केचित् । अर्चनीया नन्विति । तदर्थमपि कुसुमान्यपचेयानीति भावः । तदेव कर्मेति । पुष्पापचयरूपमित्यर्थः ॥

अथ राज्ञः शकुन्तलाविस्मरणकारणसम्पादनायारभते नैपथ्य इति । अयमहं भो इति । आगत इति शेषः । भो इति सम्बोधने । कुलपतेराश्रममासाद्य तत्र कमप्यनवलोक्य उटजद्वारमागम्यातिथ्यं परिग्रहीतुमिच्छतो मुनेर्दुर्वाससो वचनमिदम् । तच्छ्रुत्वाह अदिहीणं इति । इवेति प्रतीतौ । निवेदितं निवेदनम् । णं इत्यादि । शून्ये खल्वेवान्निवेदनीयं तत् कथमत्रास्यावसर इति भावः । असन्निहितप्रायेत्याह अज्ज इत्यादि । भर्तृगतहृदया किमपि न जानातीति भावः । कर्तव्यं निश्चित्याह होदु इत्यादि । तत्र गच्छाव इत्यर्थः । यद्वा दुर्वाससो वचनं श्रुत्वा सचिन्तमाहादिहीणमित्यादि । किन्नावाभ्यां तत्र गन्तव्यमिति भावः । अलं गमनश्रमेणेत्याह णमि-

(पुनर्नेपथ्ये)

आः अतिथिपरिभाविनि !

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
क्रियां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

---

त्यादि । सन्निहिताप्यसन्निहितप्रायेत्याह अज्जेत्यादि । सख्युक्तमभ्युपगम्याह होदित्यादि । अज्ज इत्यादि प्रियंवदायाः स्वगतम् । होदित्याद्यनसूयाया वाक्यमिति केचित् ॥

आ इत्यादि । आ इति क्रोधानुभावः । क्रोधहेतुरतिथिपरिभाविनीति । अनादरः परिभव इत्यमरः । अस्यानुरूपं फलमद्यैव प्राप्स्यसीति शेषः । यथा "जनो हि यः कर्म करोति यादृशं स सर्वथा तादृशमश्नुते फल"मिति । परिभवस्य फलस्य च स्वरूपमाह विचिन्तयन्तीत्यादि । अथवा परिभवं विवृण्वन् जनो हीत्युक्तन्यायेन तदनुरूपं फलं प्राप्स्यसीत्याशयेन शापवचनमाह विचिन्तयन्तीति । विचिन्तयन्ती विशेषेण विविधं चिन्तयन्ती । हेतौ शता । विशेषं दर्शयत्यनन्यमानसेति । एकतानेत्यर्थः । तपोनिधिं न तु यं कञ्चित् । "अतिथिः किल पूजार्हः प्राकृतोऽपि विजानते"त्यतिथिमात्रस्य पूज्यत्वे किं पुनस्तपोनिधेरिति । अनेनावश्याभ्यर्हणीयत्वन्निग्रहानुग्रहशक्तत्वं च द्योत्यते । वेत्सि न मया बोध्यमानापीति शेषः । बोधितोऽपीत्यस्य विपरिणामेनापकर्षो वा । मां दुर्वाससम् । उपस्थितं न तु दूरस्थितमित्यज्ञानापराधस्य गौरवं द्योतयति । स्मरिष्यतीति । यद्यपि निग्रहानुग्रहवाक्येषु लोडादिकमेव प्रयुज्यते । तथाप्यस्य तपोनिधित्वेन सिद्धतमस्य वचनतया निग्रहरूपत्वं बोध्यम् ।

प्रियं—हद्धि हद्धि तं एव्व संवुत्तं । कस्सिं वि पूआरुहे अप॰

---

त्वां प्रथममुदूढां त्वाम् । बोधितः तत्तल्लिङ्गेन स्मारितः सन् । अपीति विरोधे । स्वयं तु न स्मरिष्यतीति किं पुनर्वक्तव्य- मित्यर्थे वा । विस्मरणस्वरूपमुपमया दर्शयति क्रियामिति । क्रियां कायिकादिव्यापारम् । प्रमत्तः प्रमादवान् । 'प्रमादोऽन- वधानते'त्यमरः । प्रथमं पूर्वं प्रमाददशायामित्यर्थात् । प्रमत्तो नाम मत्तोन्मत्तव्यतिरिक्तः । तस्य हि ज्ञानं न मत्तस्येव म- द्यपानजनितात्यन्तविस्मरणरूपं नापि भ्रान्तस्येवान्यथाज्ञानरूपं किं तु संशयप्रायमित्युपमया विस्मरणस्य संशयप्रायत्वं तेनान्तरान्तरा नायकस्य रतेः किञ्चिदुद्बोधश्च द्योत्यते । अत एव "इदमुप- नतमेवं रूप"मित्यादेः "कामं प्रत्यादिष्टा"मित्यादेश्च वक्ष्यमाण- स्योपपत्तिः । प्रमत्तः प्रकर्षेण मदविकारवानिति केचिद्व्याकुर्वते । अत्र विचिन्तनादेरज्ञानादिहेतुत्वात् काव्यलिङ्गं तपोनिधिमिति प- रिकरश्च । नायिकाया विचिन्तनं मुनेः क्रोधे तद्धेतुके शापे च हेतुरिति विचिन्तयन्तीत्यादिना प्रतीयमानो विप्रलम्भः प्रा- धान्येन व्यज्यमानस्य रौद्रस्याङ्गम् । रौद्रस्य च करुणत्वेन भ- यानकत्वेन च परिणामो वक्ष्यते । यतोऽयं शापः सख्योर्वि- षादे भीतौ च हेतुः । शापश्च नायिकया न ज्ञात इति व्य- क्तीभविष्यति । अत्र तपोनिधित्वान्निसर्गतश्चण्डत्वाच्च दुर्वाससः कल्पनम् । स्वतो विस्मरणवर्णने रसभङ्गः स्यादिति तद्धेतुतया शापकल्पनं विस्मरणं च रसपरिपोषार्थं कल्पितमिति च न वि- स्मर्तव्यम् । अनेन पञ्चमाङ्कस्य बीजन्यासः कृतः ॥

शापवचनमाकर्ण्य सखेदमाह हद्धि इत्यादि । हेति वि- षादे । धिगिति निर्वेदे । वीप्सया तत्रातिशयः । तदेव य॰

रद्धा सुण्णाहिअआ सउंदळा । (हा धिक् हा धिक् तदेव संवृत्तम् । कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया शकुन्तला) (पुनर्विलोक्य) णखु जस्सिं कस्सिं त्रि । एसो दुव्वासो सुळहकोपो महेसी । तह सपिअ च सुळप्फुळ्ळदुव्वाराए गईए सण्णिवुत्तो । को अण्णो हुदवहादो दहिदुं पभविस्सदि ॥ (न खलु यस्मिन् कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा शप्त्वा चटुलोत्फुल्लदुर्वारया गत्या संनिवृत्तः । कोऽन्यो हुतवहाद्दग्धुं प्रभविष्यति)

---

द्वितर्कितं तदेव । संवृत्तमित्यत्र हेतुः कस्मिन्नपीत्यादि । कस्मिन्नपीति सामान्यरूपेणोक्तिः विशेषाज्ञानात् । अत्र पूजार्हत्वमपराधश्च शापवचनादूह्यते । अपराद्धत्वे हेतुः शून्यहृदयेति । पुनर्विलोक्येति विशेषज्ञानार्थम् । ण खु इत्यादि । न खलु यस्मिन् कस्मिन्नपीति । अपराद्धा शकुन्तलेत्यनुषज्यते । शकुन्तलाया अपराधः प्राकृते अतिथिमात्रे न खल्वित्यर्थः । तर्हि कस्मिन्नित्यत्राहैष इति । सुलभकोपः "दुर्वासाः शङ्करस्यांश" इति उग्रकोप इत्यर्थः । अनेनापराधमहत्त्वं महर्षिरित्यनेन प्रभावातिशयश्च द्योत्यते । तस्मिन्निति शेषः । तथेत्यादि । एष इत्यनुषज्यते । तथा पूर्वोक्तप्रकारेण । चटुलया व्यवस्थारहितया उत्फुल्लया विकसितया दूराहितपदन्यासयेत्यर्थः अत एव दुर्वारया केनाप्यनुगम्य वारयितुमशक्यया । एवं गतिः क्रोधानुभावः । अथ दुर्वाससः एवैवं शापे शक्तिरिति दृष्टान्तमुखेन द्रढयति कोऽन्य इति । कः न कोऽपि । हुतवहादग्नेः । यथा हुतवह एव झटिति दग्धुं प्रभवति तथा दुर्वासा एव शप्तुमिति भावः । अप्रस्तुतप्रशंसा । अत्रावेगविषादादयो भावाः ॥

अन— गच्छ पादेसु पणमिअ णिवत्तेहि णं । जाव अहं अग्घोदअं उपकप्पेमि । (गच्छ पादयोः प्रणम्य निवर्तयैनम् । यावदहमर्घोदकमुपकल्पयामि)

प्रियं—तह । (तथा)

(निष्क्रान्ता)

अन—(पदान्तरे स्खलितं रूपयित्वा) अम्मो आवेअक्खलिआए पब्भट्टं मे अग्गहत्थादो पुप्फभाअणं ॥ (अम्मो आवेगस्खलितायाः प्रभ्रष्टं मे अग्रहस्तात् पुष्पभाजनम्)

(पुष्पोच्चयं रूपयति)

(प्रविश्य)

प्रियं—सहि पकिदिवक्को कस्स सो अणुणअं गह्णादि । किं वि उण साणुक्कोसो मया किदो । (सखि प्रकृतिवक्रः कस्य सोऽनुनयं गृह्णाति । किञ्चित पुनः सानुक्रोशो मया कृतः)

---

अथ शापमोक्षार्थमारभते गच्छेत्यादि । स्पष्टम् । अम्मो इत्यादि । अम्मो इति प्राकृतेऽव्ययं सम्भ्रमे विषादे वा । आवेगः शापहेतुकः तेन स्खलितायाः इति भ्रंशहेतुः । अग्रहस्तादिति । अत्र वामनः "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्या"मिति । पुष्पभाजनं प्रभ्रष्टमिति । इदं दुर्निमित्तमनिष्टसूचकतया कल्पितम् । पुष्पोच्चयं रूपयतीति भ्रंशजातरिक्तत्वपरिपूरणार्थम् ॥

प्रविश्येति हर्षेण सम्भ्रमं सूचयति । सहीत्यादि । प्रकृतिवक्रः स्वभावेन कुटिलहृदयः । इदमम्बरीषचरितादौ प्रसिद्धम् । कस्यानुनयं गृह्णाति न कस्यापि । कष्टोऽस्यानुनय इति भावः । तथाप्ययं मया कथञ्चित्साधित इत्याह किञ्चि-

अन— (सस्मितम्) तस्सिं बहुदरं तं वि । कहेहि । कहेहि । (तस्मिन् बहुतरं तदपि । कथय कथय)

प्रियं— जदा अणुणीदो णिव्वत्तिदुं ण इच्छइ तदा विण्णाविदो मए । (यदानुनीतो निवर्तितुं नेच्छति तदा विज्ञापितो मया)

अन—कहं विअ । (कथमिव)

प्रियं—भअवं तुए पुव्वभत्तिअं पेक्खिअ अविण्णादतवप्पभाव-स्स दुहिदुजणस्स एको अवराहो मरिसिदव्वो त्ति ॥ (भगवंस्त्वया पूर्वभक्तिं प्रेक्ष्य अविज्ञाततपःप्रभावस्य दुहितृजनस्य एकोऽपराधो मर्षितव्य इति)

---

दिति । पुनः पश्चात् पुनरिति विशेषे वा । मया पुनरिति संबन्धः । सानुक्रोशः सदयः । अत्रादावनुनयस्य दुष्करत्वप्रतिपादनं स्वनैपुण्यप्रदर्शनाय । तत्तु हर्षातिशयात् । सस्मितमिति । प्रियंवदाहृदयावगमात् प्रसादनज्ञानजनितहर्षाद्वा स्मितम् । अत एव श्लाघते तस्मिं इत्यादि । तस्मिन् प्रकृतिवक्रे दुर्वाससि । बहुतरं भूयस्तरम् । तदपि किञ्चित्सानुक्रोशत्वकरणमपि । कथयेत्यत्र वीप्सा श्रवणत्वरां सूचयति ॥

जदा इत्यादि । निवर्तनेऽपि प्रयत्नः कृत इति भावः । विज्ञापनाप्रकारमाह भअवं इत्यादि । भगवन्निति प्रशंसापरं, सर्वमपि त्वया ज्ञातुं शक्यमिति सूचयति । पूर्वभक्तिं पूर्वं त्वदागमनकाले त्वयानुभूतां त्वद्विषयां भक्तिम् । प्रेक्ष्य स्मृत्वा । अविज्ञाततपःप्रभावस्य शापं दास्यतीत्यसम्भावयतः । दुहितृजनस्य दुहितृतुल्यायाः शकुन्तलायाः । दुर्वाससः कण्वसखत्वादेवमुक्तिः । आस्यामपराधमर्षणस्यावश्यकत्वं द्योत्यते । एकोऽपराधो मर्षितव्य

अन—तदो तदो ॥ (ततस्ततः)

प्रियं—तदो मे वअणं अण्णहा भविदुं ण अरुहदि । किं दु अभिण्णाणदंसणेण सप्पो णिव्वत्तिस्सदि त्ति मंतअमाण एव्व अंतरिहिदो ॥ (ततो मे वचनमन्यथा भवितुं नार्हति । किं त्वभिज्ञानदर्शनेन शापो निवर्तिष्यत इति मन्त्रयमाण एवान्तर्हितः)

अन—सक्कं दाणीं अस्सादिदुं । अत्थि तेण राएसिणा सम्पत्थिदेण सणामहेआंकिदं अंगुळीअअं सुमरणिज्जंत्ति सअं पिणद्धं । तस्सिं साहीणो उवाओ भविस्सदि । (शक्यमिदानीमाश्वासितुम् । अस्ति तेन राजर्षिणा सम्प्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तस्मिन् स्वाधीन उपायो भविष्यति)

---

इति । "एकोऽपराधः क्षन्तव्य" इति हि प्रसिद्धिः । एवं पुनः शापनिवृत्त्यर्थमुपक्रमो मया कृत इति भावः ॥

तदो इति । ततस्तत इति श्रवणत्वरां सूचयति । तदो म इत्यादि । तत इत्यस्य इति मन्त्रयमाण एवान्तर्हित इत्यत्र सम्बन्धः । मन्त्रप्रकारो म इत्यादि निवर्तिष्यत इत्यन्तम् । मया यदुच्यते तत्तथैव भवतीति नार्हतीत्यन्तार्थः । यथोक्तम् "ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावती"ति । तर्हि कोऽत्र प्रतीकार इत्यत आह किन्त्विति । अभिज्ञानस्य दर्शनेन राजकर्तृकेण । अभिज्ञानदर्शने शापमोक्ष इत्यर्थः । अन्तर्हितः न तु गत इत्यनेन तस्य योगप्रभावादीश्वरत्वं दर्शितम् । अनेन पुनर्मे वचनावकाशो नाभूदिति विषादश्च द्योत्यते विषादमपनयन्त्याह सक्कं इत्यादि । शक्यमाश्वसितुमित्यत्र हेतुमाहास्तीत्यादि । सम्प्रस्थितेन

प्रियं—एहि देवकज्जं दाव णिव्वत्तेम्ह ॥ (एहि देवकार्यं तावन्निर्वर्तयावः)

(परिक्रामतः)

प्रियं—(विलोक्य) अणसूए पेक्ख दाव वामहत्थोपणिहिदवअणं आलिहिदं विअ पिअसहीं । भत्तुगआए चिंताए अत्ताणं वि ण एसा विभावेदि । किं उण आअंतुअं ॥ (अनसूये पश्य तावद्वामहस्तोपनिहितवदनामालिखितामिव प्रियसखीम् । भर्तृगतया चिन्तया आत्मानमपि नैषा विभावयति किं पुनरागन्तुकम्)

---

प्रस्थातुमारब्धवता । आदिकर्मणि क्तः । स्मरणीयमितीति । भावे अनीयर् । अनेन मत्स्मरणं भवत्वितीत्यर्थः । "कृत्यल्युटो बहुल"मिति स्नानीयमित्यादिवत् करणे वा स्मरणसाधनमित्यर्थः । स्मरणीय इति पाठे अहमिति शेषः । स्वयमित्यादरद्योतकम् । पिनद्धं शकुन्तलाया अङ्गुलौ न्यस्तम् । वक्ष्यति च "एकैक"मित्यादि । तस्मिन्निति । निमित्ते सप्तमी तस्य स्मरणादित्यर्थः । उपायः शापनिवृत्त्युपायः । तद्वचनेनानिर्विण्णा प्रियंवदा अनन्तरकर्तव्यं निरूपयन्त्याहेहीति । देवकार्यं प्रतिमास्थितानां देवानां पुष्पाञ्जलिप्रभृति । निर्वर्तयाव: अनुतिष्ठाव: ॥

अणसूए इत्यादि । वामेत्यादि चिन्तानुभावः । यथा "हस्ते कपोल आलोलं पथि चक्षुर्मनस्त्वयी"त्यादि । "द्वारि चक्षुरधिपाणि कपोल"मित्यादि च । आलिखितामिवेति निश्चेतनत्वसाम्यादुत्प्रेक्षा । आत्मानमपीति सर्वदा विभावनीयत्वमपिशब्दो द्योतयति । आगन्तुकमतिथिम् । तदनया समुपस्थितो दुर्वासा न विदित इत्यत्र नाश्चर्यलेश इति भावः । अत्र नायिकाग-

अन—पिअंवदे दुवे एव्व णो मुहे एस वुत्तंतो चिट्ठउ । रक्खणीआ खु पकिदिपेळवा पिअसही । (प्रियंवदे द्वयोरेवावयोर्मुखे एष वृत्तान्तस्तिष्ठतु । रक्षणीया खलु प्रकृतिपेलवा प्रियसखी)

प्रियं—को दाणीं उह्णोदएण णोमाळिअं सिंचादि । (क इदानीमुष्णोदकेन नवमालिकां सिञ्चति)

(निष्क्रान्ते)

प्रवेशकः ॥

---

ता विषादादयः स्तम्भादयश्च भावा व्यज्यन्ते । तस्यास्तदवस्थाया दर्शनेन सख्योर्विषादादयश्च ॥

तदा कार्यज्ञा कार्यं निरूपयन्त्याह पिअंवद इत्यादि । एष वृत्तान्तः शापादिः । मुखे तिष्ठतु हृदये भवतु । एष वृत्तान्तो नान्यस्य कस्यचिद्वक्तव्य इत्यर्थः । कुत इत्यत्राह रक्षणीयेति । प्रकृत्या पेलवा कोमलेति दुःखसहनाशक्तिं द्योतयति । यद्येषा वृत्तान्तमिमं कर्णाकर्णिकया श्रोष्यति तदा रुद्यो विपद्येतेति भावः । शकुन्तलाया एतन्निवेदनं न सम्भावनाया अपि विषय इति दृष्टान्तमुखेनाह को दाणीमिति । प्रकृतिपेलवेत्युक्तेर्नवमालिकेति । अत्राप्रस्तुतप्रशंसा । उष्णोदकेन नवमालिकायाः सेचनमिव शकुन्तलाया एतद्वृत्तान्तनिवेदनमिति को वा सचेतनस्तत् कुर्यादित्यर्थः । अतो मा भैषीरिति भावः । प्रवेशक इति । अत्र गान्धर्वो राज्ञो नगरगमनं तत्काले मुद्रादानं शापतन्मोक्षोपायादयश्चातीताः कथाभागा दर्शिताः । राज्ञो नगरगमनादेव पञ्चमाङ्के वक्ष्यमाणं संगच्छते । तात इदानीमित्यादिना च कण्वस्य तद्वृत्तान्तश्रवणादिकं

(ततः प्रविशति सुप्तोत्थितः शिष्यः)

शिष्य— वेलोपलक्षणार्थमादिष्टोऽस्मि प्रवासात् प्रतिनिवृत्तेन तत्रभवता काश्यपेन । तत्प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति ॥

(परिक्रम्यावलोक्य च) हन्त प्रभातम् । तथा हि ।

---

वक्ष्यमाणं सामान्यतो दर्शितम् । विशेषतश्चाङ्कमुखे शिष्येण सख्या च दर्शयिष्यत इति सर्वं शिवम् ॥

अथ कुलपतिप्राह्याद्रिसूचनार्थमादौ शिष्यस्य प्रवेशमाह तत इत्यादि । सुप्तं स्वापस्तस्मादुत्थितः । पूर्वं सुप्तः पश्चादुत्थित इति वा । स्वापानन्तरं प्रतिबुद्धो गुरुशुश्रूषां निर्वर्त्य तदादेशेन नक्षत्रनिरीक्षणाय निर्गत इत्यर्थः । तदेव स्वकृत्यं निरूपयति वेलेत्यादि । वेलायाः समयस्य उपलक्षणमश्विन्यादिताराभिरुपलक्ष्य ज्ञानं तदर्थम् । प्रवसत्यस्मिन्निति प्रवासो देशान्तरं तस्मात् । प्रतिनिवृत्तेनेति प्रथमाङ्कोपक्षिप्तं सोमतीर्थगमनमनुसंदधाति । प्रकाशं वृक्षाद्यनावृतं देशम् । अवलोकयामि अवलोकयितुं गच्छामि । किमित्यत्राह कियदिति । अवशिष्टमवशेषः ॥

हन्तेति हर्षे । नैसर्गिकी हि सर्वस्यापि रजन्यां सन्निरुद्धवत् प्रतिपत्तिः प्रभातप्राप्तौ प्रीतिश्च । प्रभातमिति । वर्तत इति शेषः । यद्वा रजन्येति विपरिणामेनानुषङ्गः । प्रभातमिति भावे क्तः । प्रभारूपेण भूतमित्यर्थः । उक्तमुपपादयति यातीति । एकतः प्रतीच्यां दिशि । ओषधीनां पतिः चन्द्रः । ओषधीनामाप्यायनकरत्वात्तत्पतित्वम् । पुनः प्राचीं विलोकयन्नाहाविष्कृत इति । आविष्कृतः आत्मानमाविष्कर्तुमारब्धवान् । आदिकर्मणि क्तः । अरुणः पुरस्सरो यस्य पुरस्कृतारुणः सन्नि-

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोऽरुणपुरस्सर एकतोर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ २ ॥

---

त्यर्थः । आविष्कृतारुणेति पाठ आविष्कृतः अरुण एव पुरस्सरो येन तथा । अस्तीति शेषः । द्वेधापि अरुणोदयो जातः सूर्योऽभ्युदयोन्मुख इत्यर्थः । एकतः प्राच्याम् । अत्रास्तं गन्तुमारब्धवत्येव चन्द्रे अरुणोदयादिना प्रभातस्य प्रकाशातिशयो जात इति विशेषो यातीति वर्तमानप्रत्ययेनाविष्कृत इति भूतप्रत्ययेन च प्रतिपाद्यते । अथोत्कृष्टयोश्चन्द्रसूर्ययोस्तथाविधामवस्थां विलोकयन् शोकहर्षसङ्करूपं संसारधर्मं च विचिन्तयन्नुत्प्रेक्षते तेजोद्वयस्येति । तेजोद्वयस्य चन्द्रसूर्ययोः । जगत्प्रकाशकत्वादिरूपमुत्कर्षं दर्शयितुमेवमुक्तम् । युगपदिति नियमनसौकर्याय । व्यसनोदयाभ्यामस्तमयाविर्भावाभ्यां विपत्संपद्भ्यां च पाशस्थानीयाभ्याम् । व्यसनशब्देनास्तमयो लक्ष्यते शोच्यता व्यज्यते । उदयशब्दः श्लिष्टः । लोकः नित्यानित्यवस्तुविचारविधुरः सर्वोऽपि जनः । आत्मनः दशान्तरेषु सुखदुःखात्मकेषु । नियम्यते यन्त्रितः क्रियते । शोकहर्षाभ्यां निवर्त्यत इति यावत् । यद्वा व्यसनोदयाभ्यां दृष्टान्ताभ्याम् । आत्मदशान्तरेषु आपत्संपल्लक्षणेषु विषये । नियम्यते शिक्ष्यते । इवेत्युत्प्रेक्षायाम् । दैवेनेति शेषः । एवं भगवतोः प्रपञ्चप्रवर्तकयोः सोमसूर्ययोरप्येकस्यापदन्यस्य सम्पदेकस्य सम्पदन्यस्यापदिति पर्यायेण प्रवर्तमानयोरापत्संपदोः शोकहर्षाभ्यां वैवश्यं मा भूदिति दैवेनोपदिश्यत इवेत्यर्थः । यदुक्तम् "आत्मानं शोकहर्षाभ्यां शत्रुभ्यामिव नार्पये"दिति ।

अपि च ॥

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुस्सहानि ॥ ३ ॥

---

अत्राद्यपादे यः कश्चिदत्युत्कृष्टपरिवारोऽपि नश्यतीति द्वितीये यः कश्चित् प्रभुः स्वाश्रितमुदितं कुर्वन्नेव स्वयमुदेतीति च ध्वन्यते । स्वविपत्तौ स्वप्रेयसीनामोषधीनां भावि वियोगदुःखं विचिन्त्य विमनस्कतयेव चन्द्रो मन्दं गच्छतीत्युत्प्रेक्षाप्योषधीनां पतिरित्यनेन यातीति लटा च ध्वन्यते । अरुणपुरस्सरत्वोक्त्या दैवाभिमुख्ये सहायोऽपि सुलभः सम्पद्यत इति च । किं चार्कस्य दिग्विजयोद्युक्तविजिगीषुसमाधिः इन्दोस्तदभिभूयमानराजकसमाधिरोषधीनां तदन्तःपुरस्त्रीसमाधिः यात्याविष्कृत इति कालाभ्यामर्कस्य उत्साहातिशयध्वनिश्च । किं चात्र प्राणापानवशाज्ज्योत्स्नादिदशास्ववस्थितिविशेषस्यापि समाधिरित्यप्याहुः । अत्र बहुपरिग्रहो राजा स्वपुरं प्रति यातः कुलपतिश्च प्रत्यायातः क्षात्त्रब्राह्मरूपतेजःशालिनोस्तयोर्व्यसनोदयौ यतो राज्ञः शापादिरूपं व्यसनं कुलपतेरुदयो दुहितृवरप्राप्त्यादिरिति प्रकृतार्थोऽपि द्योत्यते । अरुणपुरस्सर इति दुर्वाससोऽप्यागमनं सूचयतीति पताकास्थानकं च । एवमुत्तरश्लोकेऽपि । शिष्यस्य मतिर्भावः ॥

अथ प्रासङ्गिकचन्द्रवृत्तान्तद्वारेण प्रस्तुतमर्थं स्फुटीकरोत्यपि चेत्यादि । अन्तर्हित इति । अन्तर्हित इति संस्मरणीयशोभत्वे हेतुः । शशिनीति शशस्य स्फुटत्वेन संपूर्णमण्डलत्वं द्योतयद्दृष्टिनन्दनस्यातिशयमासूचयति । सा या पूर्वं स्वप्रियतमसन्निधाने विकासाच्चक्षुष्मतां निरतिशयमानन्दमुदपादयत् सेत्यर्थः ।

(प्रविश्य अपटाक्षेपेण)

अन—एव्वं अ णाम विसअपरंमुहस्स जणस्स एदं ण विदिअं तह वि तेण रण्णा सउंदळाअं अण्णअं आअरिदं । (एवं च नायं विषयपराङ्मुखस्य जनस्य । एतन्न विदितं तथापि तेन राज्ञा । शकुन्तलायामनार्यमाचरितम्)

---

एवकारेण व्यक्तेर्नात्र भेदः किं त्ववस्थाया एवेति द्योत्यते । कुमुद्वती कुमुदवत्यपीत्यर्थः । दृष्टिं न नन्दयति किं तु दुःखमेवावहति । अत्र हेतुः संस्मरणीयशोभेति भूतपूर्वशोभेत्यर्थः । सम्पन्नस्य विपदवस्था सुतरां शोच्येति भावः । अत्र कुमुद्वतीति लिङ्गविशेषनिर्देशगर्भेण कार्यनिबन्धनेन समासोक्त्या समारोपितनायकव्यवहारयोः कुमुद्वतीशशिनोः वृत्तान्तरूपं प्रकृतं सामान्येन समर्थयतीष्टेति । अबलेति सौकुमार्यादिशालित्वान्निसर्गतो दौर्बल्येन सहनाशक्तिं द्योतयति । दुःखानि बहुवचनं दुःखानां बहुविधत्वेन गौरवं द्योतयति । नूनमिति निश्चये । अत्र प्रलयकाले ईश्वरस्य स्वविश्रान्तत्वात् प्रकृतिरूपस्य विश्वस्यावभासनं द्रष्टुं न शक्यमित्यर्थस्य समाधिः । प्रकृतनायिकावृत्तान्तश्च स्फुटं सूच्यते । कुमुद्वतीविषयकः शोकः तन्मूलभूतं शिष्यस्य कारुणिकत्वं मतिश्च भावाः प्राधान्येन व्यज्यन्ते ॥

प्रविश्येति । एवमित्यादेरिष्टप्रवासेत्यादिशिष्यवचनानुवादरूपतया तेनैव प्रवेशावकाशः सम्पादितः । अपटाक्षेपेणेति सम्भ्रमाद्यवनिकां विनेत्यर्थः । अथानसूया प्रियसख्या वियोगदुःखं तद्धेतुभूतां राज्ञ उपेक्षां चानुचिन्त्य कैश्चिद्दिनैर्दूयमाना कस्यांचिद्रात्रौ कथमपि निद्रामवाप्य प्रभाते प्रबुद्धा तत्काले शिष्योक्तमिष्टप्रवासेत्यादिकमाकर्ण्योद्बुद्धया तयैव चिन्तया सुतरां दुःखितासर्वस्यास्य निदानभूते राजनि सरोषा चाह एवमित्यादि । अत्र

शिष्यः— यावदुपस्थितां होमवेलां गुरवे निवेदयामि ॥

(निष्क्रान्तः)

---

वाक्यत्रयम् । जनस्येत्यन्तं प्रथमं राज्ञेत्यन्तं द्वितीयमाचरितमित्यन्तं तृतीयम् । एवमिष्टप्रवासेत्याद्युक्तोऽर्थः । चकारो वाक्यालङ्कारे । एवं नामेत्यपि पाठः । नामेति प्रसिद्धौ । सा च "मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समा" इत्यादिना वाल्मीक्यादावपि । विषयपराङ्मुखस्य जनस्य वीतरागाणामित्यर्थः । अपीति शेषः । पराङ्मुखस्यापीति क्वचित् पाठः । इष्टप्रवासेत्याद्युक्तोऽर्थो वीतरागैर्मुनिभिरपि ज्ञायत इत्यर्थः । तथापि तेन राज्ञा एतन्न विदितमिति सम्बन्धः । तेन राज्ञा विषयिणापि दुष्यन्तेन । एतत् इष्टप्रवासेत्याद्युक्तोऽर्थः न विदितं न ज्ञातम् । कुत इत्यत्राह शकुन्तलायामित्यादि । तेन राज्ञेत्यनुषज्यते । अनार्यं निन्द्यम् । आचरितमनुष्ठितम् । यतः स तथा प्रतिज्ञाय स्वपुरं प्राप्य एनां न स्मरति । अनेनानसूयाया राजनि निन्दा तया च तद्धेतुभूतो रोषो व्यज्यते चिन्तादयश्च । केचित्तु एवं च नामेति निपातसमुदायोऽनुवादे इष्टेत्यादि यदुक्तं तत्तथैवेत्यर्थः । विषयपराङ्मुखस्य जनस्य ममेत्यर्थः । एतद् बुद्धिस्थं विषयिजनवृत्तमित्यर्थः । यद्यपि विषयपराङ्मुखदहं विषयिजनवृत्तं जानामीत्यर्थः । तथापीति तथाप्येतावज्जानामीत्यर्थः । किं तदित्यत्राह तेनेति । तेन तथा प्रतिज्ञादिकं कुर्वता । आचरितमनार्यमिति सम्बन्धः । सामान्यतो विषयिजनवृत्तान्ताज्ञानेऽपि तेन राज्ञा शकुन्तलायामाचरितमनार्यमिति जानामीत्यर्थ इत्याहुः । परे तु एवं च नामेत्यनुवादे । विषयपराङ्मुखस्य जनस्यापि तातकाश्यपस्यापीत्यर्थः । कन्यकानां पितृपारतन्त्र्यात् तेन सर्वमपि तत्कृत्यं वेदितुमेवोचितमित्यपिशब्देन द्योत्यते । एतद् बुद्धिस्थं विवाहलक्षणं वस्तु । न विदितं

अन—पडिबुद्धा वि किं करिस्सं उइदेसु वि करणिज्जसु हथ्थपादा ण पसरन्ति । सकामो दाणीं कामो होदु । जेण असच्चसंघे जणे अणण्णहिअआ सही पदं कारिदा । अहव दुव्वाससो कोप एस विकरेदि । अण्णहा कहं सो राएसी तादिसं णिमंतिअ एत्तिअस्स कालस्स लेहमत्तं वि ण विसज्जेति । ता इदो अहिण्णाणं अंगुळीअअं

---

तथापीति तत्पित्रा न विदितमस्तु राज्ञां गान्धर्वस्य विहितत्वात् । तथापीदं नोचितमित्यर्थः । किं तदित्यत्राह तेनेत्यादीति व्याचक्षते । अथ शिष्यः स्वकर्तव्यमनुसन्धायाह यावदिति । होमवेला उपस्थितेति गुरवे निवेदयिष्यामीत्यर्थः । वेलोपलक्षणस्य फलमनेनोपसंहृतम् । अत्र शिष्यप्रवेशकल्पनं काश्यपागमनादिबोधनार्थमिवानसूयावचनावकाशसम्पादनार्थं चेति ॥

अथ स्वामस्थामनुसन्धायाह पडिबुध्धापीत्यादि । प्रतिबुद्धापि जागरितापि । किं करिष्यामि सुप्तेव किमपि कर्तुं न पारयामीत्यर्थः । अत्र हेतुमाहोचितेष्वपीति । उचितेषु अभ्यस्तेषु । अपीति विरोधे । करणीयेषु सम्मार्जनादिकृत्येषु । हस्तपादं न प्रसरति हस्तौ पादौ च स्वोचितं व्यापारं कर्तुं न क्षमेते । अनेनालस्यादिकं दर्शितम् । हस्तपादा न प्रसरन्तीति पाठे एकवद्भावाभावश्चिन्त्यः । केचित्तु प्रतिबुद्धापि राज्ञा कृतमनार्यमवगच्छन्त्यपि । किं करिष्यामि किमपि न करिष्यामि । अशक्यत्वादनौचित्याच्चेत्यर्थः । अथ प्रियसखीदुःखस्याशक्यप्रतिक्रियत्वान्मम हृदयतापो वर्द्धत इति कार्यद्वारेणाहोचितेष्वपीत्याहुः । अथास्य सर्वस्य निदानमनुसन्धायाह सकाम इत्यादि । सकामः अभिमतार्थसिद्धिमान् वल्लभारमणयोर्वियोगो हि कामस्याभिमतः । तस्य वामस्वभावत्वात् । सकामत्वे हे-

से विसज्जह्मि । दुःखशीळे तवस्सिजणे को अब्भत्थीअदि । ण अ सहीगामी दोसोत्ति ववसिदावि ण पारेमि पवासपडिणिवुत्तस्स तादकस्सवस्स दुस्संदपरिणीदं आवण्णसत्तं सउंदळं णिवेदितुं । इत्थं गए किण्णु खु करणिज्जं ।' (प्रतिबुद्धापि किं करिष्यामि । उचितेष्वपि करणीयेषु हस्तपादं न प्रसरति । सकाम इदानीं कामो भवतु । येनासत्यसन्धे जने अनन्यहृदया सखी पदं कारिता । अथवा दुर्वाससः कोप एष विकरोति । अन्यथा कथं स राजर्षिस्तादृशं निर्भन्त्र्य एतावतः कालस्य लेखमात्रमपि न विसृजेत् । तस्मादितोऽभिज्ञानकमङ्गुलीयमस्मै विसृजामः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यते । न च सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्षन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थं गते किन्नु खलु करणीयम्)

---

तुर्येनेत्यादि । येन कामेन । असत्यसन्धे असत्यप्रतिज्ञे । अनन्यहृदयेत्यनेन विनोदनादिनापि कालक्षेपाभावो द्योत्यते । "व्यन्ते कर्तुश्च कर्मण" इति सखीति प्रथमा । पदं कारिता अवतारिता । तदनुरागिणी कृतेति यावत् । अत्र कामं प्रत्यसूया द्योत्यते । अथ वास्तवप्रमेयभागं विचिन्त्याहाथवेति । नात्र राज्ञः कामस्य वा दोष इत्यर्थः । तर्हि कस्येत्यत्राह दुर्वासस इत्यादि । कोपपदेन तद्धेतुकः शापो लक्ष्यते । दुर्निवारत्वादि व्यङ्ग्यम् । यथा मेघे धनपतिक्रोधविश्लेषितस्येऽति । शल्यायमानत्वेन सततहृदयसन्निधानादेष इति । विकरोति राज्ञः सखीविस्मरणरूपं विकारं प्राप्नोति । शापहेतुकं विस्मरणमिति भावः । विकारयतीति पाठे विकृतबुद्धिं करोती-

त्यर्थः । राजानमिति शेषः । उक्तमेवार्थं द्रढयत्यन्यथेत्यादि । स इति यः खलु पूर्वं प्रेमातिशयात् परिग्रहबहुत्वेऽपीत्यादि प्रतिज्ञातवानित्यर्थः । राजर्षिरिति सत्यसन्धत्वादिकं द्योतयति । तादृशं निर्मन्त्र्येति । प्रस्थानकाले तस्याः स्वमुद्राप्रदानपुरस्सर "मेकैकमत्र दिवसे दिवसे मदीय"मित्यादिप्रणयवचनजातं मन्त्रयित्वेत्यर्थः । एतावतः कालस्येति कर्मणि षष्ठी । एतावन्तं कालमभिव्याप्येत्यर्थः । लेखमात्रमपि । मात्रपदेनावरोधगृहप्रवेशनादिकं व्यवच्छिद्यते । कथं न विसृजेदिति सम्बन्धः । अवश्यमेव प्रेषयेदित्यर्थः । तस्याप्यभावाच्छापहेतुकमेव विस्मरणमिति निश्चिनोमीति भावः । अत्र मतिर्भावः । अथ शापमोक्षोपायं निरूपयन्त्याह तस्मादिति । इतः अस्मात् प्रदेशात् । अस्मै राज्ञे । अस्येति वा पाठः । अथ निरूप्य विसर्जनस्य कश्चित् प्रेष्यो नेति सविषादमाह दुःखशील इति । दुःखशीले विरसस्वभावे विषयपराङ्मुखत्वेन विषयिजनचित्तानुसरणविमुख इत्यर्थः । इदं हेतुगर्भम् । तपस्विजने तन्मध्ये । कः अभ्यर्थ्यते न कोऽप्यभ्यर्थनीय इत्यर्थः । अथ तत्र कमप्युपायमपश्यन्ती पुनस्तातागमनेन तदानीमवश्यानुष्ठेयं कार्यान्तरं विचिन्त्य तत्राप्यशक्तिमाह न चेत्यादि । दोषः स्वातन्त्र्यलक्षणः । यदुक्तम् । "पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रस्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हती"ति । न च सखीगामी गान्धर्वस्य राजर्षिप्रतियोगिकत्वादिति भावः । इति व्यवसितापि एवं निश्चितवत्यपि । यद्वा इतीति हेतौ । व्यवसितापि वक्तुमुद्यतापि । प्रवासप्रतिनिवृत्तस्येत्यनेन शकुन्तलागान्धर्वादिवृत्तान्तानवबोधस्तेन तन्निवेदनार्हत्वं च द्योत्यते । तातकाश्यपस्येति । तातपदेन कन्यकाया अनुरूपवरलाभो गर्भसम्भवश्च प्रायः पितुः प्रिय एवेति तन्निवेदनस्याशङ्कनीयत्वं द्योत्यते । आपन्नसत्त्वां गर्भिणीम् ।

(प्रविश्य)

प्रियं—(सहर्षम्) तुवरदु तुवरदु सही सउंदळाए पत्थाणकोदुअं णिव्वत्तेदुं। (त्वरतां त्वरतां सखी शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम्)

अन—कहं एदं (कथमेतत्)

---

न पारयामि लज्जाशङ्काभ्यां न शक्नोमीत्यर्थः। यद्वा ननु सर्वोऽयं वृत्तान्तस्तातकाश्यपाय निवेद्यतामित्यतः तत्राशक्तिं कैमुत्येन दर्शयितुमाह न चेत्यादि। अयमर्थः सख्या नात्र दोषः तातस्य चैतन्निवेदनं प्रियमिति जानानापि गान्धर्वादिवृत्तान्तं निवेदयितुं न शक्नोमि पुनः सखीदोषहेतुकं तातस्याप्रियं शापादिवृत्तान्तं निवेदयितुं न शक्नोमीति किमु वक्तव्यमिति। एवं विचिन्त्य गतिमपश्यन्ती सखेदमाहेत्थं गत इति। इत्थंगते एवं प्रकारे प्राप्ते। किन्तु खलु करणीयं प्रतिपत्तिमूढास्मीति भावः। अस्मिन्ननसूयावाक्ये विषादमतिक्रोधासूयानिर्वेददैन्यालस्यचिन्तादयस्तत्र तत्र स्फुटं व्यज्यन्ते। एभिरुपबृंहितः करुणो रसः प्रधानम्॥

अथानसूयया निरूपितं सर्वमेव दैवात्सिद्धमिति बोधयन् कथासंघटनाय प्रियंवदां प्रवेशयति प्रविश्येत्यादि। तुवरदु इत्यादि। वीप्सा हर्षात् सम्भ्रमे। किमर्थमित्यत्राह शकुन्तलाया इति। प्रस्थानकौतुकं पतिगृहप्रस्थानकालोचितं मङ्गलकर्म। "अथ कौतुकं कौतूहले मङ्गले चेति" भोजः। केचित्तु कौतुकं प्रतिसरबन्धम्। अलङ्कारान्तराणामुपलक्षणमेतत्। प्रतिसरबन्धश्च स्त्रीणामप्यस्ति। यथा भागवते "सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गला"मितीत्याहुः। कहं एदं इति। कथं केन प्रकारेण।

प्रियं—सुणाहि । दाणीं सुहसइदपुच्छिआ सउंदलासआसं गदा–
(शृण्विदानीं सुखशयितपृच्छिका शकुन्तलासकाशं गता)

अन—तदो तदो । (ततस्ततः)

प्रियं—जाव णं ळज्जावणदमुहीं परिस्सजिअ तादकस्सवेण एव्वं अहिणंदिअं दिट्ठिआ धूमावरुध्धदिट्ठिणोवि यजमाणस्स पावए एव्व आहुदी णिपडिआ । वच्छे सुसिस्सपरिदिण्णा विअ विज्जा असोअणिज्जासि संवुत्ता ॥ (यावदेनां लज्जावनतमुखीं परिष्वज्य तातकाश्यपेनैवमभिनन्दितम् । दिष्ट्या धूमावरुद्धदृष्टेरपि यजमानस्य पावक एवाहुतिर्निपतिता । वत्से सुशिष्यपरिदत्तेव विद्या अशोचनीयासि संवृत्ता) अज्ज एव्व इसिपरिगहीदं तुमं भत्तुणो सआसं विसज्जह्मित्ति । (अद्यैव ऋषिपरिगृहीतां त्वां भर्तुः सकाशं विसृजामीति)

---

संवृत्तमिति शेषः । अद्भुतमिव भाति तत्प्रकारं कथयेति भावः । सुणाहि इत्यादि । सुखशयितं पृच्छतीति तथा सती तत्प्रष्टुमित्यर्थः । अयं स्वागतादिवत् लौकिकाचारः । यथा रघौ "भृग्वादीननुगृह्णन्तं सौखशायनिकानृषी"निति । ततस्तत इति सर्वत्र श्रोतुः श्रवणौत्सुक्यं वक्तुर्विवक्षाजागरणं च द्योतयति । जाव णं इत्यादि । लज्जेति अकृत्याद् भयं लज्जा अकृत्यमत्र पितुरनुमतिं विना वरस्वीकरणम् । परिष्वज्येति । परिष्वङ्गोऽनुरूपभर्तृलाभादिहेतुकस्य परितोषस्यानुभावः । तस्या लज्जाप्रशमार्थश्च । अभिनन्दनप्रकारमाह दिष्ट्येयादि । दिष्ट्येति हर्षे । अथ तातेन मया खल्वविदितमेव त्वं मया मङ्कल्पितमेव पतिं प्राप्तेत्यर्थं स्वानुभवगोचरेण दृष्टान्तेनाह धूमेत्यादि । धूमावरुद्धे-

अन—अह केण आचक्खिदो अअं तादकस्सवस्स वुत्तंतो ।
(अथ केनाख्यातोऽयं तातकाश्यपस्य वृत्तान्तः)

---

त्यादिनात्मनोऽसन्निधानेनाज्ञानम् । यजमानपदेनात्मा आहुति-पदेन शकुन्तला पावकपदेन राजा च सादृश्याद्गम्यत इत्यप्रस्तुतप्रशंसा । केचित्तु धूमावरुद्धदृष्टेरपि यजमानस्येत्यनेन कामपरवशो राजा आहुतिरित्यनेन बीजं पावकपदेन शकुन्तला च गम्यत इति कामान्धेनापि राज्ञा कृतं बीजाधानमुचितक्षेत्र एवेत्यर्थ इत्याहुः । अथोक्तस्य फलमाह वत्स इति । संबुद्ध्या तद्विषयस्नेहप्रकर्षो दर्शितः । शोभनः शमदमादिगुणसम्पन्नः शिष्यः सुशिष्यः तस्मै । अशोचनीयासीति । यथा कुमारे "अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिते"ति । शोच्यता ह्यपात्रे प्रतिपादनाद्भवति । अत्रोपमानद्वयेन नायकयोः परस्परानुरूप्यं जगदाराधनीयत्वमुभयलोकाभ्युदयहेतुत्वं सर्वपुरुषार्थसाधनहेतुत्वं अस्खलितप्रणयवृत्तित्वं चेत्याद्यसङ्ख्यं व्यज्यते । एवमभिनन्दनेन गान्धर्वे स्वानुमतिः स्फुटं दर्शिता । अथ तस्या भर्तृवियोगदुःखातिशयं सतीमधीत्यादिन्यायेन चिरं स्वगृहावस्थापनस्यानौचित्यं चालोचयन्नभिनन्दनस्य फलमाह अद्यैवेत्यादि । ऋषिभिः शार्ङ्गरवादिभिः परिगृहीतां रक्षितां तत्सहायामित्यर्थः । विसृजामि प्रेषयामि । नन्वत्र मुनिव्यवहारानुकृतौ संस्कृतमेव युक्तं सखीव्यवहारानुगुण्येन न प्राकृतं यथोत्तरत्राशरीरिवागनुकारे दुष्यन्तेनाहितमित्यादि । सत्यं किं तु अन्यव्यवहारानुसन्धाने तदर्थस्यैव नियमोऽस्ति शब्दे तु कामचारः । तथा व्यक्तिविवेके साधितम् ॥

अहेत्यादि । अथेति प्रश्ने । अंगिइत्यादि । आख्यात इत्यादि सर्वमनुषज्यते । अग्निशरणं अग्निहोत्रगृहम् । छन्दो वृत्तं

प्रियं—अग्गिसरणं पविट्ठस्स छन्दोवदिए वाआए (अग्निशरणं प्रविष्टस्य छन्दोवत्या वाचा)

अन—(सहर्षम्) कहेहि कहेहि । (कथय कथय)

प्रियं—(संस्कृतमाश्रित्य)

"दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव" ॥ ४ ॥

---

तद्वत्या वाचा । अर्थादशरीरिण्या । शरीरं विनेति क्वचित्पाठश्च । अग्निशरणं प्रविष्टस्याशरीरिण्या वाचा आख्यात इत्यनेन 'पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभि'रितिवद्धगवानग्निरेवादृश्यो भूत्वा कथितवानिति द्योत्यते । अत्र विस्मयो भावः । कथमियमन्तर्वत्नीति काश्यपस्य कथं मदवस्थां तातो जानीयादिति शकुन्तलायाश्च सङ्कटः आपतेदिति तत्तपःप्रभाववशंवदो भगवानग्निरेव सुष्ठु घटयामासेत्यौचित्यात् कल्पितम् । अनेन दैविकी सम्पतिरप्यावेद्यते । संस्कृतमाश्रित्येति । तदुक्तं "कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः" इति । अत्राशरीरिण्या वाचस्ताद्रूप्येणैवानुवादः सारस्याय कल्पितः । वाचः स्वरूपमाह दुष्यन्तेनेति । दुष्यन्तेनेति नामनिर्देशोऽभिजनादिगुणसम्पन्नत्वेन प्रसिद्धत्वं तेनानुरूप्यं च द्योतयति । आहितं निषिक्तम् । तेजः रेतः । "शुक्रं तेजोरेतसी च"त्यमरः । धारणस्य फलमाह भूतय इति । भूतये सम्पत्तये । भुवो भूतय इति भविष्यदर्थसारसंग्रहः । बिभर्तीति भरत इति तद्गर्भस्यान्वर्थतामावेदयति । केचित्तु "अष्टाभिश्च सुरेन्द्राणा"मित्यादिमनुवचनात्तद्बीजस्य तेजोमयत्वेन तेज इत्युक्तम् । भूतये भुव इत्यनेनानया स्वपुत्रपौत्रपरम्परया राजश्रीर्धृतेति सूच्यत इत्याहुः । अवेहि मद्वचनाज्जानीहि । अत्रान्य-

अन—(प्रियंवदामाश्लिष्य) सहि पिअं मे । किंदु अज्ज एव्व सउंदळा णीअदि त्ति उक्कंठासाहारणो मे परितोसो । (सखि प्रियं मे । किन्त्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणो मे परितोषः)

प्रियं—सहि वअ दाव उक्कंठं विणोदइस्सामो सा दाव तवस्सिणी णिव्वुदा होदु । (सख्यावां तावदुत्कण्ठां विनोदयिष्यावः । सा तावत्तपस्विनी निर्वृता भवतु)

---

था भ्रमो मा भूदिति भावः । तनयामिति तनोति कुलमित्यन्वर्थम् । ब्रह्मन् विशिष्टब्राह्मण । अनेन तव प्रभावादेवास्य मनोरथस्य सिद्धिरिति द्योत्यते । मुनेरनुभवगोचरामुपमामाहाग्नीति । शमीतरोरग्निगर्भत्वं किल श्रुतिप्रसिद्धम् । "शमीमिवाभ्यन्तरलीनपावका"मिति रघौ च । अत्रोपमया गर्भस्य तेजस्वित्वादिकं द्योत्यते ॥

प्रियंवदामाश्लिष्येति हर्षप्रकर्षानुभावः प्रियवचनस्य पूर्णपात्रं च । सहि इत्यादि । प्रियं मे इदमिति शेषः । अथ शकुन्तलाविरहं दुस्सहं सम्भाव्याह किं त्विति । किं तु विशेषोऽस्तीत्यर्थः । कस्स इत्यत्राहाद्यैवेति । उत्कण्ठा विरहसम्भविनी महती वेदना । अलभ्यविषये राग इत्यादि तल्लक्षणम् । तया साधारणः समानः । उत्कण्ठास्वीकृतैकांश इत्यर्थः । परितोषः शकुन्तलायाः प्रियतमसमागमो भविष्यतीति सन्तोषः । कथञ्चिदयं परितोषो जातस्तदैवोत्कण्ठापि किं कुर्म इति भावः । हर्ष एव कार्य इत्याशयेन समाधत्ते सहि इत्यादि । विनोदयिष्यावः केनाप्युपायेनापनेष्यावः । तपस्विनी प्रियवियोगेन दीना । अत एवानुकम्प्या च । मुनिदीनौ तपस्विनावित्यमरः । तपस्वी चानुकम्प्यार्ह इत्यन्यश्च । निर्वृता भवतु । तन्निर्वृतिरस्माकं निर्वृतिरिति म-

अन— सहि एदस्सिं चूदसाहावळंबिए णाळिएरसमुग्गए तण्णिमित्तं एव्व काळंतरक्खमा णिक्खित्ता मए केसरमाळिआ । तत्तुवं हत्थसण्णिहिदं करेहि । जाव अहं से गोरोअणं तित्थमित्तिअं दुव्वाकिसळाणि त्ति मग्गळसमाळंभणाणि विरएमि । (सख्येतस्मिन् चूतशाखावलम्बिते नालिकेरसमुद्गके तन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तां त्वं हस्तसन्निहितां कुरु । यावदहमस्या गोरोचना तीर्थमृत्तिका दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि)

प्रियं— तह करीअदु । (तथा क्रियताम्)

---

हाप्रयोजनविघ्नभूतया समुत्कण्ठयास्याः प्रयाणोपक्रमे स्वल्पोऽपि कालक्षेपो न कार्यः । परितोषपूर्वकं शीघ्रमेव प्रस्थानकौतुकं संपादयाव इति भावः ॥

एवं पर्यवस्थापिता प्रस्थानकौतुकनिर्वर्तने त्वरमाणाह सहीत्यादि । तेन हीत्यपि क्वचित् पाठः । एतस्मिन्नित्यङ्गुल्या निर्देशः । नालिकेरसमुद्गके नालिकेरकपालरचिते संपुटके । समुद्गकः संपुटक इत्यमरः । अत्र निक्षेपणं सखीनेपथ्यसमयावधि म्लानतापरिहारार्थं सौरभ्यरक्षार्थं च । अत एव कालान्तरक्षमेति । बकुळमाला पर्युषितापि सौरभ्यं न मुञ्चतीति प्रसिद्धिः । शकुन्तलायाः केसरे प्रीतिविशेषश्च प्रथमाङ्के दर्शितः । तन्निमित्तं शकुन्तलायाः प्रसाधनार्थम् । निक्षिप्ता निक्षेपवत् स्थापिता । तां मालाम् । हस्तसन्निहितां कुरु आनयेत्यर्थः । स्वप्रवृत्तिमाह यावदित्यादि । यावद्विरचयामि तावदिति पूर्वेण सम्बन्धः । विरचयिष्यामीति वा । गोरोचना तिलकाद्यर्था । तीर्थमृत्तिका तीर्थप्रदेशसम्भूता लोहिता मृन्मनःशिलादिवद्वर्णकरेण

अन—(निष्क्रान्ता)

प्रियं—(नाट्येन सुमनो गृह्णाति)

(नैपथ्ये)

क्व ते शार्ङ्गरवमिश्राः ॥

प्रियं—(कर्णं दत्वा) अणसूए तुवरदु तुवरदु एदे खु एत्थिणवुरगामिणो इसओ संदाविअंति (अनसूये त्वरतां त्वरताम् । एते खलु हस्तिनापुरगामिनः ऋषयः शब्दाप्यन्ते)

(प्रविश्य समालम्भनहस्ता)

अन—सहि एहि (सखि एहि)

(परिक्रामतः)

---

सोपयोगा । दुर्वाकिसलयानि उत्तंसाद्यर्था दुर्वाङ्कुराः । इति मङ्गलसमालम्भनानि प्रतिसरशास्त्रोक्तानि मङ्गलालङ्करणानि । मङ्गलविलेपनानीति केचित् । "समालम्भनमालेपे तिलकेऽलङ्कृतावपी"ति यादवप्रकाशः । विरचयामि समाकलय्यानेष्यामि । सुमनो गृह्णातीति । पूर्वोक्तस्थलात् केसरमालामादत्त इत्यर्थः ॥

नैपथ्ये क्वेत्यादि । आदिश्यन्तां गौतमि शार्ङ्गरवमिश्राः शकुन्तलानयनायेत्यपि पाठः । शार्ङ्गरवः कण्वस्य प्रधानशिष्यः तन्मिश्रास्तत्सहिताः । यद्वा मिश्रशब्दो बहुवचनं च पूजायाम् । अथवा आद्यर्थे बहुवचनम् । अणसूए इत्यादिः तदाकर्णनात् सम्भ्रमेणोक्तिः । शब्दाप्यन्ते आहूयन्ते । एसा इति । सूर्योदय एवेत्यनेन मुहूर्तप्रतीक्षणत्वरा सूच्यते । शिखामज्ञा सशिरस्कं स्नाता । प्रतीष्टाः प्रतिगृहीताः नीवारा याभिस्ताः तथा स्वस्तिवाचनमाशीर्वादस्तद्रूपाः कथा यासां ताभिः नीवाररूपदक्षिणां स्वीकृ-

प्रियं— (विलोक्य) एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छिदणीवारसोत्थिवाअणकहाहिं तावसीहिं अहिणंदिअमाणा सउंदला चिट्ठइ । उवसप्पाव णं ॥ (एषा सूर्योदय एव शिखामग्ना प्रतीष्टनीवारस्वस्तिवाचनकथाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एनाम् )

(उपसर्पतः)

(ततः प्रविशत्यासनस्था यथोद्दिष्टपरिवारा शकुन्तला) (शकुन्तलां प्रति)

तापसीनामन्यतमा— जादे भत्तुबहुमाणसूअअं महादेवीसद्दं लहेहि । (पुत्रि भर्तृबहुमानसूचकं महादेवीशब्दं लभस्व)

द्वितीया—वच्छे वीरप्पसविनी होहि ॥ (वत्से वीरप्रसविनी भव)

---

त्याशिषं प्रयुञ्जानाभिरित्यर्थः । यद्वा प्रतीष्टाः दत्ताः नीवारास्स्वस्तिवाचनकथाश्च याभिः प्रतीष्टा नीवारा यासु तथाविधाः स्वस्तिवाचनकथा यासामिति वा । नीवारपदेन जलमिश्रा अक्षता उच्यन्ते । शिरस्यक्षतसमर्पणेन सहाशिषः कुर्वन्तीभिरित्यर्थः । तापसीभिः पतिपुत्रवतीभिर्वयःपरिणताभिः । बहुवचनेन शकुन्तलाप्रयाणप्रसङ्गाद् वृन्दबाहुल्यमुक्तम् । तिष्ठति तदाशिषः सबहुमानमङ्गीकृत्य तिष्ठतीत्यर्थः । सूचितशकुन्तलाप्रवेशमाह तत इत्यादि । आसनस्थेत्याशीर्वादपरिग्रहार्थम् ॥

अभिनन्दनप्रकारमाह जाद इत्यादि । भर्तृबहुमानसूचकमिति । तदेकलभ्यत्वान्महादेवीपदस्याव्यभिचारेण तज्ज्ञापकमित्यर्थः । वीरप्रसविनी भव वीरं कुमारं जनयस्वेत्यर्थः । बहुम-

तृतीया—जादे भत्तुणो बहुमदा होहि । (पुत्रि भर्तुर्बहुमता भव)

(आशिषं दत्वा गौतमीवर्जं निष्क्रान्ताः)

(सख्यावुपसृत्य) सहि सुमज्जणं दे होदु । (सखि सुमज्जनं ते भवतु)

शकु—सायदं मे सहीणं इदो णिसीदअ । स्वागतं मे सख्योः इतो निषीदतम् )

उभे—(मङ्गलपात्राण्यादायोपविश्य) हळा सउंदळे सज्जा होहि जाव दे वअं मग्गळसमाळंभणाणि विरएमः । (हला शकुन्तले सज्जा भव यावत्तवावां मङ्गलसमालम्भनानि विरचयावः)

---

तेत्यत्र वर्तमाने क्तः । अत्राशीर्भिः क्रमादस्खलितमैश्वर्यं लोकोत्तरः सन्तानः अविच्छिन्नं सौभाग्यं च प्रतिपाद्यते । यद्वा प्रथमवाक्येनैव सौभाग्यमैश्वर्यं च तृतीयं तु एकविधैवाशीरनेकाभिः कृतेति ज्ञापनाय ॥

सहीति । सुमज्जनं ते भवत्विति स्वागतादिवत् प्रयोगः । पतिगृहप्रस्थानाङ्गमिदं मज्जनमिति पतिगृहप्राप्तिरूपफलेनाप्यस्य शोभनत्वं भवत्वित्यप्यभिप्रायः । केचित्त्वनेन स्वस्तिवाचनानन्तरं पुनरप्येषा कृतस्नानाभूदिति सूच्यत इत्याहुः । तदागमनेन संतुष्टाह सायदं इति । मङ्गलपात्राणि मङ्गलसमालम्भनपात्राणि । हळेत्यादि । सज्जा भव प्रसाधनार्थमङ्गप्रत्यङ्गानां प्रसारणाकुञ्चनादिना अभिमुखीभवेत्यर्थः । शकुन्तला तत्रादरातिशयं प्रकाशयन्ती सावित्रपादमाह उइदं इत्यादि । उचितमपि परिचितमपि । बहुमन्तव्यत्वे हेतुमाह दुल्लभमित्यादि । युवयोरस्मत्पतिगृहवासासम्भ-

शकु—उइदं वि बहुमन्तव्वं । दुल्लहं दाणिं मे सहीमण्डणं भविस्सदि ॥ (उचितमपि बहुमन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यति)

(इति बाष्पं विसृजति)

उभे—सहि ण दे उइदं मंगळकाळे रोदिदुं (सखि न ते उचितं मङ्गलकाले रोदितुम्)

(अश्रूणि परिमृज्य नाट्येन प्रसाधयतः)

प्रियं—आहरणोइदं रूपं अस्समसुलहेहिं पसाहणेहिं विप्पडिकिअदि । (आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैः विप्रतिक्रियते)

(ततः प्रविष्टौ उपायनहस्तौ ऋषिकुमारौ)

उभौ—इदमलङ्कारजातम् । अलंक्रियतामत्रभवती ।

---

वादतः परं सखीकर्तृकं मण्डनं मे दुर्लभं भविष्यतीत्यर्थः । इतः परं दुर्लभमित्यपि पाठः । बाष्पं विसृजति विरहचिन्तया दुःखेनेति भावः ॥

सहीत्यादि । एतदागमसिद्धम् । प्रसाधयतः अलङ्कुरुतः । अथ प्रसाधयन्ती तत्साधनानां तद्रूपाननुरूपत्वं पश्यन्ती सविषादमाह आहरणोइदं इति । आभरणोचितं अनर्घहारकेयूरादियोग्यम् । विप्रतिक्रियते असाधु क्रियते । आश्रमसुलभैरित्यनेन देशविशेष एवैवंभवने हेतुः पुरगमने त्वन्यथा भविष्यतीति प्रकाश्यते । अत एवाश्रमवासिनां दारिद्र्यं पौराः पश्यन्तीति च खेदः ॥

अथाभरणोचितमित्यनेनाभरणस्य तद्द्वारा तदानेतुश्च सूचनादाभरणहस्तयोर्मुनिकुमारयोः प्रवेशमाह तत इत्यादि । उपा-

(सर्वा विलोक्य विस्मिताः)

गौतमी—वच्छ णारअ कुदो इदं । (वत्स नारद कुत एतत्)

प्रथमः—तातकाश्यपप्रभावात् ॥

गौतमी – किं माणसी सिट्ठिः (किं मानसी सृष्टिः)

द्वितीयः—न खलु श्रूयताम् । तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्युपहरतेति । तत इदानीम् ॥

क्षौमं केनचिदिन्दुपाण्डु तरुणा मङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपयोगसुभगो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैः शाखाग्रभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ५ ॥

---

यनं वृक्षादेरुपायनभूतं क्षौमादि । इदमिति । जातं समूहः । अत्रभवतीति प्रशंसागर्भम् । विस्मिता इति । तेषामसंभावनया विस्मयः । वच्छ इति । कुत एतत् उत्पन्नमिति शेषः । मानसी सृष्टिरिति । तथा सृष्टिर्योगिनां प्रसिद्धा । यथा विश्वामित्रादीनाम् ॥

न खल्विति । मानसी सृष्टिरित्यनुषज्यते । उत्पत्तिप्रकारमाह श्रूयतामित्यादि । शकुन्तलाहेतोः तत्प्रसाधनार्थमित्यर्थः । उपहरत आदत्त । तत इदानीमिति । अस्मासु कुसुमोच्चयोद्युक्तेषु सत्स्वित्यर्थः । क्षौममित्यादि । अत्र वृक्षाणां मूलमध्याग्रदर्शनक्रमेणेयमुक्तिः । क्षौमं पट्टांशुकविशेषः । तद्युगलमित्यर्थः । परिधत्स्व क्षौमयुगलमिति वक्ष्यति । इन्दुपाण्डु चन्द्रवद्धवलमित्यनेन नैर्मल्यातिशयः तेन मनोहरत्वं च व्यज्यते । इन्दुपाण्डुत्वे निमित्तमाह मङ्गल्यमिति । मङ्गल्यशब्दो मङ्गलपर्यायः ।

यथा । "अमङ्गल्यं शीलं तव भवतु नाम" इत्यादि । मङ्गल्यं मङ्गलप्रयोजकमिति वा । मङ्गले हि कर्मणि शुक्लं वस्त्रकुसुमादि ध्रियते । निष्ठ्यूतः प्रकाशितः । चरणयोरुपयोगो विनियोगः तस्मै तस्य वा सुभगः उचितः । चरणोपभोगसुलभ इति पाठे चरणयोरुपभोगे रञ्जने सुलभः पर्याप्त इत्यर्थः । लाक्षारसेन चरणरञ्जनं स्त्रीणामाचारः । अन्येभ्यः वनदेवताधिष्ठितेभ्यो वृक्षान्तरेभ्यः सकाशात् । उत्थितैरित्यनेनास्य सम्बन्धः । तेष्वाविर्भूयेति ल्यब्लोपे पञ्चमी वा । शाखाग्रभागोत्थितैरिति वक्ष्यमाणोपमोपपादकम् । आपर्वभागोत्थितैरित्यपि पाठः । दत्तान्यावयोर्हस्ते समर्पितानि । न तु भूमौ पातितानि तस्यायोग्यत्वात् । तेषां वृक्षाणां ये किसलयोद्भेदाः उद्भिद्यमानानि किसलयानि । उद्भेदपदेनोद्भिद्यमानद्रव्यं लक्ष्यते । कृदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायात् । रक्तत्वकोमलत्वाद्यतिशयो व्यङ्ग्यः । तेषां प्रतिद्वन्द्विभिः तुल्यैः । तत्किसलयत्वेनैव प्रथमं प्रतीतिरासीदित्यनेन द्योत्यते । "कस्तूरीतिलकन्ति फालफलके" इत्यादाविवोपमोपक्रमेयमुत्प्रेक्षेति केचित् । आविष्कृतः निष्ठ्यूत इति शब्दद्वयेनैकस्यैवार्थस्याभिधानादर्थावृत्तिर्दीपकं च । अत्र वृक्षाणां स्थावरत्वेऽपि चेतनवत् क्षौमाद्याविष्करणसामर्थ्यं काश्यपतपःप्रभावात् । यथा वा "यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव । पुत्रेति तन्मयतया तरवोऽभिनेदु"रित्यादि । वनदेवता अपि सबहुमानं तत्प्रियमन्वतिष्ठन्नित्येतदपि तत्प्रभावनिमित्तकमेव । केचित्तु । तरुणा दत्तं वनदेवताभिर्दत्तानीति तरुवनदेवतयोरभेदोपचारेणेति वनदेवतानामेव तत्तपःप्रभावहेतुकं वशंवदत्वमनेन गम्यत इत्याहुः । अत्राभरणलाभकल्पनस्य फलं "इदमुपनतमेवंरूप"मित्यादौ । अत्राद्भुतो रसस्तेन प्राधान्येन ध्वन्यमाना गुरुविषया रतिरुपक्रियते ॥

प्रियं — (शकुन्तलां विलोक्य) हळा अणए अब्भवपत्तीए सूइदा दे भत्तुणो गेहे अणहोदव्वा राअळच्छीः । (हळा अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहे अनुभवितव्या राजलक्ष्मीः)

शकु---(व्रीडां रूपयति)

प्रथम.--गौतम एहि अभिषेकावतीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ॥

द्वितीयः---तथा ।

(निष्क्रान्तौ)

अन--अणुपजुत्तभूसणो अअं जणो चित्तकम्मपरिअएण दे अंगेसु आभरणविनिओअं करेइ (अनुपयुक्तभूषणोऽयं जनश्चित्रकर्मपरिचयेन ते अङ्गेषु आभरणविनियोगं करोति)

---

शकुन्तलां विलोक्येति वक्ष्यमाणाङ्कम् । आभरणोइदमित्यादिना प्रकाशितं खेदं परिहृत्य हर्षं रूपयन्त्याह हळेति । अनया अभ्युपपत्त्या आभरणप्रदानरूपेण वनदेवतानुग्रहेण । सूचितेति । देवतानुग्रहस्य भाविश्रेयस्सूचकत्वादिति भावः । राजलक्ष्मीः महादेवीपदप्राप्तिलक्षणा । अथ प्रथमः स्वकृत्यमनुसन्धायाह गौतमेति । अभिषेकः स्नानं तदर्थमवतीर्णाय जलाशयमित्यर्थात् । वनस्पतिसेवां क्षौमादिप्रदानरूपाम् । सेवामिति सेव्यसेवकभावोक्त्या काश्यपस्य गौरवं द्योत्यते । वनस्पतीति देवतानामप्युपलक्षणम् । तरुदेवतयोः पूर्ववदभेदारोपेणेयमुक्तिरिति केचित् । अभिषेकावतीर्णायेत्यनेन काश्यपस्य प्रवेशावस्था दर्शिता ॥

अथ सखीजनोऽलङ्करणासामर्थ्यं सम्भाव्य तज्जनितमात्मनो दोषं परिहर्तुं तद्विनियोगासामर्थ्यं दर्शयन्नाहाणुपजुत्तेति ।

शकु--जाणे वो णेपुणं (जाने वां नैपुणम्)

उभे--(नाट्येनालङ्कुरुतः)

(ततः प्रविशति स्नानोत्तीर्णः काश्यपः)

काश्यपः--

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथन्नु तनयाविश्लेषदुःखैर्नवैः ॥ ४ ॥

(परिक्रामति)

---

चित्रकर्मपरिचयेन आश्रमस्थदेवालयेष्वालेख्यस्थदेवतानां तत्तदङ्गेषु तत्तदाभरणानां दर्शनपरिचयेनेत्यर्थः । आश्रमेषु देवायतनानि सन्ति । "देवतायतनानां च पूजाः प्रेक्ष्य कृता द्विजैः । ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तम" इति आश्रमवर्णनोक्तेः । जाणे इत्यादि । अतो मैवं वादिष्टमिति भावः ॥

तत इत्यादि । स्नानोत्तीर्णः पूर्वं स्नातः पश्चाज्जलाशयादुत्तीर्णः निर्वर्तितस्नानविधिरित्यर्थः । इदं सन्ध्यावन्दनाद्युपलक्षणम् । अनेन शकुन्तलासम्प्रेषणाय प्रभातसमयसावधानत्वं गम्यते । तत्समयो हि यात्रायाः प्रशस्तः । अथ प्रवासात् प्रतिनिवृत्याग्न्यगारं गत्वा तत्र वैतानिकाग्निमुखात् झटिति स्वमनोरथसिद्धिमुपश्रुत्य प्रहृष्टः काश्यपस्तदैव विरहविह्वलां शकुन्तलां पतिकुलं नेतुं शार्ङ्गरवादीन् निमन्त्र्य प्राभातिकान्यावश्यकानि कर्माणि निर्वर्त्य तत्प्रेषणायोद्युतः स्नेहातिशयात्तद्विषयं दुस्सहं विरहवैक्लव्यमनुसन्दधाति यास्यत्यद्येत्यादि । यास्यति न याता न वा याति अस्यामवस्थायामीदृगुत्कण्ठादिकमन्यदा कीदृग्भविष्यतीति भावः । अ-

द्यास्मिन्नहनि न त्विदानीं यदीदानीं तत् कथञ्चिद्युक्तं स्यात्। शकुन्तला शकुन्तैर्लालिता। ततस्तत्सकाशाल्लब्धा न त्वात्मजेति भावः। केचित्तु शकुन्तलेति लालनीयत्वाभिप्रायकं जीवितसर्वस्वत्वादिकं द्योतयतीत्याहुः। इतीति हेतौ। भाविशकुन्तलायानेनेत्यर्थः। हृदयं तदनुध्यानेन तन्मयीभूतम्। संस्पृष्टं सम्यक् स्पृष्टं न त्ववगाढं तदप्युत्तरक्षणे भविष्यतीति भावः। उत्कण्ठया विरहवेदनया। उत्कण्ठायाः कर्तृत्वोक्त्या हठात्कारो व्यज्यते। अथानुभावमुखेन वैक्लव्यस्य परिपोषं दर्शयति कण्ठ इति। कण्ठः स्वरः। "कण्ठः शब्देऽन्तिके गळे" इति भोजः। स्तम्भितया वैक्लव्याप्रकाशनार्थममङ्गलपरिहारार्थं च कथञ्चिदन्तर्निरुद्धया बाष्पाणां स्वरसतः प्रवृत्तानां वृत्त्या उद्गमेन कलुषः अस्पष्टः गद्गद इति यावत्। "कण्ठस्तम्भितबाष्पवृत्तिकलुष"मिति पाठे कण्ठस्तम्भितानां बाष्पाणां वृत्त्या चक्षुर्गोळकान्तर्लेशतो वर्तनेन कलुषमप्रसन्नमित्यर्थः। तथा चिन्तया समीहितशकुन्तलापुनर्दर्शनाभिध्यानेन शकुन्तलानुध्यानेन वा जडं विषयग्रहणासमर्थम्। दर्शनं चक्षुः। यथा मालत्याम्। "परिच्छेदव्यक्तिर्न भवति पुरस्थेऽपि विषय" इति। अत्र प्राधान्यान्मनश्चक्षुषोः पारवश्यमुक्तमन्येषां पारवश्यस्याप्युपलक्षणम्। वैक्लव्यं हृदयपारवश्यं दुःखमित्यर्थः। दुःखैरिति प्रतिनिर्देशात्। जातमिति शेषः। ईदृशमित्यस्यैव वा विधेयत्वम्। मम नित्यतपस्विनः शमदमादिगुणसंपन्नस्येत्यर्थान्तरसंक्रमितम्। तमेवार्थं विवृणोत्यरण्यौकस इति। जन्मनः प्रभृति तपस्त्वा तपोवने वर्तमानस्येत्यर्थः। अनेनान्यत्र स्नेहप्रवृत्तेरनवकाशो द्योत्यते। तथापि तां प्रति निरतिशयस्नेहो विधिवशाद्वर्तत इत्याह स्नेहादिति। तावदित्यप्यर्थे ममापीत्यर्थः। यद्वा वैक्लव्यविशेषणं तत् परिच्छिन्नमिदंप्रथमतया संभूतमिति वा तदर्थः। ईदृशमिदन्तया निर्देष्टुमशक्यमनुभवैकवेद्यम्। अरण्यौकसां सामान्यतो दुःखं कारुणिकत्वमूलकं यथा वाल्मीक्यादेः मम परं स्नेहमूलकं जातमित्यद्भुतमेतदित्याहाहो इति। इदमिति पाठे

सख्यौ— हळा सउंदले अवसिदमड्डणासि परिहेहि संवदं क्खोमजूअळं । (हळा शकुन्तले अवसितमण्डनासि । परिधेहि साम्प्रतं क्षौमयुगळम् )

---

अनुभूयमानमित्यर्थः । अथ ममापीदृशं वैक्लव्यमन्येषां गृहस्थानां किं पुनरिति भूतदयानिमित्तकेन तत्त्वपर्यालोचनेनाह पीड्यन्त इति । गृहिणः गृहस्थाः इदमरण्यौकस इत्यस्य प्रतियोगि । गृहिण इत्यनेन मिथुनाभिमानित्वं सूच्यते । कथं केन प्रकारेण । नुशब्दो वितर्के प्रश्ने वा । कथन्नु पीड्यन्ते तत्प्रकारो दुर्ज्ञेयः सुतरां पीड्यन्त इत्यर्थः । कथं नेति च पाठः । तनयाया औरस्या इति शकुन्तलेत्यस्य प्रतियोगि । विश्लेषदुःखैः दुःखानां बहुविधत्वाद्बहुवचनम् । नवैरिति प्रमुखदुस्सहत्वं द्योतयति । अत्र प्राकरणिकान्मुनिवृत्तान्तादप्राकरणिको गृहस्थवृत्तान्तः कैमुत्येनोक्त इति काव्यार्थापत्तिः काव्यलिङ्गं च । मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समा इत्यादौ वाल्मीक्यादिवदत्र मुनेः शोको वर्णित इति शकुन्तलायामालम्बितस्तद्गुणस्मरणाद्युद्दीपितो बाष्पस्वरभङ्गाद्यनुभावितो मतिचिन्ताविषादादिभिर्व्यभिचरितः करुणो रसः प्राधान्येन ध्वन्यते । अद्भुतश्च तदङ्गमिति केचित् । ममाप्येवं वैक्लव्यं जातमित्येतदद्भुतमित्यर्थप्रतीत्या करुणोपस्कृतोऽद्भुतः प्रधानमित्यन्ये । ममाप्येवं वैक्लव्यं किं पुनर्गृहस्थानामिति मुनिजनस्वभावासिद्धे तत्त्वानुसंधाने वाक्यविश्रान्त्या वैक्लव्याद्यालम्बितो मतिरूपो भावः प्राधान्येन ध्वन्यते करुणाद्भुतौ तदङ्गभूतौ । अत एव वैक्लव्यादिशब्दैः शोकादेरुक्तावपि "व्यभिचारिरसस्थायिभावानां शब्दवाच्यते"त्युक्तो रसदोषोऽपि नेत्यपरे । परिक्रामतीति । शकुन्तलासमीपं प्रतीत्यर्थात् ॥

हळेत्यादि । अवसितमण्डनासीत्यनुवादेन क्षौमयुगलपरिधा-

शकु— (उत्थाय परिधत्ते)

गौतमी— जादे एष दे आणंदस्यंदिणा चक्खुणा परिस्सजंतो विअ गुरु उवट्ठिओ । आआरं दाव पडिवज्ज । (पुत्रि एष तवानन्दस्यन्दिना चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत् प्रतिपद्यस्व)

शकु— (सव्रीडम्) तात वन्दामि । (तात वन्दे)

काश्यपः— वत्से !

यथातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्स्यसि ॥ ६ ॥

---

नस्य प्राप्तकालत्वं सूचितम् । अत आह परिधेहीति । उत्थायेति । अन्यथा वस्त्रधारणस्याशक्यत्वात् । परिधत्ते इति । तस्या अपि तत्र नैपुणं दर्शयति । जादे इति । तव गुरुरिति संबन्धः । आनन्दस्यन्दिना इति । सर्वे भावाश्चक्षुषि व्यज्यन्त इति न्यायात् आनन्दातिशयं प्रकाशयतेत्यर्थः । आनन्दाश्रुपरिवाहिनेत्यर्थो वा । तथाविधेन चक्षुषा परिष्वजमान इवेत्युत्प्रेक्षया तदानीं गुरोर्विशेषतः सस्नेहनिरीक्षणं गम्यते । एतद्वचनं तस्या हृदयोल्लासार्थम् । आचारं तावत् प्रतिपद्यस्वेति । अनेन कर्तव्यमूढा मा भूरिति तत्कालोचितः शिक्षाविशेषः कृतः । आचारोऽभ्युत्थानवन्दनादिः । सव्रीडमिति । तदानींतनस्वावस्थानुसंधानात् व्रीडा ॥

वत्से इति स्नेहातिशयव्यञ्जकं संबोधनं तदानीं तस्यामस्य विशेषप्रतिपत्तिं द्योतयति । अतस्तदनुरूपामाशिषं प्रयुङ्क्ते । ययातेरिति ययातिर्नाम सोमवंश्यः कश्चिद्राजा । शर्मिष्ठा तन्महिषी । एतच्चरितं महाभारते प्रसिद्धम् । बहुमता वर्तमाने क्तः । बहुमानो महादेवीपदप्रापणादिना संमानः । न तु स्नेहमात्रम् । स्त्रीणां

गौतमी — भअवं वरो खु एसो ण आसी । (भगवन् वरः खल्वेष नाशीः)

काश्यपः— वत्से! इतः सद्यो हुतानग्नीन् प्रदक्षिणीकुरुष्व ।

(सर्वे परिक्रामन्ति)

काश्यपः—

अमी वेदीं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पालयन्तु ॥ ७ ॥

प्रतिष्ठस्वेदानीम् । (सदृष्टिक्षेपम्) क्व ते शार्ङ्गरवमिश्राः ।

---

हि लोकोत्तरभर्तृबहुमानलाभः तथाविधपुत्रलाभश्चेत्युभयमेवाशास्यं तत्रैतत् प्रथममाशास्यमिति भावः । पुनः सुतमप्यवाप्स्यसि । अवाप्नुहीति वा पाठः । सम्राजं चक्रवर्तिनम् । अत्रोपमया बह्वीष्वपि पत्नीषु त्वमेव प्रधानमहिषी भूयाः । तथा त्वत्पुत्रमेव युवराजं दुष्यन्तोऽभिषेक्ष्यतीति च दर्शितम् । अत्र विधिरूपमपीदं वचनं वैदिकवत् ॥

भअवं इति । भगवन्निति साभिप्रायकम् । वरः खल्वेष नाशीरिति । अभीष्टस्य प्रार्थनमाशीः वरस्तु तस्य विधिरभीष्टसाधनसमर्थः । प्रस्थानकाले वन्दनसमनन्तरं समुदाचारप्रयुक्ताप्येषाशीः त्वन्मुखप्रवृत्तत्वाद्वर एवेत्यर्थः । यथोक्तं "ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावती"ति । अथ काश्यपः प्रयाणाङ्गतया कर्तव्यमुपदिशति वत्स इति । इतोऽत्र देशे । सद्योहुतानिति तत्कालस्य सन्ध्यारूपत्वात् । यद्वा यात्राकाले शकुन्तलाभ्युदयार्थं विशेषतो हुतानित्यर्थः । हुतान् समिदादिभिः उज्ज्वालितान् अग्नीन् त्रेताग्निप । प्रदक्षिणीकुरुष्वेति । अयं चाचारः । यथा । "प्रदक्षिणीकृत्य

(प्रविश्य)

शिष्याः— भगवन्निमे स्मः ।

काश्यपः— शार्ङ्गरव भगिन्यास्ते मार्गमादेशय ।

शार्ङ्गरवः— इत इतो भवती ।

(परिक्रामन्ति)

---

हुतं हुताश"मिति । प्रार्थयतेऽमी इत्यादि । वेदीं परितः वेद्याः समन्तात् । क्लृप्तधिष्ण्याः प्रथमाधानसमय एव त्रिधा कल्पितस्थानाः । यद्वा होमानन्तरं प्रतिदिनमेकीभूताः पुनर्होमकाले पृथक् कल्पितस्थानाः । समिद्वन्तः समिदित्यन्वर्थः ज्वलितसमिध इत्यर्थः । प्रान्तेत्यनुपलक्षणं यथावदनुष्ठानस्य । हव्यगन्धैर्दह्यमानसमिदाज्यादिगन्धैः । दुरितमपघ्नन्त इति । "अभ्युद्धताग्निपिशुनैरतिथीनाश्रमोन्मुखान् । पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभि"रित्यादिवत् । वैताना यज्ञसंबन्धिनः । वह्नयः गार्हपत्यादयः । पालयन्तु पालनमभ्युदयानुकूल्याचरणम् । पालनसामर्थ्यं वह्नीनां विशेषणैः सूच्यते । अत्र स्वभावोक्तिः परिकरश्च । मुनेरग्निषु भक्तिः प्राधान्येन व्यज्यते । सप्तभिरग्निसंबन्धिभिः शब्दैः सप्तजिह्वत्वमपि सूच्यत इत्यप्याहुः । प्रतिष्ठस्वेदानीमिति । विलम्बो न कार्य इति भावः । इदानीमित्यनेना भूतोदयवशान्निमित्तगुणं द्योतयति । क इति ते पूर्वमादिष्टाः ॥

शार्ङ्गरवेति । संबुद्धिः शिष्येषु तस्य प्राधान्यं द्योतयति । भगिन्या इति । शिष्यस्यापि धर्मतः पुत्रत्वात् यथा "न कौशिकस्य त्वयि धर्मपुत्रे पुत्रे मधुच्छन्दसि वा विशेष" इति । अथ गमनकाले बन्धुजनानुज्ञाप्रार्थनस्यापि कर्तव्यतामनुसन्दधान आह हंहो इत्यादि । हंहो इति संबोधने । सन्निहितदेवताः

काश्यपः— हंहो सन्निहितदेवतास्तपोवनतरवः

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ८ ॥

---

वनदेवतानामाश्रयभूता इत्यनेन माहात्म्यमुच्यते । इदं वनदेवतानां संबुद्धिमप्याक्षिपति । तपोवनतरव इति अनेन तपस्विभिरुपभुज्यमानत्वात्तपःसंबन्धः सूच्यते तत एव चैतन्यविशेषोऽपीत्यनुज्ञाप्रार्थनोपपत्तिः । पातुमिति । पातुमपीत्यर्थात् । प्रथममित्येतदत्रान्वेति । व्यवस्यति व्यवसायं करोति । लडर्थो विवक्षितः । प्रथमं जलं न पिबतीत्येव न प्राथमिकेऽपि जलपाने मनोपि न करोतीत्यर्थः । अपीतेषु न विद्यते पीतं पानं येषां तेषु पीतमित्यर्श आद्यजन्तं वा । पादैः पिबतीति प्रसिद्धिमनुसृत्यैवमुक्तम् । पानेन सेचनं वा विवक्षितम् । न आदत्ते म्लानिप्रसङ्गभयाद्वर्द्धनादिभीत्या च न लुनाति । अनेन तेषु लोभो दयापरतन्त्रत्वं रक्षणवर्द्धनादौ जागरूकत्वं च द्योत्यते । प्रियमण्डनेति मुग्धास्वभावः । अनेन आदानहेतुरुक्तः । अपीति विरोधे । पल्लवमित्येकत्वं विवक्षितम् । स्नेहेनेति सर्वत्र हेतुः । नास्मन्नियोगेनेति भावः । तदेव व्यक्तीकर्तुमन्यदप्याहाद्य इति । आद्य इति सीमन्तगर्भादिवदनुदिनं सेचनादौ तत्प्रतिपालनं द्योतयति । कुसुमप्रसूतिः कोरकोद्गमः समयशब्दस्तन्मात्रापेक्षत्वं कृतार्थतायाः सूचयति । उत्सवः देवोत्सवादिवत् परमानन्दः । अत्र वाक्यत्रये क्रमश्च विवक्षितः । सा युष्मास्वेवंविधवात्सल्यशालिनी । इयं युष्मत्पुरस्था । शकुन्तलेति लालनीयत्वाभिप्रायकम् । पतिगृहं यातीति तद्यानस्य प्राप्तकालत्वं दर्शयदभि-

(कोकिलरुतं सूचयित्वा) आः

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा
प्रतिवचनीकृतमेभिरीदृशम् ॥ ९ ॥

---

नन्द्यत्वं सूचयति । सर्वैः युष्माभिः संभूय । प्रत्येकमनुज्ञाकरणे कालविलम्बः स्यादिति भावः । अनुज्ञायतां पतिगृहप्रयाणानुरूपं स्नेहानुरूपं चानुमननं क्रियतामित्यर्थः । भावे सेयमित्यनुषङ्गे कर्मणि वा प्रार्थनायां लोट् । अत्र वाक्यत्रयार्थस्यान्त्यवाक्यार्थोपपादकत्वात् काव्यलिङ्गं द्वितीयपादे विशेषोक्तिः व्यधवस्यतीत्यादेरेककारकगतत्वेनोक्तेः कारकदीपकं च । अत्र पादत्रये शकुन्तलायास्तरुषु स्नेहातिशयो गम्यते । तस्य स्नेहपदेनानुवादस्तदतिशयप्रकाशनार्थो मुनिनियोगादिहेत्वन्तरनिरासार्थश्च । वृक्षाननुज्ञाप्य प्रस्थापयितुं प्रवृत्तत्वान्मुनेरपि शकुन्तलायामिव तत्संबन्धितया वृक्षेषु वात्सल्यातिशयो गम्यत इति भावोपस्कृतो भावः प्राधान्येन ध्वन्यते । अत्र नायकयोः प्रथमदर्शनात् प्रभृति सर्वस्यापि वृत्तान्तस्य साक्षिणो वयस्यस्थानीया वृक्षा इति विशेषोऽप्यनुज्ञाप्रार्थनमुखेन कविना प्रकाश्यत इति च विभावनीयम् ॥

सूचयित्वेति । तच्छ्रवणमभिनीयेत्यर्थः । आ इति स्मरणे । तच्च वृक्षावस्थाविषयकम् । अथ तदनुमतिमनुमायाहानुमतेति । गमनानुमतौ हेतुर्वनवासबन्धुभिरिति । बन्धुभिर्भ्रातृभूतैः । अनुमतगमनेत्यनुमाने हेतुमाह परभृतेत्यादि । परभृतपदेन कोकिलस्त्रियो विवक्षिताः । कलमिति स्त्रीनादविवक्षया । शकुन्तलापरभृतपदाभ्यां तयोः साम्यं तत्र औचित्यं च दर्शितम् ।

(आकाशे)

रम्यान्तरः कमलिनीहरितैः सरोभिः
छायाद्रुमैर्नियमितार्कमरीचितापः ।
भूयात् कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ १० ॥

(सर्वे सविस्मयमाकर्णयन्ति)

---

यथा यस्माद्धेतोः । प्रतिवचनीकृतं प्रत्युत्तरवदुपन्यस्तम् । ईदृशं अस्या वचसा समानस्वरम् । यस्मादेभिरेवंविधं विरुतं प्रतिवचनीकृतं तस्मादनुमतगमनेति ज्ञायत इति संबन्धः । एवं स्थावराणामप्यौचित्यज्ञानमन्यत्रापि वर्णितम् । यथा रघौ "त्वं रक्षसा भीरु यतोपनीता तं मार्गमेताः कृपया लता मे । अदर्शयन्नि"त्यादि । अत्र वृक्षा विरुतेन शकुन्तलां प्रत्येवानुमेनिरे न तु काश्यपमित्यपि विरुतस्य परभृतसंबन्धकथनेनेदृशमित्यादिविशेषणाभ्यां च प्रकाश्यते । अन्यथा यस्य कस्यापि पक्षिणो रुतस्य प्रतिवचनीकर्तव्यता स्यात् । यात्राकाले कोकिलरुतं सुनिमित्तं च । अत्रानुमानं काव्यलिङ्गं वा । "त्वद्दुःखदुःखिता दुःखमास्ते सा जननी तवे"तिवदात्मदुःखादपि मुनेर्वृक्षाणां दुःखस्यारूह्यत्वं आ इति स्मरणद्योतकनिपातेन प्रतीयते । तेन तेषु वात्सल्यातिशयश्च । केचित्तु आ इति वितर्के अनुमीयत इत्यर्थः । ईदृशं स्वाशिखासमुद्भूतम् । विशेषणाभ्यां परभृतविरुतस्य प्रतिवचनसाधर्म्यं दर्शितम् । परभृतवचनरूपप्रतिवचनेन बन्धुभूतवृक्षाणां गमनानुज्ञानुमीयत इत्यर्थः । अनुमानं, तरुषु बन्धुत्वं विरुते प्रतिवचनत्वं चारोप्यत इति रूपकं च । मुनेरचेतनान् वृक्षान् प्रत्यनुज्ञाप्रार्थनं तेषु वात्सल्यातिशयेनैवेत्याहुः ॥

अथ वनदेवतानामनुज्ञाप्रकारं दर्शयति रम्यान्तर इति ।

गौतमी— जादे णादिजणसिणिद्धाहिं अणुमदगमणासि तवोवणदेवदाहिं । पणम भअवदीणं । (पुत्रि ज्ञातिजनस्निग्धाभिरनुमतगमनासि तपोवनदेवताभिः । प्रणम भगवतीनाम् )

---

अस्याः पन्था एवं भूयादिति संबन्धः । रम्यान्तरः अन्तरामितस्तपोवनादारभ्य भर्तृगृहं यावन्मार्गमध्यम् । कमलिनीभिः पद्मिनीभिः पद्मपङ्क्तिभिर्वा निरन्तरव्याप्ताभिः हरितैः श्यामैः । तत्त्वेन दूरादेव दृश्यमानैरित्यर्थः, भरितैरिति पाठे पूर्णैरित्यर्थः । सरोभिरिति । मार्गे तत्र तत्रास्याः श्रमविनोदनार्थं तादृशानि सरांसि सन्त्वित्यर्थः । रम्यान्तर इत्यनेन सरोविशेषणेन च तथाविधसरोदर्शनकुतूहलादिनाप्यध्वश्रमशैथिल्यं भवेदिति द्योत्यते । छायाप्रधानाः द्रुमाः छायाद्रुमाः । नियमितः शमितः । तत्र तत्र तापशमनाय छायावृक्षाश्च भूयासुरित्यर्थः । कुशेशयरजांसीव तद्रजोभिर्वा मृदवो रेणवो यत्र । पादोपघाताभावाय मार्गरेणवः पद्मपरागमृदवो भवन्त्वित्यर्थः । शान्तोऽरूक्षः मन्द इति यावत् । अनुकूलः सुखकरः गमनानुसारी वा पवनश्च तथास्त्वित्यर्थः । अनुकूल इत्यनेन शुभानिमित्तत्वं च दर्शितम् । यथा "पवनस्यानुकूलत्वात् प्रार्थनासिद्धिशंसिन" इति । शिवः मङ्गलः पङ्कपाषाणकण्टकव्यालचोरादिरहित इति यावत् । चकारौ समुच्चये । अनेन वयमनुमन्यामहे इति गमनानुज्ञा वनदेवताभिः कृतेति प्रकाश्यते । तेन नायिकाविषयस्नेहातिशयश्च । एवं तदनुमननेनास्य महाभाग्यं च सूचितम् । अत्र कमलिनीहरितैरित्यत्र तद्गुणः रजोमृदुरित्यत्रोपमा परिकरश्च । सर्व इत्यादि । विस्मयोऽसंभावनया ॥

अथ तद्वचो वनदेवतानामिति बोधयन्ती कर्तव्यमाह

शकु— (सप्रणामं परिक्रम्य । जनान्तिकम्) हळा पिअंवदे अॲअवुत्तदंसणस्सुआए वि अस्समं परिच्चेअंतीए दुःखदुःखेण मे चरणा पुरदोमुहावट्टन्ति । (हळा प्रियंवदे आर्यपुत्रदर्शनोत्सुकाया अप्याश्रमं परित्यजन्त्या दुःखदुःखेन मे चरणौ पुरतोमुखौ वर्तेते)

प्रियं— ण केवलं तवोवणविरहकादरा सही एव्व । तुए उपहिदविओअस्स तवोवणस्स वि एसा समवत्था दिस्सइ ॥

उग्गलिअदब्भकवळा मिईओ परिच्चत्तणच्चणा मोराओ ।
अवसरिअपंडुपत्ता मुॲअन्ति विअ अस्सूणि वणळदाओ ॥

---

पुत्रीति । ज्ञातिजनस्निग्धाभिः ज्ञातिजनवात्स्निग्धाभिरित्यनुमननहेतुः । भगवतीनामिति शेषषष्ठी । भगवतीरित्यपि पाठः । अथ स्वीयं चिरपरिचिततपोवनविरहवैक्लव्यं सखीं प्रत्याह हळेति । दुःखदुःखेन अतिकृच्छ्रेण । अत्रानेन वाक्येनाश्रमपरिचयपारवश्यं दर्शयता रसस्याविच्छेदाय रतेरनुसन्धानं सुविहितम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥

ण केवलमिति । उपहितः उपगतः । तपोवनस्यापीति तपोवनशब्देन तद्वासिनः स्थावरजङ्गमा लक्ष्यन्ते । विरहकातरत्वस्य सार्वत्रिकत्वं व्यङ्ग्यम् । एषा विरहकातरतारूपा । अवस्थैव समवस्था । दृश्यते दर्शनेन ज्ञायते । तत्प्रकारं किञ्चिदुपन्यस्यत्युद्गळितेति । उद्गाळिताः चर्विता अपि मुखात् पातिताः अनेन दुःखातिशयः प्रकाश्यते दर्भकबला याभिः । मयूरा मयूरस्त्रियः । अपसृतेत्यादि । वनलतारूपा बन्धुस्त्रियो गलत्पाण्डुपत्रापदेशेनाश्रूणि मुञ्चन्तीवेत्यर्थः । इति समासोक्तिमूलोत्प्रेक्षा । अत्र कबलोद्गलनाद्यनुभावैर्दुःखं द्योत्यते । स्त्रीणा-

(न केवलं तपोवनविरहकातरा सख्येव त्वयोपहितवियोगस्य तपोवनस्याप्येषा समवस्था दृश्यते ।
उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्तीवाश्रूणि वनलताः ॥ ११ ॥)

शकु— (स्मृत्वा) ताद लदाभइणीं वणजोसिणीं दाव आमंतइस्सं । (तात लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्यामि)

काश्यपः— अवैमि ते तस्यां सोदर्यस्नेहम् । इयं तावद्दक्षिणेन ॥

---

मेव च तद्वर्णितं संबन्धविशेषात् । यथा रघौ "नृत्तं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्य" इत्यादि ॥

स्मृत्वेति । वनज्योत्स्नामिति शेषः । वनलता इत्युक्तिः स्मृतेरुद्बोधिका । तादेति । लताभगिनीमिति लताया भगिनीत्वारोपेणामन्त्रणस्यावश्यकत्वं द्योत्यते । अत एव पृथगित्यर्थकं तावदित्युक्तम् । वनज्योत्स्ना प्रथमाङ्कप्रस्तुता । तदुक्तमनुवदन्नाहावैमीति । अतस्तदामन्त्रणं कार्यमिति भावः । इयमिति । तावदिति वाक्यालंकारे । दक्षिणेनेत्यव्ययं सन्निहितदक्षिणभाग इत्यर्थः । तदुपलक्ष्यतां त्वयेति भावः । वणजोसिणीति । चूतसंगतापीति इदमपि प्रथमाङ्कप्रस्तुतम् । चूताश्लेषणेन मदाश्लेषणमशक्यमित्यपिशब्देन द्योत्यते । तदशक्यत्वं परिहरन्तीतोगताभिरिति । न चूतालिङ्गनप्रसृताभिरिति भावः । मत्कृतेऽपि ते चूतवियोगो माभूत्विति नायिकायास्तस्यां स्नेहदयादेरतिशयः प्रतीयते । प्रत्यालिङ्गेत्यनेनानया पूर्वं वनज्योत्स्ना समाश्लिष्टेति द्योत्यते । अत्र शाखाया बाहुत्वारोपेण वनज्योत्स्नायाः सखीत्वं गम्यत इत्येकदेशविवर्ति रूपकम् । प्रत्यालिङ्गने हेतुमाहाद्यप्रभृतीति ।

शकु— (लतामुपेत्य) वणजोसिणि चूदसंगआ वि पच्चालिंग मं इदोगआहीं साहाबाहाहीं । अज्जप्पहुदि दूरवट्टिणी भविस्सं । (वनज्योत्स्ने चूतसंगतापि प्रत्यालिङ्ग मामितोगताभिः शाखाबाहाभिः । अद्यप्रभृति दूरवर्तिनी भविष्यामि)

काश्यपः— वत्से !

संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संगतवती नवमालिकेय-
मस्यामहं त्वयि च सम्प्रति वीतशोकः ॥ १२ ॥

इतः पन्थानं प्रतिपद्यस्व ।

---

दूरवर्तिनी भविष्यामीति । अनेन पुनर्वार्तामात्रमपि उपलब्धुं न शक्यमिति द्योत्यते । तेन वियोगदुःखस्य प्रबलतरत्वं च ॥

अथ काश्यपस्तस्याः तपोवनविरहकातरतामनुरूपलोकोत्तरभर्तृलाभस्मारणेनापाकृत्य तामुद्धर्षयितुमात्मनः कृतार्थतां प्रतिपादयति वत्से संकल्पितमित्यादि । संकल्पितं मनसा निरूपितम् । अपि नाम लोकोत्तरगुणविशिष्टो दुष्यन्तो मत्सुतां परिणयेदिति । प्रथममेव यौवनात् प्रागेव । संकल्पितमेवेति वा संबन्धः । "गुरुणो उण अणुरूववरप्पदाणे संकप्पो" इति पूर्वोक्तमनुसंहितम् । मया त्वदभ्युदयैकतानेन । तवार्थे त्वत्पाणिग्रहणलक्षणे निमित्ते । भर्तारमिति भरणसामर्थ्यमप्यनेन प्रदर्श्यते । आत्मसदृशं रूपादिगुणैस्तवानुरूपम् । सुकृतैः न त्वस्मद्यतनैरिति भावः । अनेन दैवमस्या इत्याद्यनुसंहितम् । चूतेनेति संकल्पितेनात्मसदृशेनेति विपरिणामेनानुषज्यते । अस्यां नवमालिकायाम् ।

शकु—एसा दुवे वो हत्थणिक्खेवो । (एषा द्वयोर्वां हस्तनिक्षेपः)

---

वीतशोकः नष्टशोकः । युवां ममाशोच्ये जाते इत्यर्थः । यथा कुमारे "अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिते"ति । अनेनात्मनः कृतार्थता द्योत्यते । एवं त्वमप्यद्य तपोवनविरहदुःखं कथञ्चित् सोढ्वा अनुरूपभर्तृलाभं विचिन्त्य सहर्षा भवेति भावः । नवमालिकोक्तिस्तस्यामप्यात्मनः प्रीतिविशेषप्रदर्शनेन तद्विरहकातरत्वं विशेषतोऽप्यपाकर्तुम् । अत्र अस्यामहं त्वयि चेत्युद्देशक्रमातिलङ्घनं नायिकायाः प्राकरणिकत्वानुसन्धानाय कृतम् । नायिकोद्धर्षणाय नवमलिकायां वात्सल्यातिशयं द्योतयितुं तस्याः पूर्वमुपादानमिति केचित् । अत्र यत्नं विना उत्कण्ठितार्थसिद्धेः कथनात् प्रहर्षणं, द्वयोरनुरूपयोः समागमवर्णनात्समं, चूतनवमालिकयोः नायकव्यवहारसमारोपात्समासोक्तिः, प्रकृतयोर्नायिकानवमालिकयोः संगमनरूपैकधर्मस्य पदभेदेन निर्देशादर्थावृत्तिदीपकं, पूर्ववाक्यार्थस्यान्यपादार्थोपपादकत्वात् काव्यलिङ्गं च । भावध्वनिः पूर्ववत् । अथ गमनाय प्रेरयत इत इत्यादि । अनेन नवमालिकामन्त्रणार्थं तया पूर्वं मार्गपरित्यागः कृत इति द्योत्यते । अत्रायमाश्रमप्रदेशः प्रथमाङ्कप्रस्तुतः, यत्र राज्ञा प्रथमसंबन्धो नायिकाया अभूत् । तस्यानुसन्धानं रसानुरोधाय क्रियते । एवमुत्तरत्र क्षीरवृक्षच्छायाप्रसङ्गेन सप्तपर्णवेदिकानुसन्धानमित्यादि द्रष्टव्यम् ॥

एसेति । एषा वनज्योत्स्ना । हस्तनिक्षेपः हस्ते निक्षेपः भवत्समर्पितेत्यर्थः । सावधानं रक्षणीयेति यावत् । निक्षेपशब्देन कालान्तरे पुनर्ग्रहणाशंसापि सूच्यते । तदानीं सखीजनः स्वीयां

उभे— अअं जणो दाणीं कस्स हत्थे समप्पिदो । (अयं जन इदानीं कस्य हस्ते समर्पितः)

(बाष्पं विसृजतः)

काश्यपः— अनसूये! अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

(सर्वे परिक्रामन्ति)

शकु— ताद एसा उडजपज्जंतचारिणी गब्भमंथरा मिअवहू जदा अणघप्पसवा तदा कंवि पिअणिवेदइत्तअं विसज्ज । (तात एषा उटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूः यदानघप्रसवा तदा कमपि प्रियनिवेदयितारं विसृज)

---

दुस्सहां तद्विरहोत्कण्ठां भङ्ग्या निवेदयति अअं इत्यादि । आवामेनां पालयावः । आवयोस्त्वद्विरहे का गतिरिति भावः । बाष्पविसर्जनमुत्कण्ठानुभावः । अलं रुदित्वेति । 'अलंखल्वो'रिति क्त्वा । मा रोदीरित्यर्थः । कुत इत्यत्राह नन्विति । विस्रम्भातिभूमित्वाद्भवतीभ्यामेव दुःखापनोदनेन शकुन्तलाया मनसः स्थिरीकरणं कार्यमित्यर्थः । अन्यथा युष्मद्रोदने सा भूयसा रोदिष्यतीति भावः ॥

पुनरपि नायिकायास्तपोवनविरहपारवश्यप्रकारं दर्शयति शकुन्तलेत्यादि । तातेति विस्रम्भातिभूमित्वात्तस्मिन सर्वमपि कथनीयमिति भावः । एषा मद्वियोगकातरतया पुरःस्थिता । उटजपर्यन्तचारिणीति गर्भखेदादस्मद्वियोगासहनाच्चेति भावः । गर्भेण मन्थरा मन्दगमना इत्यनेनालस्यादयो दर्शिताः । अनेन विशेषतस्तस्याः प्रवासासहत्वं प्रसवकाले स्वासान्निध्यसंभावनया स्वस्य विषादश्च द्योत्यते । मृगवधूरिति वधूपदेन यौवनारम्भयो-

काश्यपः— वत्से नेदं विस्मरिष्यामि ॥

शकु— (गतिभङ्गं रूपयित्वा) किं णु खु विडपिविडपंतो विअ णिवसणे मे सज्जइ । (किन्नु खलु विटपिविटपान्त इव निवसने मे सज्जते)

(परावर्तते)

काश्यपः—

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्द्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १३ ॥

---

तनद्वारा प्रसवस्य प्राथम्यं द्योत्यते । अनघप्रसवेति सर्वदा तथैव विचिन्तनात् । यथा रघौ 'कच्चिन्मृगीणामनघा प्रसूति'रिति । प्रियनिवेदयितारं प्रसवाख्यायकम् । नेदं विस्मरिष्यामीति । पित्रोः पुत्रवात्सल्यं हि तदिच्छानुसारित्वम् ॥

गतिभङ्गमिति । मृगसङ्गेन गतिस्खलनमित्यर्थः । तद्धेतुं वितर्कयति किं णु खु इति । विटपान्तः शाखाग्रम् । निवसने वस्त्रे । परावर्तत इति परावर्तनं तद्ज्ञानार्थम् । काश्यपस्तदा तामनुसरन्तं मृगपोतकमवलोक्य सकरुणं निवेदयति यस्येत्यादि । केचित्तु गतिभङ्गमिति । गतिभङ्गो हि तपोवनपारवश्येन मनसः पृष्ठतो गमनाद्गतिमान्द्यार्थं कल्पितः कृतकः । केविटपान्त इवेति इवशब्दोऽपरमार्थे । अथेदं पारवश्यं न केवलं तवैव किं त्वस्य मृगपोतस्यापि साधारणमित्याह यस्येतीत्याहुः । यस्य मृगस्य । त्वया अत्यन्तदयार्द्रया मातृभूतया । व्रणस्य विरोपणं शोषकम् । नन्द्यादित्वात् कर्तरि ल्युः । इङ्गुदीनां तैलमिति । तस्य व्रणरोपणादौ प्राशस्त्यं प्रसिद्धम् ।

**शकु—** वच्छ किं सहवासपरिच्चाइणीं मं अणुसरसि । अइरप्पसूदाए जणणीए विणा वड्ढिद एव्व । दाणिं

---

न्यषिच्यत नितरां सिक्तं निषेकेण व्रणो विरोपित इत्यर्थः । मुखे वक्त्रान्तः । अनेनान्तरत्वाद्व्रणस्यातिप्रयत्नसाध्यत्वं द्योत्यते । व्रणहेतुमाह कुशसूचिविद्ध इति । सूचिशब्देन सूचिवत् सूक्ष्मतीक्ष्णाग्रस्तदङ्कुरो लक्ष्यते । वेधनयोग्यत्वं व्यज्यते । कुश एव सूचिरिति केचित् । मौग्ध्याद्दर्भाग्रं भक्षयितुं प्रवृत्ते सति क्षत इत्यर्थः । अत्रेङ्गुदीतैलेन व्रणविरोपणोक्त्या शकुन्तलायास्तत्तदुचितकर्मपरिज्ञानं क्रियापाटवं दयालुत्वमित्यादि द्योत्यते । श्यामाकेति । श्यामाकः तृणधान्यविशेषो मुन्यन्नरूपः, तस्य मुष्टिः परिमाणविशेषः, मुष्टिपरिमितैः श्यामाकैरित्यर्थः । परिवर्द्धितकः । अनुकम्पायां कः । सादरं पुत्रवत् परिपोषित इत्यतिलालनीयत्वं प्रकाश्यते । अत एवाह पुत्रकृतक इति । कृतकः कृत्रिमः पुत्रः पुत्रकृतकः आहिताग्न्यादित्वात् परनिपातः । यद्वा अपुत्रः पुत्रः कृतः पुत्रकृतः श्रेण्यादयः कृतादिभिरिति समासः । पुनरनुकम्पायामल्पार्थे वा कः । सः तथाविधत्वद्वात्सल्यविषयः । अयं त्वद्विरहवैधुर्येण त्वामनुसरन् । ते पदवीं न जहातीति निषेधमुखेनोक्तिरनुगमननिर्बन्धातिशयं तेन बहुशो गमननिषेधं च द्योतयति । अत्र स्वभावोक्तिः काव्यलिङ्गं च । पादत्रयेण शकुन्तलाया मृगे तथान्त्यपादेन मृगस्य शकुन्तलायां च स्नेहातिशयः प्रदर्शितः । पूर्ववन्मुनेश्चेति भावध्वनिः पूर्ववत् ॥

अथ स्नेहपरवशा परमार्थपुत्रवत्तं मृगपोतमामन्त्रयन्ती सविषादमाह वच्छ इत्यादि । वत्सेति संबुद्धिस्तस्मिन् पुत्रबुद्ध्या शोच्यत्वं द्योतयति । किं किमर्थम् । अन्विच्छसि अनुसरसि ।

वि तुमं मए विरहिदं तादो चिंतइस्सदि । णिवत्तेहि दाव ॥ (वत्स किं सहवासपरित्यागिनीं मामन्विच्छसि । अचिरप्रसूतया जनन्या विना वर्द्धित एव । इदानीमपि त्वां मया विरहितं तातश्चिन्तयिष्यति । निवर्तस्व तावत्) (रुदती प्रस्थिता)

काश्यपः—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विहतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १४ ॥

---

इदानीं तव मया न प्रयोजनमित्यर्थः । अत्र हेतुमाह सहवासपरित्यागिनीमिति । यद्वा अन्विच्छसि स्निह्यसि । त्वदुपरि निःस्नेहां मां कथं स्निह्यसीत्यर्थः । अथ तमनुशोचत्यचिरेत्यादि । अचिरप्रसूतया त्वां प्रसूय पुनरप्यचिरात् प्रसूतया । जनन्या विना । स्तन्यपानादिकं विनेत्यर्थः । यद्वा त्वां प्रसूयाचिरादेव जनन्या मृतेः तया विनेत्यर्थः । वर्द्धितः यथावत् पोषितः । एवकारेण यौवनोदयेऽपि पोषणाभावो व्यवच्छिद्यते । इदानीं मद्वियोगकाले । अपिशब्दः पूर्वमपि तातचिन्तां प्रतिपादयति । चिन्तयिष्यति विशेषतः पालयिष्यति । जननीवियोगे तवाहं शरणमिदानीं मद्वियोगे तव तातो विशेषतः शरणं भविष्यतीत्यर्थः । अतः निवर्तस्व तावत् निवर्तनमेव तव प्राप्तकालं, नातः परमागन्तव्यमिति भावः । रुदतीति । रोदनं मृगपोतानुबन्धादिना । तस्य उत्कण्ठोद्दीपनत्वात् । अहो जन्मभूमिविरहवैक्लव्यं, विशेषतः स्त्रीणाम् ॥

अथ एतद्रोदनं न केवलममङ्गलमेव परं तु गमनविरो-

शार्ङ्ग— भगवन्नोदकान्तात्स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र संदिश्य नः प्रतिगन्तुमर्हसि ।

काश्यपः— तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ॥

(सर्वे परिक्रम्य स्थिताः)

---

धि च । ततो मा रोदीरित्याहोत्पक्ष्मणोरित्यादि । उत्पक्ष्मणोः उद्गतनेत्ररोमयोरिति स्वभावोक्तिः, अनेन बाष्पस्य गलनाभावो व्यज्यते, अयमुपरोधे हेतुः । केचित्तु तात्कालिकमिदं विशेषणमनेन पक्ष्मणोरुच्छूनत्वं तेन रोदनाधिक्यं च द्योत्यत इत्याहुः । उपरुद्धा वृत्तिः दर्शनव्यापारः येनेति हेतुगर्भम् । वृत्तिपदस्य नयनपदसापेक्षत्वेऽपि गमकत्वात्समासः । बाष्पं "बाष्पोऽश्रुणि" इति वैजयन्ती । स्थिरतया धैर्यावलम्बनेन । विहतानुबन्धं निरुद्धविच्छिन्नप्रसरणम् । कुरु मध्ये मध्ये विच्छिन्नं कुर्वित्यर्थः । यद्वा समूलं छिन्धीति । उक्तार्थे हेतुमाहास्मिन्निति । अलक्षितेत्यादि विषमीभवने हेतुः । पदानि पादन्यासाः । खल्विति हेतावनुनये वा । विषमीभवन्ति स्खलन्ति । त्वटा विषमीभवनं दृश्यत इति प्रकाश्यते । अत्र काव्यलिङ्गं परिकरश्च ॥

अथापत्यस्नेहविवशतया तन्मार्गानुसारिणं तातकाश्यपं शार्ङ्गरवः कर्तव्यमनुस्मारयति भगवन्नित्यादि । भगवन् आ उदकान्तादिति छेदः । "ङमो ह्रस्वा"दिति ङमुडागमः । भगवन् ज्ञानादिभिर्नित्ययुक्त । कर्तव्यं स्वयमेव यद्यपि जानासि तथापि स्नेहवैवश्येन विस्मृतिमाशङ्क्य विज्ञापयामीति भावः । आङ्मर्यादायाम् । अन्तशब्दः स्वरूपवाची समीपवाची वा । उदकान्तावधीत्यर्थः । अनुगन्तव्यः पित्रादिभिर्बन्धुभिरिति शेषः । न उदकान्तादिति छेदे तु परमिति शेषः । न अनुगन्तव्यः

काश्यपः— ( आत्मगतम् ) किन्नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिस्सन्देष्टुम् ॥

(चिन्तयति)

---

किन्तु यावदुदकसमीपमेवानुगन्तव्य इत्यर्थः, उदकसमीपान्निवर्तितव्यमिति भावः । यथा अनर्घराघवे "ततश्चोदकान्तनिवर्तितानुयात्रिकबन्धुवर्ग" इति । इति श्रूयत इति । अस्याचारस्य श्रुतिः प्रमाणमिति द्योतयति । तत्तस्मात् । उद्मित्यङ्गुल्या निर्देशः । अत्र सरस्तीरे । अत्रेति सरस्तीरं परिहृत्यास्मिन्नेव प्रदेश इत्यर्थ इति केचित् । प्रतिगन्तुमर्हसि भवानाश्रमं प्रति निवर्तताम् । तदुक्तमनुवदति तेन हीत्यादि । क्षीरप्रधानो वृक्षः क्षीरवृक्षः सप्तपर्णः । अश्वत्थ इति केचित् । वट इत्यन्ये । क्षीरवृक्षग्रहणं तस्य छायाधिक्यान्मङ्गलत्वाच्च । तच्छायाश्रयणकथनं संदेशस्य प्रकारबहुत्वं सूचयति ॥

अथ शापं तद्धेतुकं राज्ञः शकुन्तलाविस्मरणं चाजानन् काश्यपः सन्देशप्रकारं स्वयं विमृशति किन्नित्यादि । किन्नु खल्विति विमर्शे । तत्रभवत इति वर्णाश्रमगुरुत्वेन विद्याविनयादिभिश्च पूज्यत्वं प्रतिपादयति । दुष्यन्तस्येति पुत्रवत्तस्मिन् स्नेहप्रकर्षं प्रकाशयति । युक्तरूपमतिशयेन युक्तम् । अस्माभिरित्यात्मनोऽपि महर्षिमुख्यत्वादिना गौरवं द्योतयति । चिन्तयतीति । यस्य राज्ञो राजकार्यपारतन्त्र्यमन्तःपुरसमागमप्रभवं प्रेममान्द्यमस्मासु लाघवनिमित्तमौदासीन्यं कारणान्तरेण विस्मरणं चेत्येतान्यनागमनकारणानि संभावनीयानि तत्र मुनिजनयोग्यं सामैव भेददण्डगर्भं प्रयोक्तुमुचितमिति चिन्ताप्रकारः ॥

शकु— (जनान्तिकम) हळा पेक्ख णळिनीपत्तमत्तंतरिआ वि सहअरं अपेक्खन्ती आदुरा चक्कवाई आरसदि। दुक्खरं खु अहं करेमित्ति तक्केमि। (हळा पश्य नलिनीपत्रमात्रान्तरितापि सहचरमपश्यन्ती आतुरा चक्रवाकी आरसति। दुष्करं खल्वहं करोमीति तर्कयामि)

अन— सहि एव्वम्मा मन्तअ। एसावि पिएण विणा गमेइ रमणीन्दिग्घां गुरुअरं वि दुखं आसाणुब्बन्धो साहावेइ। (सख्येवं मा मन्त्रय। एषापि प्रियेण विना गमयति रजनीं दीर्घां गुरुतरमपि दुःखमाशानुबन्धः साहयति)

---

अथ मध्ये रसस्याविच्छेदाय प्रसङ्गः क्रियते शकुन्तलेति। अथ तपोवनात्तद्विरहदुःखेन कथं कथमपि निवर्तमाना सरस्तीरस्थिता नायिका तत्सरसि सहचरविरहखिन्नां कामपि चक्रवाकीमवलोक्य स्वकीयं भर्तृविरहदुःखं गुरुतरमाकलय्य सख्या सह परामृशति हळेति। नलिनीपत्रमात्रेण न तु देशेन अन्तारिता व्यवहिता। सहचरमर्थाच्चक्रवाकम्। आरसति आक्रन्दति। अत इत्यर्थात्। अयमर्थः। पद्मपत्रमात्रान्तरितापि चक्रवाकी प्रियमदृष्ट्वा रोदिति देशान्तरिताहं पुनः प्रियवियोगदुःखं सहे इति यत्तत ततो दुष्करं करोमीति। तर्कयामीति। अथ सखी चक्रवाकयवस्थासंदर्शनकन्दलितं तस्या दुःखमुपपत्त्या लघूकरोति सहीति। सखीत्यनुनयगर्भा संबुद्धिः। एवं मा मन्त्रयेति सुकरमेव त्वया क्रियत इत्यर्थः। चक्रवाक्येवात्र निदर्शनमित्याह एसा इत्यादि। एषापि क्षणमात्रमपि विरहमसहमानेत्यपिशब्दार्थः। प्रियेण न केवलं भर्त्रा। रजनीमिति रज्यन्ति रागिणोऽस्यामित्यन्वर्थमुद्दीपकत्वेन तद्यापनस्याशक्यत्वं द्योतयति।

काश्यपः— शार्ङ्गरव इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ।

शार्ङ्ग— आज्ञापयतु भवान् ।

काश्यपः—

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥ १५ ॥

---

दीर्घां त्रिंशन्नाडिकापरिमिताम् । रजनीं गमयति न केवलं पत्रान्तरिता क्षणकालमेवेति भावः । कथं गमयतीत्यत्राह गुरुतरमिति । आशा कदापि संगमो भवेदिति । तस्या अनुबन्धः सततानुवृत्तिः । साहयति सोढं करोति । यथा मेघे "आशाबन्धः कुसुमसदृशप्राण"मित्यादि । शुकसन्देशेऽपि "आशापाशः किल चलदृशामाश्रयः प्रोषिताना"मिति । अनेन भर्तृप्राप्तिपर्यन्तं त्वयाप्येवं वियोगदुःखं सोढव्यमिति प्रकाश्यते । इदं च मारीचाश्रमनिवासे विरहवेदनायाः सह्यत्वं प्रति बिन्दुत्वेनोक्तमिति रसानुसन्धानद्वारेण भविष्यन्नर्थोऽप्यासूच्यते ॥

अथ मुनिरुक्तप्रकारेण विचिन्त्य राज्ञः शकुन्तलायामियमुपेक्षा सर्वथा वस्तुवृत्तविचाराभावादेवेति मन्वानस्तन्निवृत्त्यर्थं स्वीकारयोग्यताहेतुविचारपुरस्सरं तस्याः स्वीकारं संदेष्टुमारभते शार्ङ्गरवेति । संबुद्धिः सावधानश्रवणार्था । इतिशब्देन वक्ष्यमाणस्य निस्तुषत्वं द्योतयति । त्वयेति तस्य व्यवहारादावन्यशिष्येभ्यो वैशिष्ट्यं द्योतयति । मद्वचनादिति गौरवप्रतिपत्त्यर्थम् । कुलपतिस्त्वामेवमुक्तवानिति रूपेणेत्यर्थः । अनेन गान्धर्वस्यानुमतत्वं सूच्यत इति केचित् । स इति प्रकृतार्थकं प्रासि-

द्धार्थकं वा । राजेति । अनेन राजकार्यपारतन्त्र्यादीनां संभाव्यता सूचिता । अथ चैश्वर्यमदान्धतया कर्तव्यमूढत्वं व्यञ्जयता तद्विषयो गम्भीराक्षेपोऽपि द्योत्यते । पुरस्कृत्याग्रतः कृत्वा । वक्तव्य इति । एवं रघावपि "वाच्यस्त्वया मद्वचनात्स राजे"ति । अत्र राजेति ऐश्वर्यमदादिदोषान् द्योतयदुपालम्भरोषगर्भमभिधानमित्यरुणाचलनाथाः । आज्ञापयत्वित्यनेन तत्र श्रवणावहितत्वं द्योत्यते । इतीत्युक्तं विवृणोति । अस्मानित्यादि । अस्मानस्याः पितृत्वेन संबन्धिनं माम् । बहुवचनेनात्मनो गौरवं द्योत्यते । साधु विचिन्त्य विचिन्तनस्य साधुत्वं वस्तुवृत्तपरामर्शित्वम् । गौरवं विवृणोति संयमधनानिति । संयमस्तपः तस्य धनत्वारोपेणार्जनरक्षणादौ तात्पर्यं तेन तत्प्राचुर्यं च द्योत्यते । तेन सर्वाभीष्टसाधनसामर्थ्यं च । उच्चैः आभिजात्यविभूत्यादिभिरुन्नतमुदितोदितं च । आत्मनः कुलमित्यनेन तस्य कुलाभिमानित्वं सूच्यते । त्वयि सर्वदा सर्वप्रकारेण मधुरतरे । अस्यास्त्वदेकशरणायास्तपस्विन्याः । कथमपि प्रमुखे त्वत्प्रार्थितस्य गान्धर्वस्य धर्मलोपशङ्कास्फुरणात् कृच्छ्रेण अबान्धवकृतां बान्धवैः कन्याप्रदानाधिकृतैरस्माभिर्विनाकृताम् । स्नेहप्रवृत्तिं गान्धर्वम् । यद्वा कथमपि केनापि प्रकारेण । अनिर्देश्येन केनापि कारणेनेत्यर्थः । यथा उत्तररामचरिते "व्यतिषजति पदार्थानान्तरः कोऽपि हेतु"रिति । बान्धवैरस्माभिर्बन्धुभिः बान्धवेन बन्धुभावेन वा न कृतां अकृत्रिमामित्यर्थः । स्नेहस्य प्रवृत्तिमाधिक्यं रागातिशयमित्यर्थः । "प्रवृत्तिः कथिता वृत्तौ प्रवाहोदन्तयोरपी"ति विश्वः । चकारौ समुच्चये । तां लोकोत्तरत्वेन त्वयैवानुभूताम् । सामान्या इतरदारसाधारणी या प्रतिपत्तिर्बहुमतिः । तत्पूर्वकं तत्पुरस्कारेण । इयमस्मद्दुहिता तव धर्मदाराः । दारेषु दृश्या पूर्वपुर-

न्धीष्वन्यतमत्वेनावेक्षणीया । सा राजकन्यका इयं मुनिकन्यकेति भेदबुद्धिं विना परिपालनीयेत्यर्थः । त्वया सर्वमपि जानता भवता । कर्तव्यं स्वयमेव जानासि तथापि मदुपदेशोऽयं दुहितृवात्सल्यादिति भावः । त्वं वधूबन्धूनामस्माकं महत्त्वमात्मनः कुलस्यौन्नत्यमस्याः स्नेहप्रवृत्तेरकृत्रिमत्वं च साधु विचार्य प्रतिपत्तिपूर्वमिमामपि दारसामान्यपदे स्थापयित्वा परिपालयेत्यर्थः । तथा सति सर्वं सम्मानितं भविष्यतीति भावः । अत्रेदं बोध्यम । लोके स्वयमननुरक्तस्यापि वरस्य वध्वां प्रतिपत्तौ त्रीणि कारणानि । वध्वा ज्ञातिकुलमहत्त्वं वरस्याभिजात्यादिकं स्वविषये तस्याः स्नेहातिशयश्च । यतो वध्वा ज्ञातिकुलमहत्वे वरस्यानुरागाभावेऽपि तस्यां प्रतिपत्तिर्भवति । तथा वरस्याभिजात्ये तत्परित्यागे लोकापवादभीरुत्वादननुरक्तोऽपि सहधर्मचरणं करोति तथात्मनोऽनभिलाषेऽपि तस्याः स्नेहातिशये तत्संभावनयैव तस्या अवश्यमभीष्टं संपादयति । प्रकृते च त्रयाणां कारणानां सद्भावो वाक्यत्रयेण दर्शित इति । ननु विशेषः कुतो नाभ्यर्थ्यत इत्यत्राह भाग्यायत्तमिति । अतः परं उक्ताद् व्यतिरिक्तं विशेषप्रतिपत्त्या दर्शनम् । भाग्यायत्तं वध्वा भाग्याधीनम् । अतः । तद्विशेषप्रतिपत्त्या दर्शनम् । वधूबन्धुभिर्न खलु वाच्यं, नैव वक्तुं योग्यं वात्सल्यादीप्सितमपि प्रार्थनामात्रेणालभ्यत्वान्नैव प्रार्थनीयमित्यर्थः । अतो नोच्यत इति भावः । अत्र वक्तुमिष्टस्य विशेषप्रतिपत्तिपूर्वकावेक्षणस्योक्तेर्निषेधेन तस्यावश्यवक्तव्यत्वलक्षणो विशेषो व्यज्यते । ततश्च "निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सये"ति लक्षित आक्षेप इत्याहुः । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा काव्यलिङ्गं च । वात्सल्यमत्यादयो भावाः । विश्वासमाधिश्च । इति सामरूपोऽर्थः । अथ भेदरूपः सूक्ष्योऽर्थः । अस्मानिति सर्वेषां

शार्ङ्ग— गृहीतः सन्देशः ।

काश्यपः— वत्से त्वमिदानीमनुशासनीया । पश्य । वनौकसोऽपि सन्तो लोकज्ञा वयम् ।

---

बहुमतत्वं द्योतयति । अत्र हेतुः संयमधनानिति । अनेन प्रतिकूलेषु निग्रहं कर्तुं शक्ताः स्म इति द्योत्यते । उच्चैरित्यादिना धर्मदारोपेक्षणं त्वत्कुलस्य महानपकर्षहेतुः इति द्योतयति । स्वयि अदृष्टपूर्वत्वादपरिचिते तां स्नेहप्रवृत्तिमित्यनेन प्रेममान्द्यस्य हेतुरसंभवीति द्योत्यते । किं चानुरक्तायाः परित्यागो महापातकहेतुः स्यादिति च । एतत्सर्वं साधु शोभनं यथा भवति तथा विचिन्त्य विशेषेणालोच्य । अत्रानुवादो विधिगर्भः विचिन्तयेत्यर्थः । एवं न चिन्तयसि चेत्तदा सर्वमशोभनं भवेदिति भावः । तस्मादस्य दारसामान्यप्रतिपत्त्या परिपालनं कार्यमिति । अथ दण्डरूपः । अस्मान् शापास्त्रान् । अत्र हेतुः संयमधनानिति । अस्माकं प्रतिकूलेषु शाप एवास्त्रं तव शक्तित्रयमकिञ्चित्करमिति भावः । उच्चैरित्यादि । इदमस्मदीयमस्त्रं न केवलं त्वामेव दाण्डिकयस्येव । तव तथाविधं कुलमपि नाशयेदिति भावः । त्वयि विटप्रक्रियावलम्बिनि । अस्या मुग्धायाः । कथमपि तवानृतवादैः प्रलोभनात् कृच्छ्रेण । अबान्धवकृतां त्वत्प्रेरणया बान्धवानस्मान् वञ्चयित्वा कृताम् । तां दिव्यचक्षुषा मया ज्ञाताम् । अनेन वाक्येन कन्यादूषकत्वरूपापराध उद्घाटितः । एतत् सर्वं सम्यङ्न जानासि साधु विचिन्तयेति भावः । सामान्येत्यादि पूर्ववदित्यन्यत्सहृदयैरूह्यम् ॥

गृहीत इति । गृहीतः अवधृतः । सन्देशः सन्दिष्टार्थः । एवमेतमर्थं राजानं बोधयाम इति भावः । अथैवं

शार्ङ्ग— न खलु धीमतामविषयो नाम ।

काश्यपः— वत्से त्वमिदानीं पतिकुलं प्राप्य ।

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
पत्युर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ १६ ॥

कथं वा गौतमी मन्यते ॥

---

सन्दिश्य शकुन्तलाया अपि पतिकुले वर्तनप्रकारमुपदेष्टुमारभते वत्स इत्यादि । वत्स इति मौग्ध्यं द्योतयति । इदानीमिति इतः पूर्वमन्यत्र गमनाभावात्तस्या अलोकज्ञतां द्योतयति । अनुशासनीया अनुशासनं हिते प्रेरणं त्वां लोकवृत्ते शिक्षयामीत्यर्थः । अथानागरिकस्याप्यात्मनः शिक्षायामधिकारमाह पश्येत्यादि । वनौकसोऽपि अपरिचितलोका अपि । लोकज्ञाः "शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणा"दित्यादिवल्लोकपदं लोकवृत्तपरं, गृहिणीगृहस्थादिलोकवृत्तज्ञा इत्यर्थः । तदुक्तं सामान्यमुखेन सबहुमानमनुवदति न खल्विति । धीमतां प्राशस्त्ये मतुप् । प्रशस्तबुद्धिशालिनामपरिज्ञातं किमपि नेत्यर्थः । यथा "सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते" इति । अनुशास्ति वत्स इति । कुलं गृहम् । शुश्रूषस्वेति । सर्वत्र विधौ लोट् । पादसंवाहनादिरूपां परिचर्यां स्वयमतन्द्रिता सादरं कुर्वित्यर्थः । गुरून् पत्युर्गुरुभूतान् मातापित्रादीन् । यथोक्तम् "भर्तृशुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया । तद्बन्धूनां च कल्याणि प्रजानां चानुपोषण"मिति । गुरुशुश्रूषणस्य लोकद्वयश्रेयोमूलतया प्राधान्यात्तत्प्रतिपादनाय प्रथममुक्तिः । एवमुत्तरत्रापि क्रमो बो-

ष्यः । प्रियसखी स्नेहबहुमानविश्वासपात्रभूता तद्वृत्तिं तत्तुल्यां वृत्तिं मात्सर्यलेशमन्तरा प्रियसखीव वाङ्मनःकायैः प्रवृत्तिं विधेहीत्यर्थः । सपत्नीनामियमस्मत्प्रियसखीति यथा मनसि स्फुरेत्तथा तदनुवृत्तिं विधेहीति यावत् । मनसि मात्सर्येऽपि बहिःप्रवृत्त्या प्रियसखीत्वमेव प्रकाशनीयमिति वृत्तिपदेन द्योत्यत इति केचित् । सपत्न्यः पत्या परिणीताः परिणेष्यमाणाश्च तज्जने तत्समूहे । सपत्नीत्यन्वर्थं प्रायेण मात्सर्यादिविरोधो भवतीति प्रसिद्धिं सूचयति । जनपदं तासां बहुत्वात् प्रियसखीवृत्तिविधानस्य दुष्करत्वं च । पत्युरिति । "दुश्शीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा । पतिः स्त्रीभिर्न हातव्यः" "पतिरेव बुधैः स्त्रीणां देवतेति निगद्यत" इत्याद्यर्थं सूचयति । विप्रकृता विमानिता । अपीति विरोधमभिदधत् प्रतीपगमने हेतुं दर्शयति । पत्यावन्यस्त्रीसंगमापराधादिना तवावमाननां कुर्वत्यपीत्यर्थः । प्रतीपं प्रातिकूल्यम् । मा स्म गमः किन्त्वनुकूलैव भवेत्यर्थः । यथोक्तम् "आनुकूलिकतयैव हि यूनामाक्षिपन्ति हृदयानि रमण्य" इति । भूयिष्ठमतिशयेन । दक्षिणा छन्दानुवर्तिनी अभीष्टसंपादनादिभिरनुकूलेत्यर्थः । यथा परिजनास्त्वय्यनुरागिणो भवन्ति तथा भूयिष्ठं दाक्षिण्यं कुर्वित्यर्थः । भाग्येषु तत्कार्येषु महादेवीपदप्राप्त्यादिषु सत्सु । अनुत्सेकिनीति भवेत्यनुषज्यते । यदुक्तं "कं श्रीर्न दर्पयती"ति । अत्र शुश्रूषस्वेत्यादि वात्स्यायनोक्तानामन्येषामप्युपलक्षणम् । सर्वैरेतैर्लोकानुरञ्जनमेकमेव कर्तव्यमित्यर्थः समुपदिश्यते । यथाह वाहटः "जनस्याशयमालक्ष्य यो यथा परितुष्यति । तं तथैवानुवर्तेत पराराधनपण्डितः" इति । एवं पतिकुले वर्तनप्रकारमुपदिश्य तस्यावश्यकर्तव्यतां बोधयितुं करणेऽभ्युदयमकरणे प्रत्यवायं चाह यान्तीति । एवं वर्तमाना इति शेषः । शुश्रूषादिकं कुर्वाणा इत्यर्थः ।

गौत— एत्तिओ एव्व वहूजणस्स उपदेसो । (एतावानेव वधूजनस्योपदेशः) जादे एदं सव्वं अवधारेहि । (पुत्र्ये-तत्सर्वमवधारय)

काश्यपः— वत्से एहि परिष्वजस्व मां सखीजनं च ॥

शकु— ताद इदो एव्व पिअंवदामिस्साओ सहीओ णिवत्तिस्संति । (तातेत एव प्रियंवदामिश्रे सख्यौ निवर्त्तिष्येते)

---

गृहिणीपदः गृहिणीति व्यपदेशं गृहिण्याः पदं स्थानं वा । युवतय इति भोगलक्षणोर्थोऽप्युक्तैर्हेतुभिरेव संपद्यत इति द्योतयति । यथोक्तं "जनानुरागप्रभवा हि संपद" इति । वामा विरुद्धवर्तिन्यः । युवतय इत्यनुषज्यते । कुलस्य पत्युः पित्रोश्च वंशस्य । आधयः आधिकारिण्यः । एवं वर्तमाना त्वं महाराजमहिषीपदे प्रतिष्ठामवाप्स्यसि नो चेत् कुलं खिलीकरिष्यसीति भावः । अतः शुश्रूषादिं कुर्विति संबन्धः । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा काव्यलिङ्गम । आधय इत्यत्र हेतुः रूपकं वा पूर्वार्द्धे कारकदीपकं च । भावध्वनिः पूर्ववत । अथावार्थे स्त्रीणां हि प्रायेण संवाद इति गौतमीमाह कथं वेति । एवं वा न वेत्यर्थः ॥

अनुमन्यते एत्तिओ इति । एतावान् उक्तरूपः । वधूजनस्येति कर्मणि षष्ठी । जाद इति । अवधारयेति । उपदेशरूपत्वादस्मिन्नर्थे सर्वदा अवधानादविस्मरणं कर्तव्यमित्यर्थः । परिष्वजस्वेति गमनाभ्यनुज्ञापूर्वरङ्गः ॥

परिष्वजस्व सखीजनं चेति नियोगात् पृच्छति तादेति । इत एव अग्रात् प्रदेशादेव निवर्तिष्येते काका प्रश्नः । तथेत्या

काश्यपः— ननु वत्से इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।

शकु— (पितरमाश्लिष्य) कहन्दाणीं तादस्स अङ्कादो परिब्भट्टा मळअतडुंमूलिआ विअ चन्दणळदा देसन्तरे जीविदं धारइस्सं ॥ (कथमिदानीं तातस्याङ्कतः परिभ्रष्टा मलयतटोन्मूलितेव चन्दनलता देशान्तरे जीवितं धारयिष्यामि)

काश्यपः— वत्से किमेवं कातरासि ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां वत्से न त्वं शुचं गणयिष्यसि ॥ १७ ॥

यदिच्छामि ते तदस्तु ॥

---

ह नन्वित्यादि । यथा त्वमित्यपिशब्दार्थः । प्रदेये विवाहं कारयितव्ये । अथ सख्योरननुगमनेन खेदं परिहरति त्वयेति । अथ पितृवियोगेन खिन्ना तस्यासह्यत्वमाह कहं इति । अङ्कशब्दो लालनद्योतकः समीपादिति भावः । उन्मूलनं परिभ्रंशप्रतियोगि । उपमया जीवितधारणस्यासंभावो व्यज्यते ॥

आश्वासयति वत्स इति । किमेवं कातरासि विक्लबा मा भूरित्यर्थः । कुत इत्यत्र वियोगखेदः क्रमेणापयास्यतीत्याहाभिजनवत इति । अभिजनवतः कुलीनस्य । प्राशस्त्ये मतुप् । एतद् गुणान्तरोपलक्षणम् । अभिजनवतः बन्धुमत इति केचित् । भर्तुरिति निखिलजगद्भरणसामर्थ्यमपि प्रतिपादयति । श्लाघ्ये प्रधाने गृहिणीपदे महादेवीपद इत्यर्थः । यद्वा अभिजनवतो भर्तुरिति श्लाघ्यत्वे हेतुः । श्लाघ्ये प्रशंसायोग्ये । गृहणीपदे

शकु— (सख्यावुपेत्य) हळा दुवे वि मं समं एव्व परिस्स-
जथ । (हळा द्वे अपि मां सममेव परिष्वजतम् )

उभे— (तथा कृत्वा) सहि जइ सो राआ पच्चभिण्णाणम-
न्थरो भवे ततो से इमं अप्पणामहेअङ्किदं अंगुळीअं

---

महादेवीपद इत्यर्थः । श्लाघ्यः इत्यनेन स्पृहणीयत्वं द्योत्यते । स्थिता लब्धप्रतिष्ठा । अनेन कृतकृत्यताभिमानो व्यज्यते । विभवैः तत्तदुचितद्रव्यसमृद्ध्या गुरुभिर्महद्भिः मुख्यपक्षैरित्यर्थः । अनेन कृत्यानां दण्डरूपत्वेऽपि प्रीतिसद्भावो द्योत्यते । कृत्यैर्नित्यैनैमित्तिकैश्च सह क्रियमाणैः कर्मभिः । प्रतिक्षणं पुंखानुपुंखत्वात् कर्मणाम् । आकुला व्यग्रा । अथ प्रकारान्तरेणापि हर्षो भविष्यतीत्याह तनयेति । अचिरादिति । इदानीमन्तर्वत्नीत्वादिति भावः । प्रसूयेति हेतुगर्भम् । पावनामिति साधारणम् । उपमया तनयस्य तेजस्वित्वं लोकभरणसामर्थ्यं सर्वदा तदुद्योगश्च द्योत्यते । प्राच्युपमया तस्या लोकवन्द्यत्वादिकं च । गणयिष्यसि ज्ञास्यसि । महादेवीपदप्राप्त्या अनन्यानिर्वाह्यतत्तत्कार्यव्यग्रतया पुत्रोत्पत्त्या च मद्वियोगदुःखं न ज्ञास्यसीत्यर्थः । उपमा समुच्चयः काव्यलिङ्गं च । पूर्ववद्भावध्वनिः । एवमेष्यच्छ्रेयःप्रलोभनेन वियोगखेदं विरलीकृत्य गमनमनुजानाति यदिति । ते यदिति संबन्धः त्वत्संबन्धि यत् । पुनर्दर्शनमिति यावत् । यद्वा मदभिमतं सर्वं तव फलत्वित्यर्थः ॥

हळेति । समं युगपदिति परिष्वङ्गस्योभयपार्श्वनिर्वर्तनीयत्वादुक्तम् । एतेन स्नेहसाम्यं द्योत्यते । सख्यौ शापमाशङ्क्य तन्मोक्षोपायमादिशतः सहीति । प्रत्यभिज्ञानमन्थरः त्वद्दर्शने

दंसेहि । (सखि यदि स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततोऽस्येममात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय)

**शकु—** हळा अमुणा सन्देहेण वो आकम्पिदह्मि । (हळा अमुना सन्देहेन वामाकम्पितास्मि)

**उभे—** मा भयाहि सिणेहो पावसङ्की ॥ (मा भैषीः स्नेहः पापशङ्की)

**शार्ङ्ग—** युगान्तरमधिरूढः सविता । त्वरतां भवती ।

**शकु—** (आश्रमाभिमुखी भूत्वा) ताद कदा णु खु भूयो तपोवणं पेक्खिस्सम् । (तात कदा नु खलु भूयस्तपोवनं द्रक्ष्यामि)

---

त्वत्प्रत्यभिज्ञायां मन्दः । मन्थरम्मन्दसुन्दरामिति वैजयन्ती । सखीभ्यामनेन वाक्येन गूढः शापरूपोऽर्थः फलरूपेण बोधितः । अङ्गुलीये दृष्टे प्रत्यभिज्ञा भवेदित्युभयसाधारणम् । अमुणेति । आकम्पितास्मीति भयं मे जातमित्यर्थः । समाश्वासयतो मेति । स्नेहः पापशङ्कीति आवां स्नेहादपायमाशङ्क्यैवमुक्तवत्याविव्यर्थः । अनेन शापस्य निगूहनं कृतं तच्च वक्ष्यमाणप्रकरणोपयोगि ॥

शार्ङ्गरवस्तदा कालातिक्रमेण प्रस्थानाय प्रेरयति । युगान्तरमिति युगपरिमाणमन्तरमवकाशम् । "युगं हस्तचतुष्केऽपी"ति विश्वः । तदधिरूढः उदयाद्रेर्युगप्रमाणमुन्नतमण्डल इत्यर्थः । प्रस्थानकालोऽतिवर्तत इति भावः । अथ नायिका तपोवनस्नेहपरवशा पृच्छति ताद इत्यादि । कदा पुनरत्र प्रत्यागमनमित्य-

काश्यपः—

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्षन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्द्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ १८ ॥

---

र्थः । वार्द्धके तवात्र वासो भविष्यतीत्याह भूत्वेति । चिरायेति दीर्घायुष्यं प्रतिपादयति । चत्वारोऽन्ता अवधयो यस्याः सा चतुस्समुद्रपर्यन्तेत्यर्थः । तथाविधाया मह्याः सपत्नीति परिग्रहबहुत्वेऽपीत्यादिवदुक्तिः प्रधानदेवीत्यर्थः । दौष्षन्तिं दुष्षन्तस्यापत्यम् । दुष्षन्तेनाहितं तेज इत्यनुसंदधाति । अप्रतिरथं प्रतियोगिशून्यम् । अनेन राज्यभरणसामर्थ्यादिकं द्योत्यते । तनयमिति तनोति कुलमित्यन्वर्थम् । निवेश्य यौवराज्येऽभिषिच्य । यद्वा विवाहं कारयित्वा । "निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तित" इति विश्वः । यथा महाभारते "निवेशाय्यर्थखिलां भूमिं कन्याभैक्ष्यं चराम्यह"मिति । रघौ च "तां निवेश्य चतुरोऽपि तत्र स" इति । तदर्पितेति । तस्मिन् पुत्रे । कुटुम्बः पोष्यवर्गः । राज्ञां कुटुम्बं राज्यमेव । यथा रघौ "तदुपहितकुटुम्बः शान्तिमार्गोन्मुखोऽभू"दिति । भर्त्रा सार्द्धमिति भर्तुरप्राधान्येनोक्तिर्नायिकायाः प्रकृतत्वात् । शान्ते मनसः शमं कुर्वाण इति पुनरेतदाश्रमवासे हेतुः । शान्ते वार्द्धके वयसीति केचित् । पदं स्थानम् । पुनरिति पूर्वांस्थितिं स्मारयति । अत्र भूत्वा चिरायेति भोग्यानां चिरं भोगात् कृतार्थतया त्यागस्य सौकर्यं द्योतयति । अत्र काव्यलिङ्गम् । पूर्ववद्भावध्वनिः ॥

गौत— जादे परिहीयदे गमणबेळा। णिव्वत्तेहि पिदरं । अहव चिरेण पुणो एसा एव्वं मन्तइस्सदि । णिव्वत्तेदु भवं । (पुत्रि परिहीयते गमनवेला । निवर्तय पितरम् । अथवा चिरेण पुनरेषैवं मन्त्रयिष्यति । निवर्ततां भवान्)

काश्यपः— वत्से उपरुध्यते मे तपोऽनुष्ठानम् ।

शकु— (भूयः पितरमाश्लिष्य) तपोणुट्ठाणपीडिअं तादस्स सरीरं ता ण जुत्तं मम किदे अदिमत्तं उक्कण्ठिदुं ॥ (तपोऽनुष्ठानपीडितं तातस्य शरीरं तन्न युक्तं मम कृतेऽतिमात्रमुत्कण्ठितुम् )

काश्यपः— ( सनिश्वासम् )

शममेष्यति मे शोकः कथन्नु वत्से त्वया रचितपूर्वम् ।
उटजद्वारि विरूढं नीवारबलिं विलोकयतः ॥ १९ ॥

---

पुनःपुनः सल्लापेन गमनसमयातिक्रममाशङ्क्याह जाद इत्यादि । अथवेति । एषा न निवर्तयेदित्यर्थः । कुत इत्यत्राह चिरेणेत्यादि । कर्तव्यमनुस्मारयति निवर्ततामिति । वत्स इत्यादि । अनेन प्रसङ्गेन तपोऽनुष्ठानस्य कालातिपातो भवतीत्यर्थः । अतो गच्छामीति भावः । तपोनुष्ठानमित्याकर्ण्य सविषादमाह तपोणुट्ठाणेति । तपोऽनुष्ठानेन नित्येन सोमतीर्थकृतेन वा पीडितत् । उत्कण्ठितुं न युक्तमिति पीडोपरि पीडान्तरप्रसङ्गादुत्कण्ठा न युक्तेति भावः ।

सनिश्वासमिति । निश्वासः शोकानुभावः । शममिति । कथन्नु नैवेत्यर्थः । अत्र हेतुस्त्वयेत्यादि । वत्स इति संबुद्धिः शोकहेतुभूतं वात्सल्यातिशयं पूर्ववत्सूचयति । रचितपूर्वं पूर्वं रचितं विप्रकीर्णमित्यर्थः । अत एव उटजद्वारि विरूढं तोय-

गच्छ । शिवास्ते पन्थानः ॥

(निष्क्रान्ता शकुन्तला सहायिनश्च)

(सख्यौ शकुन्तलां विलोक्य)

हद्धि हद्धि अन्तरिदा सउन्दळा वणराईए । (हा धिक् हा धिक् अन्तरिता शकुन्तला वनराज्या)

काश्यपः— गता वां सखी । निगृह्य शोकं मामनुगच्छतम् ।

---

संपर्केणाङ्कुरितम् । उटजद्वारीति विलोकनहेतुः । नीवारबलिं नीवाररूपभूतोपहारम् । पर्णशालाद्वारे भूतबलिरूपेण त्वया विप्रकीर्णानां नीवाराणां जलसंपर्केण जातानङ्कुरानित्यर्थः । नीवारा ह्येकत्र रूढमूलाश्चिरेणापि न नश्यन्ति । विलोकयतः गतागतादौ मुहुः पश्यतः । तच्च त्वदनुस्मारकतया नित्यं शोकोद्दीपकमिति भावः । अत्र परिकरः । काव्यलिङ्गं च । अथ गमनमनुजानन्नाशिषं प्रयुङ्क्ते गच्छेति । निष्क्रान्ता इति सहायिनश्चेत्यत्र निष्क्रान्ताः इति विपरिणामः । काश्यपः सख्यौ च उत्कण्ठातिशयादपसरन्तीमपि शकुन्तलान्नयनाभ्यामापिबन्त एवातिष्ठन् । अत एव सख्यौ शकुन्तलां विलोक्येत्यनुपदमुक्तिः ॥

अथादर्शनं गतायां तस्यां झटिति प्रवृद्धदुस्सहविरहवेदनापीडितः सखीजनः सनिर्वेदं रोदिति । हद्धीत्यादि अन्तरिता व्यवहिता । वनराज्या वनपङ्क्त्या । चक्षुर्गोचरमतिक्रान्तेत्यर्थः । काश्यपोऽपि स्नेहपरवशतया सखीनिर्विशेषावस्थः सविषादं तदनुवदति गतेत्यादि । भूतप्रत्ययेन यास्यतीत्यादिपद्यसूचितमुत्कण्ठावगाहनमपि जातमिति सूच्यते । वां सखीत्युक्त्या तद्गोपनोद्यमः सखीविषये कारुण्यं च । अथ कृच्छ्रात् स्तम्भितचित्तवृत्तिरनन्तरकर्तव्यमाह । निगृह्येत्यादि । सख्यौ तपोवनप्रवेशस्या-

सख्यौ— ताद सउन्दळाविरहिदं सुण्णं विअ तवोवणं पविसामो । (तात शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशामः)

काश्यपः— स्नेहप्रवृत्तिरेवंदर्शिनी ॥

(परिक्रम्य सविमर्शम्) हन्त भोः शकुन्तलां प्रतिविसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः ।

अर्थो हि कन्या परकीय एव<br>
तामद्य संप्रेष्य परिग्रहीतुः ।<br>
जातो ममायं विशदः प्रकामं<br>
प्रत्यर्पितन्यास इवान्तरात्मा ॥ २० ॥

(निष्क्रान्ताः सर्वे)

इति चतुर्थोऽङ्कः ॥



---

शक्यतां दर्शयन्त्यावाहतुः तादेति । शून्यमिव निःशोभत्वात् इवेति प्रतीतौ । एतेन तपोवनप्रवेशस्याशक्यत्वं दर्शितम् । प्रविशाम इति तदुक्ताङ्गीकारः । शून्यत्वप्रतीतावुपपत्तिं दर्शयन् तदुक्तमनुवदति । स्नेहेति । स्नेहस्य प्रवृत्तिः आधिक्यं स्नेहातिशयादेवं प्रतीतिरित्यर्थः । अनेन मुनेर्मतिरूपभावप्रवेशारम्भः सूचितः ॥

परिक्रमणमुटजाङ्गणं प्रति । एवमस्मिन्नङ्के तत्तद्गतस्य वात्सल्यस्य तन्मूलकस्य वियोगदुःखस्य च प्रदर्शनेन करुणं परिपोष्य महर्षेः काश्यपस्य मतिस्थिरीकरणाय तदीयस्यातिप्रसक्तस्य शोकस्य वीरसंबन्धिना अध्यवसायभूयिष्ठेन मतिहर्षादिव्यभिचारिणा तिरोधानमुपवर्ण्याङ्कमुपसंहर्तुं महाकविरुपक्रमते । सविमर्शमि-

त्यादि । अथ शकुन्तलाया लाभात् प्रभृति भरणपोषणविनयाधानादिना व्याकुलत्वमनुभवन्मुनिर्दैवादेव लब्धस्यानुरूपस्य वरस्य समीपं प्रति प्रेषणेन कृतार्थः सन् ससन्तोषं स्वयमाह । हन्तेत्यादि । हन्तेति हर्षे । भो इति दैवं प्रति संबुद्धिः । हर्षहेतुमाह शकुन्तलामित्यादि । शकुन्तलेति । शकुन्तेभ्यस्तल्लाभादिप्रमेयभागं द्योतयति । प्रतिविसृज्य प्रत्यर्प्य प्रत्यर्पणादित्यर्थः । इदानीमित्यनेनेयन्तं कालं शकुन्तलाया रक्षणादिभिरस्वास्थ्यमेवेति द्योत्यते । स्वास्थ्यं लब्धमित्यनेन कृतार्थता द्योत्यते । अर्थो हीत्यादि । अर्थः धनम् । हीति निश्चये । कन्या स्त्रीयापि । परकीयः परसंबन्धी । अत इत्यर्थात् । तां कन्याम् । संप्रेष्य । स्थितस्येति शेषः । परिग्रहीतुः वरस्य । विशदः दुःखादिमालिन्यनिवृत्त्या निर्मलः । प्रकाममत्यर्थम् । विशदप्रकाश इति पाठे निर्मलप्रसाद इत्यर्थः । ननु तादृशप्रेमविषयस्य प्रत्यर्पणे कथं मनःप्रसादोदय इति शङ्कां दृष्टान्तेन परिहरति प्रत्यर्पितेत्यादि । प्रत्यर्पितः स्थापकाय प्रतिदत्तः न्यासः विस्रम्भेण रक्षणाय स्थापितः पश्वादि द्रव्यं येन सः । इव तदन्तरात्मेवेत्यर्थः । अन्तरात्मा मनः । न्यासीकृते हि पश्वादिद्रव्ये आत्मनः स्नेहोदयेऽपि प्रत्यर्पणे मनसः किमपि वैशद्यं भवति । कन्या परकीय एव अर्थः हि अद्य तां परिग्रहीतुः संप्रेष्य स्थितस्य ममायमन्तरात्मा प्रत्यर्पितन्यास इव प्रकामं विशदो जात इत्यन्वयः । अत्र काव्यलिङ्गमुपमा च । स्वान्तरात्मनि प्रत्यर्पितन्यासत्वमुत्प्रेक्ष्यत इति केचित् । उपमया प्रत्यर्पणानन्तरं तद्विषयकश्चिन्तादेरभावोऽपि सूच्यत इति मुनेर्दुहितृवात्सल्यनिवृत्तिरपि गम्यत इत्यप्यन्ये । मतिहर्षावत्र प्राधान्येन व्यज्येते । "तामद्य संप्रेष्य परिग्रहीतु"रित्युत्तराङ्कस्य बिन्दुः । अत्र प्रकरणे प्रणिधानवतोऽपि कण्वस्य शापादिवृत्तान्तस्याज्ञानं वसिष्ठादे रामादिविच्छिन्ना-

भिषेकसंपादनादिवदविचारितत्वेनैव कविना विवक्षितम् । न ह्ययं मुनिः युक्तो योगी । किन्तु युञ्जान एव । यदि चायं शापवृत्तान्तं जानीयात्तदा तथाविधदुहितृवात्सल्यशालित्वात् कथं तत्प्रतिक्रियामपि न निरूपयेत् । न चायं शापो यक्षादिशापवत् कालेन नियमितः अङ्गुलीयदर्शनावधिकत्वात्तन्मोक्षस्येत्यन्यदपि सहृदयैराकलनीयमिति सर्वं शिवम् ॥

इति सारार्थदीपिकायां शाकुन्तलव्याख्यायां

चतुर्थोऽङ्कः ॥



# पञ्चमोऽङ्कः ।

(ततः प्रविशति आसनस्थो राजा विदूषकश्च)

विदू— (कर्णं दत्वा) भो वअस्स संगीदसालन्तरे अवहाणं दे-

---

अथ पूर्वस्मिन्नङ्के नायिकायाः पतिकुलप्रस्थानवर्णनात्तत्प्राप्ति-शेषभूतामितिवृत्तं वर्णयिष्यन् परिग्रहीतृपदेन सूचितस्य नायकस्या-वसरौचित्येन तन्नर्मसचिवस्य च प्रवेशमाह तत इति । अत्र नायकस्य गुणेषु स्थैर्यं प्राधान्येन प्रतिपादयिष्यते । तपस्विनां शकुन्तलापरिग्रहनिर्बन्धेऽप्यपरिग्रहवर्णनात् । अत एव वृत्तिः सा-त्वती । रसो धर्मवीरः । नायकयोरन्योन्यदर्शनसल्लापादौ सत्य-पि न संभोगशृङ्गारप्रसङ्गः । नायकस्य शापव्यवहितस्मृतित्वात् नायिकायाश्च तदवस्थाविलोकने रोषदैन्यशोकादिप्रसङ्गात् । रतेर-न्योन्यनिबन्धनस्वभावत्वादेकत्रानुदये परत्राप्यनुदय एव प्रायेण । परं तु रतेरुद्बोधदर्शनेनास्फुटः शापविप्रलम्भः । स च मध्येवेत्यादिना रोष-स्य शोकस्य च वर्णनेनेर्ष्यासम्मिश्रः करुणतया परिणंस्यते । परं परस्ताद्वक्ष्यते ॥

अथ यज्ञसमाप्तौ तपोवनात् प्रस्थितो गान्धर्वेण परिणीतां शकुन्तलां प्रत्येकैकमित्यादि प्रतिज्ञाय स्वपुरं प्राप्तवान् पुनः शाप-बलेन विस्मृततद्वृत्तान्तः पूर्ववद्राजकार्यादीनि कुर्वन् कदाचिद्वि-श्रमावसरे विविक्ते स्वैरमासीनो राजा सहोपविष्टेन प्रियवयस्येन संगीदशालायां किमपि गानमाकर्णयता तदाकर्णनाय नियुज्यते भो इति । नृत्यं गीतं च वाद्यं च त्रयं संगीतमुच्यते । तदर्था

हि कळविसुद्धाए गईए सरओओ सुणीअदि । जाणे तत्तहोदी हंसपदिआ वण्णपरिअअं करेदित्ति । (भो वयस्य संगीतशालान्तरे अवधानं देहि । कळविशुद्धाया गीत्याः स्वरयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति)

राजा— तूष्णीं भव यावदाकर्णयामि ॥

(आकाशे गीयते)

अहिणवमहुळोळुवो भवं
तह परिचुंबिअ चूदमञ्जरीं ।
कमळवसदिमत्तणिव्वुदो
महुअर विह्मरिदो सि णं कहं ॥

---

शाला संगीतशाला तस्या अन्तरे मध्ये । अवधानं देहि मनो निधेहीत्यर्थः । किमर्थमित्यत्राह कळेति । कळा मधुरेति स्त्रीनादविवक्षया । विशुद्धा "शङ्कितं भीतमुत्कृष्टमव्यक्तमनुनासिकं" इत्यादिदोषराहित्यं लक्षणानतिक्रमश्च विशुद्धिः । स्वराणां षड्जादीनां योगो यथालक्षणं संबन्धोऽभ्यासो वा । हंसपदिका तन्नामिका काचित् प्रधाननर्तकी । राज्ञो देवीष्वेकेति केचित् । वर्णपरिचयं "वर्णो गीतिक्रम" इति वैजयन्ती । "या देवविषया गीतिर्देववाणिस्तु सा भवेत् । मनुष्यविषया सैव वर्णनाम्ना प्रकाशत" इति भरतः । अवदधामीत्याह तूष्णीमिति तावदिति शेषः ॥

अथ राज्ञा सकृदुपभुक्ता देवीभयेन पुनरुपेक्षिता हंसपदिका समानावस्थमधुकरोपालम्भापदेशेन राजानमुपालभते । अहिणवेति । भवानित्यन्तं पृथग्वाक्यम् । त्वमपरिचिते मकरन्दे

(अभिनवमधुलोलुपो भवां-
स्तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो
मधुकर विस्मृतोऽस्येनां कथम्) ॥ १ ॥

राजा — अहो रागपरिवाहिनी गीतिः ।

---

सतृष्णोऽसीत्यर्थः । अतः कथं विस्मृतोऽसीति संबन्धः । भवानित्युपहासगर्भं प्रशंसनम् । तथेत्यनुभूतार्थकं प्रलोभनायानुभूतं परिचुम्बनप्रकारमनुस्मारयति तस्य वाग्विषयातीतमतिशयं च द्योतयति । परिचुम्ब्य परितो रसमास्वाद्य । चूतमञ्जरीमभिनवरसामित्यर्थः । कमलवसतिः पद्मिनी तन्मात्रेण तदास्वादमात्रेणेत्यर्थः । मात्रपदेन चूतमञ्जरीनिवृत्तिरुक्ता । निर्वृतः सुखाभिमानी । मधुकरेत्यन्वर्थम् । विस्मृत इति व्यवसितादित्वात् कर्तरि क्तः । एनां चूतमञ्जरीम् । कथं विस्मृतोऽसीत्यनेन विस्मरणे न किञ्चित्कारणं तदनुचितमेतदित्युपालम्भः प्रकाश्यते । तेनातः परमप्येनां संभावयेति च । केचित्तु अभिनवेत्यादि तथा परिचुम्ब्येत्यत्र हेतुः । अनेन चापल्यं सूच्यते । चूतमञ्जरीमित्यनेन मकरन्दमाधुर्यातिशयेन पुष्पान्तरेभ्यो व्यतिरेको व्यज्यते । तेन विस्मरणस्यानवकाशश्च । कमलेति कमले वसतिर्वासस्तन्मात्रेणेत्यनेन वासस्य कृच्छ्रत्वं सूच्यते । शेषं पूर्ववदित्याहुः । अत्र वसुमतीविषयः प्रस्तुतो राजवृत्तान्तः सारूप्येण सूच्यत इत्यप्रस्तुतप्रशंसा । तया संसूच्यं राज्ञः शकुन्तलाविस्मरणं वस्तु व्यज्यत इति पताकास्थानकमिदम् ॥

गानं प्रशंसत्यहो इति । रागस्य परिवाहो निष्यन्दः तद्वती

विदू— किं दाव गीईए अवगओ अःक्खरत्थो भवदा । (किं तावद्गीत्या अवगतोऽक्षरार्थो भवता)

राजा— (सस्मितम्) सकृत्कृतप्रणयोऽयं जनः । तदस्या वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि । सखे मद्वचनादुच्यतां हंसपदिका निपुणमुपालब्धाः स्म इति ॥

विदू— जं भवं आणवेदि । (यद्भवानाज्ञापयति) (उत्थाय) गहिदस्स ताए परकेरएहिं अत्थेहिं सिहंडचले अच्छराए

---

अतिहृद्येत्यर्थः । पृच्छति किमिति । तावत् साकल्येन । अक्षराणां स्वरावष्टम्भभूतानामर्थः गूढार्थ इत्यर्थः । बाह्यार्थस्तु मयाप्यवगम्यत इति भावः । सस्मितमिति । रहस्यार्थमन्यनिर्बन्धेन कथयामीति स्मितम् । तदर्थमुद्घाटयति सकृदिति । सकृदेकवारम् । कृतः प्रणयः रतिकेळिपरिचयो यस्मिन् । अयं जनः इयम् । कृतः प्रणयो येन अस्यामित्यर्थात् अयं जनोऽहमिति केचित् । अस्या हंसपादिकायाः । कर्तरि षष्ठी । अन्तरेण उद्दिश्य । मदुपालम्भमिति अक्षरार्थमिति विपरिणामेनानुषङ्गः । अवगत इति कर्तरि क्तः । अयं ग्रन्थोऽभिनवेति पद्यस्य व्याख्याप्रायः । अथ दाक्षिण्यभङ्गभीरुर्नायको हंसपदिकाप्रीणनाय कर्तव्यमाह सखे इति । वक्ष्यमाणस्य त्वयैव कर्तव्यतया तत्र वैमुख्यं मा भूदिति संबुद्ध्या सूच्यते । निपुणमन्यापदेशेन कृतत्वात् । इत्युच्यतामिति संबन्धः । अनेनाहं न विस्मरामि भवतीमवसरे संभावयिष्यामीति प्रतिपाद्यते ॥

जं भवमिति । भवदाज्ञापने मम साध्यासाध्यत्वविवेक उचितानुचितत्वचिन्ता च नास्ति सर्वमनुतिष्ठामीति भावः । उत्थाये-

वीदराअस्स विअ णत्थि दाणीं मे मोक्खो । (गृहीतस्य तया परकेरकैरर्थैः शिखण्डाञ्चले अप्सरसा वीतरागस्येव नास्तीदानीं मे मोक्षः)

राजा— गच्छ नागरिकवृत्त्या संज्ञापयैनाम् ।

विदू— का गई ॥ (का गतिः)

(निष्क्रान्तः)

---

ति गमनारम्भोक्तिः । गमने किमपि वैषम्यं पुनर्निरूपयन्नाह । गहिदस्स इति । तया हंसपदिकया । परकेरकैः परकीयैः । तस्येदमित्यर्थे केरप्रत्यय इत्याहुः । अर्थैः प्रयोजनैः । फलात्मकहेतौ तृतीया । भवद्दर्शनार्थं देवकार्यार्थं च । शिखण्डाञ्चले शिखाग्रे । गृहीतस्येति संबन्धः स्वायत्तीकृतस्येति भावः । वीतरागस्य तपस्विनः । इदानीं तत्सन्निधिगमनकाले । मोक्षः मोचनमपवर्गश्च । यथा देवकार्यार्थमप्सरसा कयाचिद् गृहीतस्य तपस्विनः पुनरपवर्गो न तथा भवद्दर्शनाय तया गृहीतस्य मम ततो मोचनं न भवेदित्यर्थः । ततस्त्वदागन एव मोचनं भवेत्त्वं च नागच्छेरिति मम महासङ्कटं समापतेदिति भावः । तस्या ग्रहणसामर्थ्यमुपमया सूच्यते । केचित्तु परकेरकाभ्यां हस्ताभ्यामिति पठित्वा हंसपदिकाहस्तयोः परकीयत्वोक्त्या शिखण्डकग्रहणे निर्दयत्वं द्योत्यत इत्याहुः । परे तु अर्थैः प्रयोजनैः तत्साधनैरित्यर्थः तत्परिचारिकाजनैरिति यावत् । अप्सरोभिरवीतरागस्येति पाठः । अवीतरागस्य कामिनः । अत्रोपमया परिचारिकाणां किञ्चिदात्मसंभोगसंबन्धः सूच्यते । तेनात्मनो रहस्यगोपनासामर्थ्यं च । अयमर्थः त्वदुक्तं कथयितुं हंसपदिकासमीपोपसर्पणे तत्परिचारिकाः किमर्थमागतोऽसीति निर्बन्धे-

न पृच्छेयुः । त्वद्रहस्यमवक्तव्यमपि रूढमूलात्तद्विस्रम्भाद्वक्तुमशक्तः सङ्कटे पतितः स्यां ततो मोचनं न भवेदिति । वीतरागस्येति पाठे तासां ग्रहणसामर्थ्यमात्मनो जातिप्रसिद्धं चापल्यं चोपमया द्योत्यत इति गृहीतस्येत्यनन्तरं तयेत्यपि पठित्वा व्याचक्षते । तत्रोपायमुपदिशति गच्छेति । नागरिकपदेन विदग्धो विवक्षितः तद्वृत्त्या वैदग्ध्येनेत्यर्थः । यथा सा त्वां न गृह्णीयात्तथा वैदग्ध्यमवलम्ब्य मदुक्तं निवेदयेत्यर्थः । केचित्तु । संज्ञापय सूचय यथा सा निपुणमन्यापदेशेन मामुपालभत तथा त्वमपि नैसर्गिकीं ग्राम्यवृत्तिं त्यक्त्वा मत्साचिव्योचितां नागरिकवृत्तिमवलम्ब्य केनाप्यपदेशेन भङ्ग्या तामुपालभस्वेत्यर्थः । तथा सति सा त्वां न परिभवेदिति भाव इत्याहुः । परे तु नागरिकवृत्त्येति परिचारिकाणां गोपनायोक्तम् । यथा ता रहस्यार्थं न जानीयुस्तथा वैदग्ध्यमवलम्ब्य तां निवेदयेत्यर्थ इति वदन्ति । का गई इति । गतिराश्रयः । अन्यथेति शेषः । त्वदादेशाकरणे को ममावलम्बः स्यादतो गमिष्यामीत्यर्थः । यद्वा गतिरुपायः अनवगतनागरिकवृत्तेः प्रतिभादरिद्रस्य ममास्मिन् कर्मणि क उपायः न कोऽपि प्रतिभाति तथापि गच्छामीत्यर्थः । निष्क्रान्त इति । वक्ष्यमाणप्रकरणेऽनौचित्यादनुपयोगात् प्रत्युत तन्मुखेन नायिकावृत्तोद्बोधनप्रसक्त्या प्रतिकूलत्वाच्च गानकल्पनेन तन्निष्क्रान्तिः कल्पिता । गानकल्पनस्य मुख्यफलं च तथाविधगानश्रवणेनापि राज्ञः शकुन्तलास्मरणं नासीदिति साक्षान्नायकसंबन्धितया शापफलप्रदर्शनं पूर्वं तु सखीमुखेनैवोक्तं रसाविच्छेदार्थं रतेरुद्बोधकप्रदर्शनं च । एतदनुपदं किन्न्वित्यादिना वक्ष्यते । किं चात्र गृहीतस्येत्यादिना बद्धपुरुषस्याप्सरःप्रसङ्गेन सानुमत्याश्च वक्ष्यमाणः प्रवेशोऽपि सूच्यते ॥

राजा— (आत्मगतम्) किन्नु खलु गीतमेवंविधार्थमाकर्ण्य इष्ट-जनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा ।

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत् सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ २ ॥

(पर्याकुलस्तिष्ठति)

---

अथ शापतिरोहितत्वाज्जन्मान्तरानुभूतस्यैव चेतसि वासनारूपेण वर्तमानस्यानतिदूरमनुभूतस्य शकुन्तलानुरागस्य गानश्रवणेन किञ्चिदुद्बोधात् पर्युत्सुकत्वमनुभवंस्तद्धेतुं विमृशति किन्न्विति । किन्न्विति हेतुविमर्शे । खल्विति जिज्ञासायाम् । एवंविधार्थम् । एवंविधः इष्टजनविरहलक्षणः । अथवेति अलमत्र हेतुविमर्शेनेत्यर्थः । अयमत्र हेतुरूह्यत इत्याह रम्याणीति । रम्याणि चन्द्रोद्यानप्रमदादीनि रम्यवस्तूनि । वीक्ष्येति प्रसङ्गादुक्तम् । अनेन भाविशकुन्तलादर्शनेऽपि पर्युत्सुकत्वं कविः सूचयति । मधुरान्मनोहरान् । माधुर्यं क्वचिच्छब्दमात्रनिष्ठं क्वचिच्छब्दार्थोभयनिष्ठं गीतमेवंविधार्थमित्युक्तेरत्रोभयनिष्ठम् । वीक्ष्य निशम्येति हेतुगर्भम् । निशम्य चेति संबन्धः । चकारो विकल्पे पर्यवस्यति । पर्युत्सुकीभवति च्व्यर्थोऽविवक्षितः । सुखितः प्रियजनसान्निध्येन निर्वृतः । सुखसहभावेन औत्सुक्यस्यासंभावनामपिशब्दो द्योतयति । विरोधेनौत्सुक्यस्य बलीयस्त्वं च । यथा मेघे "मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः" इति । जन्तुः सर्वोऽपि प्राणी जन्तुरित्यस्य उत्तरार्धेऽप्यनुषङ्गः तत् पर्युत्सुकीभवनम् । "नूनं तर्केऽर्थनिश्चये" इत्यमरः । अबोधपूर्वं

(ततः प्रविशति कञ्चुकीयः)

कञ्चु— अहो तु खल्वीदृशीमवस्थां प्रपन्नोऽस्मि ।

---

बोधः सम्यग्ज्ञानं व्यक्तिविशेषविषयकज्ञानमित्यर्थः । तत्पूर्वकत्र । यद्वा नञीषदर्थे ईषद्बोधः अबोधः तत्पूर्वम् । उभयथाप्यस्फुटत्वेनेत्यर्थः । बोधस्य स्फुटत्वास्फुटत्वादयो बहवो भेदाः सन्ति । भावस्थिराणि मनसि वासनारूपेण लीनानि । जननान्तरसौहृदानि जन्मान्तरानुभूतान् प्रणयादिसंबन्धविशेषान् । अत्र पर्युत्सुकीभवति यत्तत्स्मरतीति पूर्वोत्तरवाक्यार्थयोः कार्यकारणसंबन्धेनैक्यारोप इति हेत्वलङ्कारो रूपकं वा । जन्तुः सुखितोऽपि रम्यवस्तुवीक्षणान्मधुरशब्दश्रवणाद्वा पर्युत्सुकीभवतीति यत्तस्य हेतुरस्फुटतया जन्मान्तरसौहृदस्मरणमिति जानामीत्यर्थः । सुखितस्यापि मे गानाकर्णनाज्जातमिदमौत्सुक्यं जन्मान्तरसौहृदस्मरणान्नूनमित्यर्थे पर्यवसानात्सामान्यनिबन्धनाप्रस्तुतप्रशंसा च । तत्तस्मात् पर्युत्सुकीभवनादित्यर्थः । स्मरति नूनं स्मरणन्निश्चिनोमीत्यर्थ इत्यनुमानमिति केचित् । एवं रघावपि । "मनो हि जन्मान्तरसंगतिज्ञ"मिति । यथा वा कादम्बर्याम् । जननान्तरजातसौहार्दाया महाश्वेताया इति । अत्र वितर्को मतिर्वा भावः । एतेन शापफलप्रदर्शनेन वक्ष्यमाणप्रकरणोपपत्तिः । पर्याकुलास्तिष्ठतीति अनेन नायकस्याथवेत्युक्तपक्षेऽप्यविश्रान्तिः प्रकाश्यते । महतां हि यथातत्त्वसंवेदनेनैव दृढप्रत्ययो भवति ॥

अथ सूचितनायिकाप्रवेशमवसरे वर्णयितुं तद्द्वारतया कञ्चुकिप्रवेशमाह तत इति । कञ्चुकमात्मन इच्छति कञ्चुकीयः । यथाह वामनः "कञ्चुकीय इति क्यची"ति । कञ्चुकीत्यपि पाठः । अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनार्था ॥ ३ ॥

कामं धर्मकार्यमनतिपात्यं देवस्य । तथापीदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे वक्तुम् ॥

---

कञ्चुकीत्यभिधीयत इति तल्लक्षणम् । अथ शकुन्तलया सह हस्तिनापुरं प्राप्य राजमन्दिरं प्रविश्य तद्दर्शनमिच्छद्भिः काश्यपशिष्यैरात्मनिवेदनाय नियुक्तः कञ्चुकी स्वामिसमीपमुपसर्पन् जराभिभूतमात्मानमनुशोचत्यहो इति । अहो नु खल्विति खेदातिशये । प्रपन्नः प्राप्तः अत्र निर्वेदो व्यज्यते । ईदृशीमितीत्युक्तामवस्थां विवृणोत्याचार इति । इतीति हेतौ । साधारणपुरुषोत्सारणाद्यर्थमन्तःपुराधिकृतानां वेत्रग्रहणस्याचारत्वादित्यर्थः । अवहितेनाप्रमत्तेन सता गृहीता । अनवधाने विस्मृतिः स्यादिति भावः । अनेन वेत्रग्रहणस्यानुपयोगित्वं सूच्यते । तेन तत्रत्यजनानां विनीतत्वमात्मनो यौवनबलं च । बहुतिथे बहुसंख्यापूरके । बहुपूगगणेत्यादिना तिथुक् । सैव एवकारः पौनर्वचनिकः तेन वक्ष्यमाणस्य स्वप्नेऽप्यचिन्तितपूर्वत्वेनाद्भुतं द्योतयति । प्रस्थानं गमनं तत्र विक्लवगतेः विवशपदविन्यासस्य । अवलम्बनमवष्टम्भ एवार्थः फलं यस्याः । अत्र गतिवैवश्यरूपकार्यद्वारा कारणं वार्द्धकं वर्ण्यत इत्यप्रस्तुतप्रशंसा । कार्यस्यापि प्रस्तुतत्वे तु प्रस्तुताङ्कुरः । एवमात्मदशां परामृशन् तथात्वेऽपि

कर्तव्यं प्रकृतमनुसंदधाति । काममिति । अथवा कञ्चुकीयस्य दृष्टकर्मत्वलक्षणं प्रामाणिकत्वं दर्शयितुं तद्धेतुभूतं परिणतवयस्त्वं तन्मुखेन भङ्ग्या प्रतिपादयत्यहो तु खल्विति । अहो तु खल्वित्यद्भुते तत्राचिन्तितस्य वेत्रग्रहणेन देहरक्षणस्याधिगमनात् । तदेवाहेद्दर्शामिति । आचार इति । अवरोधगृहेष्विति बहुवचनमात्मन एव सर्वत्राधिकारं तेन राज्ञो विस्रम्भाद्यतिशयं च सूचयति । शेषं पूर्ववत् । अयमर्थः । पूर्वमाचाररक्षार्थमेव वेत्रग्रहणं यदवधानेनाविस्मृतमेवानुष्ठितं तदेवाद्य देहरक्षां करोतीति । अनेन "धर्मो रक्षति रक्षित" इत्यर्थान्तरन्यासो ध्वन्यते । तेन कदाचिदपि स्वाचारो न परित्याज्य इति च । अत्र मतिर्भावः । अनेन धर्माधर्मविचारसामर्थ्यं दर्शितम् । तदेवाह काममिति । "कामं त्वनुमतोऽव्यय"मिति केशवः । धर्मकार्यं मुनिजनसन्दर्शनादि । अतिपातोऽत्ययः कालक्षेपस्तस्यार्हमतिपात्यं तदन्यदनतिपात्यं झटिति निवेद्यमिति यावत् । मयेति शेषः । देवस्यानतिपात्यं देवेनानतिक्रमणीयमिति केचित् । तर्हि झटिति निवेद्यतामित्यत आह । तथापीति । इदानीमेवेति श्रमापनोदनस्यावकाशो न लब्ध इति द्योतयति । धर्मासनात् यदासनस्थः प्रजानां धर्मान् बहुविधान् विविनक्ति तद्धर्मासनमिति केचित् । व्यवहारासनमेव तदित्यन्ये । तस्मात् न त्वास्थानमण्डपादित्यनेन श्रमावकाश उक्तः । उत्थिताय उत्थाय विश्रान्त्यै विविक्ते वर्तमानायेत्यर्थः । पुनरिति पूर्वमप्यात्मनिवेदनेनैवास्य धर्मासनस्थितिरासीदिति सूचयति । उपरोधो विश्रमविघ्नः । अस्मै देवाय । नोत्सहे वक्तुमिति । विश्रमविच्छेदप्रसङ्गादिति भावः । वर्तमाननिर्देशेनावसरान्तरे वक्तव्यमिति सूच्यते । अनेन पूर्वाङ्कोपक्षिप्तवृत्तान्तस्य संबन्धो दर्शितः । अत्राचार इति पद्ये पूर्वार्द्धेन राज्ञः शकुन्तलास्वीकारः काल इत्यादिना मध्ये तद्विस्मरणं

अथवा अविश्रमो लोकतन्त्राधिकारः । कुतः—

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥

यावत् कण्वनियोगमनुतिष्ठामि ॥

---

सैवेत्यादिना सपुत्रायास्तस्याः पुनः परिग्रहश्चेत्यर्थोऽप्यावेद्यते कविनेत्यप्याहुः ॥

पुनर्निरूप्याहाथवेति । वक्तुमुत्सहे इत्यर्थः कुत इत्यत आहाविश्रम इति । अविश्रमः न विद्यते विश्रमो यस्मिन् । लोकस्य वर्णाश्रमलक्षणस्य तन्त्रं योगक्षेमं तस्याधिकारोऽनुष्ठानं यद्वा लोकतन्त्रो लोकाधीनः परतन्त्र इत्यादिवत् । तादृशोऽधिकारः प्रजापरिपालनाधिकार इति यावत् । सोऽविश्रम इति । अतोऽत्र खेदो न कर्तव्य इति भावः । उक्तं साधयति । भानुरिति । आदौ तृतीये च वाक्ये भवतीति शेषः । आदौ प्रयातीत्यपकृष्यत इति केचित् । सकृदेकवारमेव युक्ता योजितास्तुरङ्गा येन । तुरङ्गसकृद्योजनोक्त्या पर्यटनापरिसमाप्तिर्गम्यते । सूर्यः सर्वदा पर्यटतीत्यर्थः । गन्धवहो वायुः । ऊर्ध्वादिलोकत्रयस्थाः सूर्यादयः सदा स्वपरिश्रममनवेक्ष्य परार्थं प्रवर्तन्त इत्यर्थः । षष्ठांशवृत्तेः राज्ञाम् । षड्भागो हि राज्ञामाजीवनम् । स्वधर्मानुष्ठानं विना षष्ठांशेनोपजीवने प्रत्यवायः स्यादित्यनेन द्योत्यते । अपीति भान्वादीन् समुच्चिनोति । धर्मः परिपालनलक्षणः । एषः सकृदित्यादिशब्दोपात्तः सार्वकालिक इति यावत् । अत्र सार्वकालिकप्रवृत्तिलक्षणैकधर्मस्य वाक्यचतु-

(परिक्रम्यावलोक्य)

एष देवः ।

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते शान्तमना विविक्तम् ।
यूथानि सञ्चार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ५ ॥

---

ष्टये भिन्नपदैरुक्तत्वान्मालाप्रतिवस्तूपमा । अविश्रम इत्यादेरस्य राज्ञ इत्यर्थात्तद्विशेषार्थस्य सदृष्टान्तं षष्ठांशेत्यादिना सामान्येन समर्थनादर्थान्तरन्यासश्च । यतो भान्वादिवद्राज्ञामपि धर्मः सार्वकालिकः ततोऽस्य लोकतन्त्राधिकारोऽविश्रम इति । अतोऽद्य वक्तुमुत्सह इति संबन्धः । अथवा अविश्रम इत्यादि सामान्यपरमेव । लोकतन्त्राधिकृतानां सर्वेषां तदधिकारो विश्रमरहित इत्यर्थः । उक्तं विशेषेण साधयति भानुरिति । प्रकृतमाह षष्ठेति । धर्मः स्वभावः विहितव्यापारो वा । एषः लोकतन्त्राधिकारः । भान्वादिवद्राज्ञामपि धर्मो लोकतन्त्राधिकार इत्यर्थः । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा । अतोऽद्य वक्तुमुत्सह इति संबन्धः । राज्ञः सूर्याद्युपमया तेजस्वित्वं लोकोपजीव्यत्वं स्थैर्यं च द्योत्यते । यावदिति । कण्वनियोगं तच्छिष्यनियोगमित्यर्थः । कण्व इति गौरवं द्योतयति । नियोगमिति पाठेऽप्येवमर्थः स्वाधिकारमिति वा ॥

अथ राजानमवलोक्य तात्कालिकीं तदवस्थां प्रस्तौति प्रजा इति । प्रजाः जनान् । स्वाः प्रजा इव स्वपुत्रानिव । "प्रजा स्यात् सन्ततौ जन" इत्यमरः । तन्त्रयित्वा स्वं स्वं कृत्यं कारयित्वा । तन्त्रणेन किञ्चिद्दुःखमनुभूयेत्यर्थः । अनेन

(उपगम्य)

जयतु देवः। एते खलु हिमवतो गिरेरुपत्यकारण्यवासिनः काश्यपसन्देशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः। श्रुत्वा देवः प्रमाणम्।

---

कृतकृत्यस्य कामेऽधिकार इति विश्रमस्य प्राप्तावसरत्वं द्योत्यते। अत एव शान्तमनाः प्रजातन्त्रणस्य विधानादव्यग्रचित्त इत्यर्थः। विविक्तं निषेवते। विजने विश्रमयोग्यस्थाने स्वैरासिकां कुरुत इत्यर्थः। नीत्युपसर्गेण तत्रादरो गम्यते। केचित्तु तन्त्रयित्वा तन्त्रशब्दो विधेयार्थः। विनयाधानादिना स्वविधेयाः कृत्वेत्यर्थः। तथापि शान्तमनाः अनहंकृतचित्तः। प्रजाः विधेयीकृत्य तिष्ठतोऽप्यस्य नोत्सेकादिप्रसङ्ग इति सात्विकत्वमनेन द्योत्यते। अथ च शान्तमना इत्यनेन इन्द्रियाणामुपरमात् स्तिमितत्वं गम्यते। गानाकर्णनेनोत्कण्ठितत्वं तत्र हेतुरित्याहुः। उपमामाह यूथानीति। "सजातीयैः कुलं यूथ"मित्यमरः। संचार्य आहारविहारादिषु व्यापार्येति प्रयोजकत्वोक्तिः यूथस्वामित्वाभिमानेन। यथा रघौ। "यूथं तदग्रसरगर्वितकृष्णसार"मिति। अत एव रविप्रतप्तः। इदं शीतस्थाननिषेवणे हेतुः प्रतापे च। दिवेति। मध्याह्न इति तदर्थः। अत्र पुत्रोपमया प्रजासु राज्ञ आस्थातिशयस्तासामधीनता च द्योत्यते। द्विपेन्द्रोपमया तवस्थामवस्थायामप्यधृष्यत्वं दर्शनीयत्वादिकं च। अत्र तदवस्थराजदर्शनेन कञ्चुकिनो हर्षो गम्यत इति तदुपस्कृता राजविषयिका रतिः प्राधान्येन व्यज्यते॥

जयत्विति हिमवत इति तत्संबन्धेन तपस्विद्धेरतिशयं द्योतयति। उपत्यकेति। "उपत्यकाद्रेरासन्ना भूमिरि"त्यमरः।

राजा— (सादरम्) किं काश्यपसन्देशहारिणः ।

कञ्चु— अथ किम् ।

राजा— तेन हि मद्वचनादुच्यतां उपाध्यायः सोमरातः । अमूनाश्रमवासिनः श्रौतेन विधिना पुरस्कृत्य स्वयमेव प्रवेशयितुमर्हतीति । अहमप्येतांस्तपस्विजनदर्शनोचिते देशे प्रतिपालयामि ।

कञ्चु— यदाज्ञापयति देवः ।

(निष्क्रान्तः)

राजा— (उत्थाय) वेत्रवति अग्निशरणमार्गमादेशय ।

प्रतीहारी— इदो इदो देवो । (इत इतो देवः)

राजा— (परिक्रामति अधिकारखेदं निरूप्य) सर्वः प्राथितम-

---

काश्यपेत्युक्तिर्बहुमानगर्भा । सस्त्रीकाः स्त्रीभ्यां सहिताः । श्रुत्वेत्यादि जयत्वित्यादिवदाचारः । प्रमाणं प्रमाता । कर्तरि ल्युट् । कर्तव्यनिर्णेतेत्यर्थः । सादरमिति तद्वचनाङ्गीकारपरं तपस्विषु भक्तिबहुमानादिकं द्योतयति । किमित्यादरद्योतकः प्रश्नः । काश्यपेत्युक्तिः पूर्ववत् । कर्तव्यमाह तेन हीति । सोमरातस्तन्नामकः । स्वयमेवेति । इदं वक्ष्यमाणा स्वपूर्वगमनोक्तिश्च तपस्विनां गौरवं द्योतयति । अर्हतीति भवानिति शेषः । तपस्विजनदर्शनोचिते देशे अग्निशरणे । यथोक्तम् । "अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम् । पुरोहिताचार्यसखः प्रत्युद्गम्याभिवाद्य चे"ति ।

वेत्रवतीति । वेत्रवतीति नाम । अग्निशरणमग्न्यगारम् । "शरणं गृहरक्षित्रोरि"त्यमरः । अथ पूर्वोक्तकञ्चुकिवचनदर्शित-

धिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखो-
त्तरैव । कुतः ।

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेवम् ।
नातिश्रमापनयनाय न च श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ६ ॥

---

मधिकारखेदं राजमुखेन दर्शयत्यधिकारखेदं निरूप्येति । अधि-
कारखेदं परिपालनक्लेशम् । विश्रमावसरे मुनिजनागमनेन दूय-
मान आह । सर्व इति । अधिगम्य लब्ध्वा । प्रार्थितार्थ-
लाभेनेत्यर्थः । संपद्यते भवति । सर्वेषामिष्टसिद्धौ सुखसंपत्ति-
रेवेत्यर्थः । राज्ञां तु तुशब्दो विशेषे । चरितार्थता लब्धार्थता
प्रार्थितार्थलाभ इत्यर्थः । दुःखोत्तरा दुःखप्रधाना । "उपर्युदी-
च्यश्रेष्ठेष्वप्युत्तरः स्यात्" इत्यमरः । न्यूनसुखा अधिकदुःखा चेति
भावः । यद्वा चरितार्थता अर्थितलाभजनितं सुखम् । दुःखो-
त्तरां दुःखसहितम् । उक्तमुपपादयति औत्सुक्यमात्रमिति । राज्ञा-
मित्यनुषङ्गः । औत्सुक्यमुत्कण्ठा प्रतिष्ठाविषया तदधीनतत्तद्भोग-
विषया वा तदेव तन्मात्रं न तु क्लेशसामान्यम् । अवसाय-
यति समापयति । प्रतिष्ठा राज्यप्रतिष्ठा । राज्यलाभस्तत्तदभि-
लषितभोगाननायासेन प्रसाध्य तत्तदौत्सुक्यं केवलं निवर्तयतीत्य-
र्थः । एतेन चरितार्थतास्तीति सूच्यते । मात्रशब्दार्थं विवृ-
णोति क्लिश्नातीति । राज्ञ इति विपरिणामेनानुषङ्गः । क्लिश्नाति
क्लेशयति । लब्धस्य राज्यस्य परिपालनरूपा वृत्तिर्व्यापारः ।
एवमनुभूयमानप्रकारेण । एनामिति पाठे राजानमित्यर्थः । प-
र्यवसितं प्रकृतमाह नातीति । अत इत्यर्थात् । श्रमाय अति-
श्रमाय । भवतीत्युभयत्र शेषः । उक्तार्थे सर्वानुभवगोचरामुप-

(नैपथ्ये)

वैतालिकौ— विजयतां देवः ।

प्रथमः— स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया चाश्रितानाम् ॥ ७ ॥

---

मामाह स्वहस्तेत्यादि । स्वहस्तेत्यादिविशेषणं राज्येऽपि योज्यं तत्र दण्डो दण्डनीतिः । स्वहस्तधृतेति श्रमहेतुः । आतपत्रमित्यन्वर्थम् । यथा स्वहस्तेन ध्रियमाणमातपत्रं पथिकानां तद्वहने हस्तस्यांसस्य च श्रमादतिश्रमं न निवर्तयति नाप्यातपादिदुःखनिवर्तनादतिश्रमं च करोति तथा स्वयमेव परिपालितं राज्यं राज्ञां परिपालनक्लेशादत्यायासानिवर्तकं न औत्सुक्यसमापनादत्यायासकरं च नेत्यर्थः । अत्रातिश्रमायेति वक्तव्ये श्रमायेतिवचनं छायाद्यनुभवेन श्रमस्य दुर्लक्ष्यत्वसूचनायेत्याहुः । पूर्ववाक्यार्थयोर्वैपरीत्येन तृतीयपादार्थयोर्हेतुत्वात् काव्यलिङ्गम् । राज्यमतिश्रमापनयनायेति लोकानां बुद्धिरिति द्योतनाय तस्य पूर्वमुपादानम् । केचित्तु यथासंख्येन हेतुत्वलाभाय नञ्पदद्वये काकुं स्वीकुर्वन्ति । अत्रास्य सामान्यस्य स्वस्मिन् पर्यवसानात् सामान्यनिबन्धनाप्रस्तुतप्रशंसा । तृतीयपादे विरोधाभासश्च । मतिर्निर्वेदश्च भावः । प्रतिष्ठामिति पाठे लब्धपरिपालनवृत्तिः औत्सुक्यमात्रमवसाययति । प्रतिष्ठां सुखावस्थितिं क्लिश्नाति बाधत इत्यर्थः ॥

अथावसरानुगुण्येन वैतालिकवचनमुपन्यस्यति । नैपथ्य इति । विजयतामित्याचारः स्तुतेः पूर्वरङ्गः । अथावसरज्ञयो राज्ञो वैमनस्यपरिहाराय तदनुगुणमुपश्लोकयितुं प्रवृत्तयोस्तयोरेकः

द्वितीयः—

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ८ ॥

---

सामान्यतो जनाद्व्यतिरेकं प्रतिपादयन् स्तौति स्वसुखेति । सर्वो जनः परसुखनिरभिलाषः स्वसुखहेतोः खिद्यते त्वं तु प्रत्युत स्वसुखनिरभिलाषः परसुखहेतोः प्रतिदिनं खिद्यस इत्यर्थः । एतदद्भुतमिति भावः । पुनर्विचिन्त्याहाथवेति । नेदमद्भुतमित्यर्थः । यद्वा नेदं प्रशंसापदमित्यर्थः । कुत इत्यत्राह वृत्तिरिति । वृत्तिर्विहितो व्यापारः । स्वधर्मानुष्ठाने का प्रशंसेति भावः । अनेन प्रजाकार्येषु सततोद्योगस्यावश्यकर्तव्यत्वं द्योत्यते । सृष्टिरिति पाठे ब्रह्मसृष्टिः स्वभाव इति वार्थः । "सृष्टिः स्वभावे"त्याद्यमरः । दृष्टान्तमाहानुभवतीति । शमयति चेति संबन्धः । अत्रानुभवतीत्यादिना स्वसुखनिरभिलाष इत्यस्य शमयतीत्यादिना खिद्यसे लोकहेतोरित्यस्य च प्रतिबिम्बमुक्तमिति दृष्टान्तः । तथा स्वभावोक्तिः पादपे सज्जनवृत्तान्तारोपप्रतीतेः समासोक्तिः । अथवेत्यत्राक्षेपश्च । वैतालिकनिष्ठा राजविषयिका रतिर्भावः ॥

एवं राज्ञः खेदस्य लोकोत्तरत्वे कथिते द्वितीयोऽपि तद्विशेषान् प्रदर्श्य तत्फलसंपत्तिमाह नियमयसीति । विमार्गप्रस्थितान् धर्मशास्त्रविरुद्धे मार्गे प्रस्थातुमारब्धान् प्रस्थानेन वर्तनं लक्ष्यते । आदिकर्मवाचिना क्तेन राज्ञो जागरूकत्वातिशयः सूच्यते । आत्तदण्ड इति हेतुः । यथापराधदण्डेनेत्यर्थः । अत्र

गोपालवृत्तिर्व्यज्यते । तेन यथा सस्यादिभक्षणप्रवृत्ता गावो दण्डेन वार्यन्ते तद्वदिति नियमने गोपालवज्जितश्रमत्वादनायासः प्रत्याय्यते । प्रशमयसि विवादं ये पुनर्भूमिद्रव्यादिभिः परस्परं विवदन्ते तेषां विवादं धर्मशास्त्रवेदिभिः सह व्यवहारदर्शनात् प्रकर्षेण शमयसीत्यर्थः । यथा रघौ "स धर्मस्थसखः शश्वदर्थिप्रत्यर्थिनां स्वयम् । ददर्श संशयच्छेद्यान् व्यवहारानतन्द्रित" इति । कल्पसे रक्षणाय कल्पसे समर्थोऽसि । दैवमानुषाद्यापन्निवारणेन पोषणादिना च परिपालनं कुरुष इत्यर्थः । वाक्यत्रयार्थोऽयमन्त्यवाक्यार्थोपपादकः । अतनुषु प्रभूतेषु । विभवेषु धनधान्यादिषु विषये । ज्ञातयः सन्तु । संबन्धिनो मिळिताः प्रभूतान् विभवान् यथाकाममनुभवन्तु स्वीयबुद्ध्या व्यवहरन्तु चेत्यर्थः । आमन्त्रणे कामचारकरणे लोट् । नामशब्दोऽविसंवादे । अत्र हेतुस्त्वयीति । त्वयीति निमित्तसप्तमी । बन्धुकृत्यं त्विति संबन्धः । प्रजानां परस्परं बन्धुकृत्यं तु त्वत्सामर्थ्यान्निरवकाशं सदस्तमितमित्यर्थः । यद्वा विभवेष्विति निर्द्धारणे सप्तमी । तेषामन्यतमत्वेनेत्यर्थः । ज्ञातयः सन्तु ज्ञातिभिर्न विनियोगस्ते विभवगणनापरिपूरणमात्रफला भवन्त्वित्यर्थः । अत्र हेतुस्त्वयीति । त्वयि तु त्वय्येव । परिसमाप्तं पर्यवसितम् । त्वमेव बन्धुकृत्यं विनयाधानादि निरशेषं करोषीत्यर्थः । अत्र नियमयसीत्यादिवाक्यत्रयेण क्रमाद्विनेतृत्वरूपपितृकृत्यं स्निग्धजनकृत्यं शोकापनोदनादिरूपपुत्रकृत्यं चोक्तमिति राज्ञि बन्धुकृत्यपरिसमाप्तिः । यथा रघौ "तेनार्थवान् लोभपराङ्मुखेन तेन घ्नता विघ्नभयं क्रियावान् । तेनास लोकः पितृमान् विनेत्रा तेनैव शोकापनुदेन पुत्री"ति । इत्थमनेन श्लोकेन राज्ञो रक्षावैभवात् प्रजानां सर्वसंपत्परिपोषः शोकलेशस्याप्यभावश्च प्रकाश्यते । अत्र काव्यलिङ्गं कारकदीपकं बन्धुजनापेक्षया व्यति-

राजा— एते क्लान्तमनसः पुनर्नवीकृताः स्मः ।

(परिक्रामति)

प्रती— एसो अहिणवसम्माज्जणसस्सिरिओ सण्णिहिदहोमधेणू अग्गिसरणालिंदो । आरुहदु देवो एणं । (एषोऽभिनवसंमार्जनसश्रीकः सन्निहितहोमधेनुरग्निशरणालिन्दः । आरोहतु देव एनम् )

राजा— (आरुह्य परिजनांसावलम्बी तिष्ठति) वेत्रवति किमुद्दिश्य तत्रभवता काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः ।

---

रेकश्च । भावध्वनिः पूर्ववत् । अथ राजा वैतालिकवचनेन स्वखेदस्य धर्मरूपत्वं सफलत्वं चावगच्छन्नाहैत इति । एते वयमित्यर्थः । क्लान्तमनसः क्लान्तिरधिकारखेदनिरूपणात् । पुनरिति नवीकरणस्य प्रत्यापत्तिं द्योतयति । नवीकृताः नवीकरणेनानन्दितत्वं लक्ष्यते । तेन पुनरपि रक्षणे पर्युत्सुकत्वं गम्यते । अत्र हर्षो भावः । यथा कुमारे । "क्लेशः फलेन हि पुनर्नवतां विधत्त" इति । परिक्रामतीति । अग्निशरणं प्रतीत्यर्थात् ॥

एसो इति । अभिनवेत्यादिना आरोहणयोग्यत्वमुच्यते । सन्निहितेति । अयमाचारोऽतिथिपूजाद्यर्थः । अत्र किल श्रुतिः प्रमाणम् । परिजनांसावलम्बीति । इदं प्रभुत्वात् । तिष्ठतीति मुनिगौरवादकृतासनपरिग्रह इत्यर्थः । अनेन विनयो गम्यते । अयमेव "भवन्ति नम्रा" इत्यादिना वर्णयिष्यते । अथ स्वकर्तव्यरक्षणशैथिल्यं मुन्यागमने निमित्तमाशङ्कमानः पृच्छति वेत्रवतीति । किमिमि प्रश्ने किं कार्यमित्यर्थः । अथ प्रेषणे कानिचित् कारणानि संभावयन्नाह किन्तावदिति । किमिति वि-

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ९ ॥

---

तर्के । तावदिति संभ्रमे प्राथम्ये वा । व्रतिनां यज्ञादिनिष्ठानामनेन विघ्नानां संभाव्यता व्यज्यते । उपोढतपसां संचितविविधतपसामनेन तपसां पूर्वं रक्षितत्वं तेन संप्रति तदभावशङ्कया विषादश्च व्यज्यते । विघ्नैः राक्षसादिभिः । दूषितं विघ्नितम् । यद्वा उपोढतपसामित्यनेन विघ्ननिवारणसामर्थ्यं मुनीनां द्योत्यते । विघ्नैः वासवप्रहिताप्सरःप्रभृतिषु शापरूपैः रक्षःप्रभृतीनामुपरोधलक्षणैर्वा । बहुवचनेन विघ्नानां बहुप्रकारत्वमुच्यते । तपो दूषितं दूषणमत्र संचितस्य तपसो व्ययकरणम् । यथा रघौ । "आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्त"दिति । "त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्यय"मिति च । तपोऽपि राज्ञा रक्षणीयमिति भावः । धर्मारण्यचरेषु प्राणिषु हरिणादिषु विषये । केनचिद्दुष्टेन लुब्धकादिना व्यालादिना वा । असत् हिंसादि । उत आहोस्विदिति च पक्षान्तरे । प्रसवः पुष्पं फलं च । "प्रसवो जननानुज्ञापुत्रेषु फलपुष्पयो"रिति यादवः । मम राज्ञः । मम अपचरितैः स्वीयैः प्रजापचारनिमित्तकैर्वा दुराचारैः विष्टम्भितः अन्तरा प्रशमितः । वीरुधामिति वृक्षाणामुपलक्षणम् । यथोक्तं "राज्ञोऽपचारात् पृथिवी स्वल्पसस्या भवेत् किल । अल्पायुषः प्रजा" इत्यादि । यथा च श्रीरामभद्रस्य राज्यकाले शम्बूकस्य तपश्चर्यया ब्राह्मणकुमारमरणम् । अत्र वाक्यत्रये क्रमेणाधिदैविकस्य आधिभौतिकस्य आध्यात्मिकस्यश्च विपदः परामृष्टाः । तत्र तपसः

प्रती— सुअरिदाहिणंदिणो इसओ देवं संभावएदुं आअदात्ति तक्केमि । (सुचरिताभिनन्दिन ऋषयो देवं संभावयितुमागता इति तर्कयामि)

(ततः प्रविशन्ति गौतमीसहितां शकुन्तलां पुरस्कृत्य मुनयः पुरतश्चैषां पुरोहितः कञ्चुकीयेन)

कञ्चु— इत इतो भवन्तः ।

शार्ङ्गरवः— शारद्वत ।

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत् परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ १० ॥

---

परमसाधनत्वात् प्रथमं तद्दूषणं ततस्तपस्साधनभूतस्य तपोवनस्योपरोधः पश्चाद्देवतार्चनाद्यङ्गभूतत्वादुपजीव्यत्वाच्च पुष्पफलयोर्विष्टम्भो वितर्कित इति क्रमश्च । इतीति प्रकारे । आरूढाः बहवः उक्ता अनुक्ताश्च प्रतर्का यत् तत् । अथैषामन्यतमेन हेतुना भाव्यमित्यपि निर्णेतुं न शक्यत इत्याहापरीति । परिच्छेदो निश्चयः तद्रहितमपरिच्छेदम् । अत्र हेतुरुक्तं मुनीनां सत्त्रीकत्वमत एवाकुलं ससंभ्रमं च । मे इत्यर्थान्तरसंक्रमितं हेतुविचारादिसामर्थ्यं प्रकाशयति । अन्तःकरणवृत्तेः संशयरूपत्वान्मन इति । यथोक्तम् । "मनो बुद्धिरहङ्कार." इत्यादि । अत्र व्यज्यमाना वितर्कचिन्तावेगादयो भावा धर्मवीरस्याङ्गम् ॥

अथ राज्ञ आकुलत्वं परिहर्तुं चाटुभाषणं करोति सुअरिदेति । भवतः सुचरितमृषीणां तदभिनन्दनं च स्वभावत्र इति वितर्कस्यात्र नावसर इति भावः ॥

तत इति । कञ्चुकीयेनेति । सहेति शेषः । अथ

शार— स्थाने खलु भवान् पुरप्रवेशादित्थंभूतः । अहमपि ।

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥ ११ ॥

---

शार्ङ्गरवः पुरप्रवेशे नागरिकजनसंसर्गमसहमानः शारद्वतं स्वप्रतीतिप्रकारमाह । शारद्वत महाभाग इति । महाभागः "आरभ्योत्पत्तिमा मृत्योः कलङ्को यस्य नो भवेत् । स्याच्चैवानुपमा कीर्तिर्महाभागः स उच्यते" इत्युक्तः । अत्र हेतुरभिन्नस्थितिरिति । अनुल्लङ्घितमर्याद इत्यर्थः । असौ सर्वप्रकारेण मधुरतरः । वर्णानां "वर्णो द्विजादा"वित्यमरः । निर्द्धारणे षष्ठी । अपथमधर्मम् । अपकृष्टोऽप्यन्त्यवर्णोऽपि । किं पुनरुत्कृष्ट इत्यपिशब्दार्थः । तथापीति विरोधे । इदमेतत् पुरम् । शश्वदनवरतं परिचितं विविक्तं तपोवनं येन तेन । मनसा हेतौ विशेषणे वा तृतीया । मनसः शश्वद्विविक्तपरिचयादित्यर्थः । जनैराकीर्णं व्याप्तमिति इदमित्यस्य विशेषणम् । मन्ये जानामि । हुतवहपरीतामिति । जनाकीर्णमित्यस्य प्रतियोगि । हुतवहेत्यन्वर्थं ज्वलितत्वं द्योतयति । गृहामिवेत्युपमया क्षणमपि तन्निवासासहत्वं सूच्यते । केचित्तु । जनाकीर्णमिदं गृहं हुतवहपरीतमिव मन्ये एतन्मन्दिरप्रवेशमग्निप्रवेशमिव संभावयामीत्यर्थ इत्युत्प्रेक्षेत्याहुः । अत्र विभावनाविशेषोक्त्योः संदेहः संकरश्च ॥

शारद्वतस्तदुक्तमनुवदन् स्वप्रतीतिमप्याह स्थान इति । युक्ते द्वे साम्प्रतं स्थान इत्यमरः । चित्तं परिचयावित्रशमिति तवैवं प्रतीतिर्युक्तैवेत्यर्थः । अहमप्यभ्यक्तमिति । अभ्यक्तं तैललिप्तम् । इहास्मिन् पुरे । सुखसङ्गिनं विषयासक्तम् । यथा स्नातादयोऽभ्यक्तादीन् जानन्ति तथाहमत्रत्यं विषयासक्तं जनस-

शकु— (निमित्तं रूपयित्वा) अम्महे किमिति वामेअरं णअणं विआरेदि । (अम्महे किमिति वामेतरं नयनं विकरोति)

गौत— जादे पडिहदं अमंगळं । सुहाणि दे भत्तुकुळदेवदाओ विअरंतु । (पुत्रि प्रतिहतममङ्गलं सुखानि ते भर्तृकुलदेवता वितरन्तु)

(परिक्रामन्ति)

पुरो— (राजानं निर्दिश्य) भोस्तपस्विनः असावत्रभवान् वर्णा-

---

माजं जानामीत्यर्थः । अभ्यक्ताद्युपमानैः जनस्य जुगुप्सितत्वं दूरनिरासयोग्यत्वमविदितपरमार्थत्वं संसारपरतन्त्रत्वं च द्योत्यते । सर्वैश्च विषयविमुखस्यात्मनस्तथाविधजनसमाजदर्शनेन मनःकालुष्यं च । केचित्तु स्नाताद्युपमानैरुपमेयस्य मुनेः शुभवासनत्वसात्विकत्वतत्त्वज्ञानावहितत्वनिरस्तसमस्तैषणत्वानि क्रमाद्व्यज्यन्ते । जनस्याभ्यक्ताद्युपमानैरशुभवासनत्वतामसत्वतत्त्वज्ञानपराङ्मुखत्वसमस्तैषणासंपन्नत्वानि चेत्याहुः । अत्र पुरप्रवेशे शार्ङ्गरवशारद्वतयोर्मनःप्रसादं त्रिनैवंप्रतीतिप्रदर्शनं तदभीष्टासिद्धिसूचकत्वेन । वक्ष्यते चानुपद शकुन्तलाया अपि दुर्निमित्तामित्यप्याहुः ॥

निमित्तमिति । निमित्तं दक्षिणाक्षिस्पन्दनरूपं तत्तु स्त्रीणामनिष्टावार्ताप्रसूचकं तेन दुर्निमित्तेन दूयमानाहाम्महे इति । अम्महे इति देशि । अत्र खेदे । विकरोति स्पन्दते । जादे इति । प्रतिहतमित्याशंसायां क्तः प्रतिहतं भूयादित्यर्थः । भर्तृकुलदेवताः प्रतिमार्चिता हरिहरादयः । अत्रैते वाक्ये वक्ष्यमाणपरित्यागपरिग्रहयोर्बीजरूपे ॥

भो इति । अत्रभवान सर्वेषां पूज्यः । अत्र हेतुर्वर्णेत्यादि । यद्वात्रभवानित्युक्तिराचारः । वर्णेत्यादिना सर्वपूज्यत्वं

श्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयते वः ।
पश्यतैनम् ।

शार्ङ्ग— भो महाब्राह्मण काममेतदभिनन्दनीयं तथापि वयमत्र मध्यस्थाः । कुतः ।

भवन्ति नम्रास्तरवः फलागमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ १२ ॥

---

द्योत्यते । प्रागेव भवद्दर्शनात् पूर्वमेव । पश्यतैनामिति । आश्चर्यमेवंविधस्यास्य विनीतत्वमिति भावः । भो इति । महाब्राह्मणेति संबुद्ध्या पुरोहितस्योत्तानहृदयत्वं द्योत्यते । एतत् अस्यैवंविधं विनीतत्वम् । अत्र विनीतत्वे मध्यस्थाः तटस्थाः अनतिकौतुका इत्यर्थः । कुत इत्यत्राह भवन्तीति । फलानामागमाः समन्तादुत्पत्तयः तैः । फलोद्गमैरित्यपि पाठः । अधस्थं दृष्टान्तमुक्त्वोर्ध्वस्थमाह नवेति । नवेति वर्षारम्भं द्योतयति । दूरमत्यर्थम् । अनुद्धता विनीताः विरोधे नञ् । समृद्धिभिः धनविद्यादिसंपत्तिभिः । एषः नम्रत्वम् । परोपकारिणामिति । वृक्षमेघसत्पुरुषाणां परोपकारित्वं प्रसिद्धम् । तृतीयपादे सामान्यनिबन्धनाप्रस्तुतप्रशंसा । तरुघनयोः प्रकृते सत्पुरुषे चातिशयोक्त्यैकत्वेनाध्यवसितस्य नम्रत्वस्य भिन्नशब्दैर्निर्देशात् प्रतिवस्तूपमा । स्वभाव इत्यर्थान्तरन्यासश्च । अयमर्थः । सत्पुरुषोऽयमस्य विनीतत्वं वृक्षादेरिव परोपकारित्वात् स्वभाव एवेति । स्वभावो न विस्मयविषय इति भावः । अत्र मतिर्भावः ॥

प्रती— देव पसण्णमुहवण्णा इसओ दीस्सन्ति । ता विस्सत्थकज्जा एदे । (देव प्रसन्नमुखवर्णा ऋषयो दृश्यन्ते । तस्माद्विश्वस्तकार्या एते)

राजा— (शकुन्तलां दृष्ट्वा) अथात्रभवती ।

का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ ११ ॥

प्रती— देव कुतूहलगब्भो विहिदो न मे तक्को प्पसरदि । दंसणिज्जा उण से आकिदी लक्खीयदि । (देव कुतूहल-

---

ऋषीनवलोक्याह देवेति । विश्वस्तकार्याः विश्वस्तकार्यसिद्धयः कार्यं सिध्यति वा न वेति संशयरहिता इत्यर्थः । नैते विघ्नप्रतीकारादिपराः परं तु स्वैरदर्शनादिलघुकार्यार्थिनः । ततस्ते व्याकुलत्वस्य नावकाश इति भावः । अथ शापबलेन शकुन्तलामजानन् पृच्छत्यथेति । अथेति प्रश्ने । अत्रभवतीति प्रशंसागर्भम् । का स्विदिति । स्विदिति वितर्के । अवगुण्ठनं प्रावरणं कुलाङ्गनानामाचारोऽयं तद्वतीति नातिस्फुटत्वे हेतुः । किसलयमिवेत्युपमा । न च पाण्डुपत्रमध्ये किसलयस्य न संभव इति शङ्क्यं पाण्डुपत्राणां मध्य इत्यनेन तदन्तर्हितत्वेन किसलयस्यास्फुटताया विवक्षणात् । यद्वोत्प्रेक्षा । तया तपोधनानां मध्ये तस्या असंभाव्यता द्योत्यते । किसलयसाम्येन लावण्यसौकुमार्यपूर्णत्वेन दर्शनीयत्वं द्योत्यते । औत्सुक्यं विस्मयश्च भावः । तेन रतेरीषदुद्बोधश्च । अत्रोपमायाश्चारुत्वान्न लिङ्गभेदो दोषः ॥

देवेति । कुतूहलं तपोधनमध्ये वनितेत्याश्चर्यं गर्भे यस्य स इत्यप्रसरणे हेतुः । विहितः मया कृतः अपीत्यर्थात् ।

गर्भो विहितो न मे तर्कः प्रसरति । दर्शनीया पुनरस्या आकृतिर्लक्ष्यते)

राजा— भवतु । अनिर्वर्णनीयं परकलत्रम् ।

शकु— (हस्तमुरसि कृत्वा आत्मगतम्) हिअअ कीं एव्वं वेपसि । अज्जउत्तस्स भावत्थं ओहारिअ अधीरं दाव ओहि ॥ (हृदय किमेवं वेपसे । आर्यपुत्रस्य भावस्थमवधार्य अधीरं तावद्भव)

पुरो— (पुरो गत्वा) एते विधिवदभ्यर्चितास्तपस्विनः । कश्चिदेषामुपाध्यायसन्देशः । तं देव एव श्रोतुमर्हसि ।

---

कुतूहलगर्भोपहित इति पाठे कुतूहलेन गर्भे उपहितो युक्त इत्यर्थः । तर्क ऊहः । न प्रसरति इयं सेति न व्यवस्यतीत्यर्थः । एवं स्वस्यापि वितर्कमुक्त्वा राज्ञा वर्णितं सौन्दर्यमप्यनुवदति दर्शनीयेति । पुनश्शब्दस्तर्कस्याप्रसरणे कामचारं सूचयति । लक्ष्यत इति । तदियं भव्यरूपा भवता दृश्यतामिति भावः । पुनःपदेन द्योतितमर्थमनुपदं दृश्यतामित्यंशं निषेधति भवत्विति । भवतु या वा का वा भवत्वित्यर्थः । अनिर्वर्णनीयमदर्शनीयं तदेनान्नावलोकयामीति भावः । अत्र मतिस्तया धर्मवीरव्यभिचारिण्या रतेस्तिरोधानं दर्शितम् । हस्तमुरसि कृत्वेति । झटिति प्रसक्तस्यानिष्टस्यानुभावोऽयम् । दुर्निमित्तेन व्यथमानं मानसं प्रत्याह हिअअ इति । भावस्थं मनोगतम् । तावद्भवेति पूर्ववदुदासीनता चेत्तदा त्वमधीरं भवेत्यर्थः । विषादशङ्कावेगादयोऽत्र भावाः ॥

एत इति । एत इत्यादिना स्वस्य राजनियोगानुष्ठानमुक्तम् । राज्ञा कर्तव्यमाह कश्चिदिति । अवहितोऽस्मीति । मुनीन्

राजा— अवहितोऽस्मि ।

ऋषयः— (हस्तानुद्यम्य) विजयस्व राजन् ।

राजा— सर्वानभिवादये ।

ऋषयः— इष्टेन युज्यस्व ।

राजा— अपि निर्विघ्नतपसो मुनयः ।

ऋषयः—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १४ ॥

राजा— अर्थवान् खलु मे राजशब्दः । अथ भगवान् लोकानुग्रहाय कुशली काश्यपः ।

शार्ङ्ग— स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वमिदमाह ।

---

प्रत्युपाध्यायसन्देशे बहुमानं द्योतयति । इष्टेनाभिलषितेन । युज्यस्वेत्याशीः । अपीति । अपीति प्रश्ने । निर्विघ्नतपस इति विघ्नानामात्मना प्रतिविधेयत्वं द्योतयति । कुत इति । सतां धर्मक्रियाविघ्नः कुत इति संबन्धः । अत्र हेतुः रक्षितरि त्वयीति । दृष्टान्तमाह तम इति । घर्मांशावित्यन्वर्थं तापने तमानाविर्भावे हेतुः । आविर्भविष्यति संभावनाप्रायो लडर्थः । अत्र दृष्टान्तः प्रतिवस्तूपमा वा । यथा रघौ "नाथे कुतस्त्वय्यशुभं प्रजानाम् । सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रे"ति । सूर्योपमया राज्ञः प्रतापातिशयः क्रियाप्रवर्तकत्वं च द्योत्यते । वीरोपस्कृता राजविषयिका रतिर्भावः ॥

अर्थवानिति । सुष्ठु परिपालनेन जनानुरञ्जनादन्वर्थः । राजति दीप्यत इति रञ्जयतीति च राजशब्दव्युत्पत्तिः । स्व-

राजा— किमाज्ञापयति भगवान् ।

शार्ङ्ग— यन्मिथःसमवायादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः ।

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १५ ॥

---

त्वित्यवधारणे । अत्र हर्षो भावः । "ब्राह्मणं कुशलं पृच्छे"दिति वचनमनुसरन् पृच्छत्यथेति । लोकानुग्रहायेत्यनेन परोपकारपरत्वं द्योत्यते । सामान्यमुखेनाह स्वाधीनेति । काश्यपो हि सिद्धिमानतः स्वाधीनकुशल इत्यर्थः । वक्तव्यं वक्तुमारभते स इति । सः काश्यपः । इदंपदार्थं विवृणोति यदिति । मिथः रहसि । समवायः संबन्धः तस्मात् तमवलम्ब्येति ल्यब्लोपे पञ्चमी । गान्धर्वेणेत्यर्थः । अनेन परस्परानुरागसंपत्तिः दर्शिता । उपायंस्त परिणीतवान् । "उपाद्यमः स्वकरण" इत्यात्मनेपदम् । तदुपयमनम । युवयोः विषये । अनुज्ञातमनुमतम् । अनुमनने हेतुः प्रीतिः । प्रीतौ हेतुमाह त्वमिति । अर्हतां सत्क्रियार्हाणाम । मूर्त्तिमती सत्क्रियेवेत्युत्प्रेक्षया तन्निमित्तं शकुन्तलायाः सकलेन्द्रियसंतर्पणत्वं सूच्यते । सत्कर्तॄणां चरितार्थताभिमानः फलं च । समानयन् संयोजयन् । वधूवरमिमां त्वां चेत्यर्थः । "सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवती"त्येकवद्भावः । चिरस्येति विभक्तिप्रतिरूपकमव्ययं चिरादारभ्य प्रवृत्तमित्यर्थः । वाच्यमसमानवधूवरसंयोजनजन्यमपवादम । "गर्ह्यहीनौ च वक्तव्या"वित्यमरः । न गत इति । लोके चिरकालप्रवृत्तं तम-

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ॥

गौत — अज्ज किंवि वत्तुकामह्मि । णअ मे वअणावआसो अत्थि । कह त्ति ।

णावेक्खिदो गुरुअणो इमाए तुए वि ण पुच्छिदो बन्धू ।
एक्कक्कम एव्व किदे भणामि किं एक्कमेक्कस्स ॥

(आर्य किमपि वक्तुकामास्मि । न च मे वचनावकाशोऽस्ति । कथमिति ।

नावेक्षितो गुरुजनोऽनया त्वयापि न पृष्टो बन्धुः ।
एकक्रम एव कृते भणामि किमेकमेकस्य ॥ १६ ॥)

---

पवादमसहमान इव प्रजापतिरिमां त्वां च तुल्यगुणं वधूवरं निर्माय संयोजयन्निदानीं ममार्जेति भावः । अनेनेतः पूर्वमेवं-गुणोपेतं वधूवरं नाभूदिति द्योत्यते । प्रजापतिरिति । प्रजाप-तित्वे हि प्रजापवादमार्जनं स्थान एवेति भावः । अत्र पूर्व-वाक्यार्थस्य तुल्यगुणत्वोपपादकत्वात् काव्यलिङ्गमनुरूपयोर्योगवर्ण-नात् समं च । तदिति । तत् त्वया परिणयनस्य कृतत्वात् तस्य मयानुमतत्वाच्चेत्यर्थः । आपन्नसत्त्वा गर्भिणी । अनेन प्र-तिग्रहे सद्य एव संतानलक्षणश्रेयोलाभोऽस्तीति द्योत्यते । सहध-र्मेति । धर्मो यज्ञादिः । इतीत्यस्याज्ञापयतीत्यनेन संबन्धः । अत्र मिथस्समवायादित्यनेन "त्वमर्हतां प्राग्रसर इत्यनेन "उच्चैः कुलं चात्मन" इत्यस्य न इत्यनेना-स्मानित्यादेश्च पूर्वोक्तसंदेशस्य सामरूपोऽर्थ एव भङ्ग्यन्तरेणोक्त इति बोध्यम् ॥

अथावसरे गौतम्यपि मिथस्समवायादित्यनेनोक्तमर्थं भङ्ग्य-न्तरेणाह अज्ज इति । किमपीति । त्वयानुचितमाचरितमिति विवक्षितमित्यर्थः । कथमितीति । कुतो वचनावकाशाभाव इति

शकु— (आत्मगतम्) किण्णु खु अॆअउत्तो भणाइ। (किन्नु खल्वार्यपुत्रो भणति)

राजा— किमिदमुपन्यस्तम्।

---

चेदुच्यत इत्यर्थः। नावेक्षित इति। गुरुजनः काश्यपः। बन्धुः कन्याबन्धुः। एकक्रमे एव कृते एकरीतावेव युवाभ्यामनुष्ठितायाम्। यद्वा कृतेऽनुष्ठिते कर्मणि। एकः क्रमो यस्य तस्मिन्नेव सति। एवं वचनानवकाशं प्रतिपाद्य अतो न वच्मीत्याह भणामीति। किं भणामि न भणामीत्यर्थः। एकं किमपि। एकस्य युवयोरेकस्य तवेत्यर्थः। वध्वास्तव च तुल्यदोषत्वादनुचितं त्वया कृतमिति वधूपक्षपातिन्यहं त्वां न वच्मीत्यर्थः। अनेन विवक्षितस्य निषेधेन त्वया समुदाचारमुल्लङ्घ्य येनैवमाचरितं तादृशमुभयगतमनुरागमालोच्य परिगृह्यतामियमिति व्यज्यत इति "निषेधो वक्तुमिष्टस्येति" लक्षित आक्षेपः। एकैकमेव कृते भणामि किमेकैकस्येति पाठे चार्यं किमपीत्यादेरेवमर्थः। किमपि त्वमेनां परिगृहाणेति त्वां प्रति बन्धुप्रार्थनं त्वमेनं सादरं परिचरेति वधूं प्रति गुरुजनानुशासनं चेत्यर्थः। एकैकामिति गुरुजनबन्धुजनप्रसङ्गमित्यर्थः। एकैकस्य कृते अस्यास्तव चार्थे। इमां त्वां च प्रतीत्यर्थः। किं भणामि। तदा युवां द्वावपि रागान्धतया समुदाचारं न स्मृतवन्तौ तदानीमिवेदानीमपि युवयोरेव कार्यकल्पना। न त्वस्माभिः किञ्चिदपि वक्तव्यमस्तीत्यर्थः। तथाविधमनुरागं विचिन्त्येमां प्रतिगृहाणेति भाव इति॥

किण्णु खु इति। एतत्संवदति वा न वेत्यर्थः। अत्र वितर्को विषादश्च। शापबलेन विस्मृतविवाहवृत्तान्तो राजा पृच्छति किमिति। अस्योपन्यस्तस्यासंबद्धत्वादर्थो नावबुध्यत इ-

शकु—(आत्मगतम्) पावओ खु वअणोवण्णासो ॥ (पावकः खलु वचनोपन्यासः)

शार्ङ्ग—कथं किन्नाम । ननु भवन्त एव सुतरां लोकवृत्तिनिष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
तदुज्झितापि प्रमदा स्वबन्धुभिः ॥ १७ ॥

---

त्यर्थः । राज्ञः शापमजानती तद्वचनमाकर्ण्याह पावओ इति । संतापातिशयकरत्वात् पावकत्वारोपः । अत्र त्रासः ॥

अथ शापहेतुकं राज्ञो विस्मरणमजानन्मुनिः अयमेनामवधीरयितुमारभत इति मन्वानः तदुक्तस्यानौचित्यं शकुन्तलायाः प्रतिग्राह्यत्वबोधनाय लोकाचारं च प्रदर्शयति कथमित्यादि । कथं किन्नामेति किमिदमुपन्यस्तमित्यत्र किमिति पदं कुतः प्रयुज्यते । कस्मादस्मदुदीरितं वृत्तान्तमजानन्निव पृच्छसीत्यर्थः । इदमनुचितमिति भावः । नन्विति प्रश्ने । भवन्त इत्यादि । वर्णाश्रमगुरुत्वाद्भवन्त एवास्मत्तः सुतरां लोकवृत्तिकुशलाः वयं तु तपोवनवासित्वान्न तथेत्यर्थः । तथापि लोकवृत्तिं ब्रूम इति भावः । तामाह सतीमिति । सतीं साध्वीम् । अपीति विरोधे । ज्ञातीत्यादि । पितृगृहैकवासिनीमित्यर्थः । अन्यथा असतीम् । भर्तृमतीं जीवद्भर्तृकाम् । इष्यते इच्छतिना तत्कार्यं लक्ष्यते संयोज्यत इत्यर्थः । तदुज्झिता परिणेत्रा परित्यक्ता । प्रमदेति चापल्यस्य संभावनां द्योतयति । स्वबन्धुभिः वधूबन्धुभिः । यत एवमतो लोकापवादभीरुणा गुरुणा त्वयोपेक्षिता साध्वी तव

राजा— किं चात्रभवती मया परिणीतपूर्वा ।

शकु— ( सविषादम् । आत्मगतम् ) हिअअ संपदं उइदा दे आसंका । (हृदय साम्प्रतमुचिता ते आशङ्का)

शार्ङ्ग— किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ।

राजा— कुतोऽयमसत्कल्पनाप्रश्नः ।

शार्ङ्ग— मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ १८ ॥

राजा— विशेषेणाधिक्षिप्तोऽस्मि ॥

---

धर्मपत्नीयं त्वत्समीपं प्रापितेत्यर्थः । तदिदानीं प्रतिगृह्यतां सहधर्मचरणायेति भावः । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा । मतिर्भावः ॥

पुनस्तद्वचनेन तदुक्तस्यार्थमवगच्छन्नाह किं चेति । किं चेति प्रश्ने । युष्माभिर्लोकवृत्तिकथनेनात्रभवतीयं मया परिणीतपूर्वेति सिद्धत्वेन ख्याप्यते तत्प्रकारस्तु विमर्शदशायां मम मनसि किञ्चिदपि नावतरतीत्यर्थः । अत्र चिन्ता । हिअअ इति । साम्प्रतमिति आर्यपुत्रे एवं वदतीत्यर्थः । किं चेत्यादिवचनेन राज्ञः शकुन्तलायां वैमुख्यमस्तीति निश्चित्य सासूयमाह किमिति । किमिति त्रिष्वपि संबध्यते । तत्रेति शेषः । कृते कार्ये परिणयने । परिणीतायामस्यामिति यावत् । द्वेषः अप्रीतिः । धर्ममित्यादि । धर्माचरणवैमुख्यमित्यर्थः । कृतेष्वसंपन्नेष्वस्मासु संबन्धिषु अवज्ञा एते खलु वधूबन्धवः कुत्सिता मुनयो न तु राजन्या इति निन्देत्यर्थः । एषामन्यतमेनास्यां वैमुख्ये निमित्तेनावश्यं भवितव्यं न त्वन्यः प्रकारस्त्वयि संभाव्य

गौत— जादे मुहुत्तअं मा लज्ज । अवणइस्सं दे ओउंठणं । तदो भट्टा तुमं पच्चभिजाणिस्सदि । (पुत्रि मुहूर्तं मा लज्जस्व । अपनेष्यामि तवावगुण्ठनं ततो भर्ता त्वां प्रत्यभिज्ञास्यति)

(यथोक्तं करोति)

राजा — (शकुन्तलां निर्वर्ण्य । आत्मगतम्)

---

इति भावः । तदुक्तमसहमानो मध्ये पृच्छति कुत इति । असतामविद्यमानानां कृतकार्यद्वेषादीनां कल्पनया प्रश्नः कृतकार्यद्वेषादीन्मय्यारोप्य कुत एवं पृच्छयत इत्यर्थः । भवतामिदमनुचितमिति भावः । यद्वा कृतकार्यद्वेषः धर्मं प्रति विमुखता किं कृशावज्ञा किमिति कार्यकारणयोरैक्यारोपेणोक्तिः । तवास्यां द्वेषः धर्मवैमुख्येन कृशावज्ञया वा किमित्यर्थः । कुत इति । असतः कृतकार्यद्वेषस्य कल्पनया प्रश्नः हेतुप्रश्न इत्यर्थः । अथ नेयमसत्कल्पनेत्याह मूर्च्छन्तीति । मूर्च्छन्ति वर्द्धन्ते । अमी विकाराः कृतकार्यद्वेषादयः । प्रायेण सामान्यतः । त्वमैश्वर्यमत्तस्तस्मात्त्वय्यप्यमी संभवन्तीत्यर्थः । अत्रार्थान्तरन्यासः । विशेषेणाधिक्षिप्त इति । ऐश्वर्यमत्तत्ववचनादिति भावः । अत्र दैन्यम् ॥

गौतमी तदानीं राजानं प्रत्याययितुमारभते जाद इति । प्रत्यभिज्ञास्यति । अतीतवृत्तान्तं स्मरिष्यति । निर्वर्ण्येति सावधानमङ्गप्रत्यङ्गान्यवलोक्येत्यर्थः । तदवलोकनेन झटिति संजातमनोविक्रियो विमृशतीदमित्यादि । इदमित्थं प्रत्यक्षम् । अनेन यौवनादिशालित्वेन विशिष्टहाराद्यलंकृतत्वेन च रूपस्य हृदयङ्गम-

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन्।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥ १९ ॥

(विचारयन् स्थितः)

प्रती— (जनान्तिकम्) अहो धम्मावेक्खिदा भट्टिणो । ईदिसं णाम सुहोवणदं रूपं दक्खिअ को विआरेदि ॥ (अहो धर्मावेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा को विचारयति)

---

त्वं द्योत्यते । इदं हानाशक्तौ हेतुः । एवमिति सगर्भप्रारम्भमित्यर्थः । संशये सति परिभोगस्यायोग्यत्वे हेतुरिदम् । रूपमिति इमामित्यर्थः नामान्वयादेरज्ञानादेवमुक्तम् । अक्लिष्टकान्ति परिपूर्णलावण्यमितीदमित्यनेन द्योतितस्य किञ्चिद्विवरणम् । अव्यवस्यन् सन्दिहानः सन्देहेनेति यावत् । भ्रमर इति रसास्वादैकतत्परतां द्योतयति । कुन्दमिति विशिष्टमकरन्दादिशालीत्यर्थान्तरसंक्रमितम् । हानाशक्तौ हेतुरिदम् । अन्तस्तुषारमिति । तुषारस्पर्शो हि भ्रमरस्यासह्य इति परिभोग्यत्वस्याभावे हेतुरिदं विभात इति चान्तस्तुषारत्वे । तुषारोऽत्र गर्भस्थानीयः । न च नैव । नञ्समीपवर्ती चकारोऽवधारणे । खल्विति जिज्ञासायाम् । अत्रोपमाकाव्यलिङ्गे । शृङ्गारव्यभिचारिण औत्सुक्यस्य परिग्रहे धर्मबाधाशङ्कास्फुरणाद्धीरव्यभिचारिणा: शङ्कायाश्च संकरोऽत्र भावः । एवमनध्यवसायस्य फलमाह विचारयन् स्थित इति ॥

तदवस्थं राजानमालोक्य सविस्मयं प्रशंसत्यहो इति । अहो धर्मावेक्षिता भर्तुरिति । कुत इत्यत्राहेदृशमिति । क इति कोऽन्य इत्यर्थः । क्वचित्तथा पाठः ॥

शार्ङ्ग— राजन् किमिदं जोषमास्यते ।

राजा— भोस्तपोधन चिन्तयन्नपि स्वीकरणमत्रभवत्या न स्मरामि । ततः कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानमक्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ।

शकु— (सविषादमपवार्य) परिणए एव्व सन्देहो कुदो मे दूराधिरोहिणी आसा ॥ (परिणय एव सन्देहः, कुतो मे दूराधिरोहिण्याशा)

शार्ङ्ग— मा तावत् ।

कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
दृष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ २० ॥

---

राजस्तथावस्थितिमसहमानः पृच्छति किमिति । इदमित्यासनाक्रियाविशेषणम् । जोषं तूष्णीम् । अथ प्रथममनुरागवासनाबलेन परिणयनं प्रति संदेहकोटौ पतितस्ततोऽपि प्रच्युत आह भो इति । स्वीकरणं परिणयनम् । अभिव्यक्तं स्फुटं सत्त्वस्य गर्भस्य लक्षणं कपोलपाण्डिमचूचुकनीलिमादि यस्याः । अक्षेत्रिणमकलत्रिणम् । प्रतिपत्स्ये अङ्गीकरिष्ये ॥

परिणअ इति । आर्यपुत्रस्येति शेषः । कुत इति सफला न स्यादिति भावः । दूराधिरोहिण्याशा "परिग्रहबहुत्वेऽपि"त्याद्युक्तविषया ॥

राजस्तद्वचनमाकर्ण्य कुपितः प्राह मेति । मा तावदिति वैपरीत्ये । विपरीतमिदमित्यर्थः । किं तदित्यत्राह । कृतेति । कृतः अभिमर्शो बलात् स्पर्शो यस्याः । अनुमन्यमानः महि-

शार— शार्ङ्गरव विरम त्वमिदानीम् । शकुन्तले वक्तव्यमुक्तम-

---

षीत्वेन प्रतिगृह्यतामिति त्वत्समीपं प्रापयन्नित्यर्थः । नामेत्यसंभावनायाम् । अयमर्थः मुनिकर्तृकस्य त्वत्कर्मकस्य च विमाननस्यात्र संभावना न तु त्वत्कर्तृकस्य मुनिकर्मकस्य । त्वं खलु सुताभिमर्शादपराद्धः अतो विपरीतमेतदिति । विमाननस्यासंभाव्यत्वमुपपादयति । दृष्टमिति । येन मुनेः सुतानुमननेन हेतुना । त्वं दृष्टं प्रथमं दस्युना हृतं पश्चादन्विष्य दृष्टम् । स्वमर्थं धनम् । प्रतिग्राह्यता कस्मैचिद्दित्सुना । पात्रीकृतः दस्युश्चोर इवासीत्यन्वयः । अत्रोपमया अपराधिन्यप्यनुग्रहेच्छोः विमाननस्यात्यन्तमयुक्तत्वमशुभोदर्कत्वं च द्योत्यते । तदेनां स्वीकृत्य मुनिं संमानयेति भावः । यद्वा तावत् प्रथमम् । मुनिर्मा विमान्यः वयं तु कामं विमान्या भवाम नामेति भावः । अविमान्यत्वे हेतुर्दृष्टमिति । स्वमर्थं कन्यारूपं धनं च । येन मुनिना । अथवा तव विचिन्तनेऽप्येतद्वृत्तं न स्फुरति चेदाप्तवचनमेव प्रमाणीकुरुष्वेत्याशयेनाह । मा तावदिति । अभिमर्शः परिणयनम् । मुनिर्मननशीलः । तावद्विमान्यः । किं तु प्रमाणीकर्तव्य इति भावः । अत्र हेतुर्दृष्टमिति । दृष्टं दिव्यज्ञानेन । चक्षुषा च । स्वमर्थं कन्याख्यं धनं च । प्रतिग्राहयता प्रतिग्रहायात्र प्रेषयता । स्वीकारयता च । येन मुनिना । त्वं केनचिद्दित्सुना दस्युरिव पात्रीकृतोऽसि । तव स्मृतिशैथिल्येऽपि मुनेर्दिव्यचक्षुषस्तदभावात् स प्रमाणीकर्तव्य इत्यर्थः । तदेनां परिगृहाणेति भावः ॥

तदन्तरे शारद्वत आह शार्ङ्गरवेति । विरमेति । राज्ञो निर्बन्धो दृष्टस्तदलमेवंविधैर्वचनैरित्यर्थः । शकुन्तले इति । प्र-

स्माभिः, सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनम् ॥

शकु— (स्वगतम्) इदं अवत्थन्तरं गदे तारिसे अणुराए किं वा सुमराविदेण । अत्ता दाणीं मे सोअणिज्जत्ति ववसिदं एदम् । (इदमवस्थान्तरं गते तादृशे अनुरागे किं वा स्मारितेन । आत्मेदानीं मे शोचनीय इति व्यवसितमेतत्) (प्रकाशम्) अॲअउत्त (इत्यर्द्धोक्ते) अहव संसइदे ण एस समुदाआरो । पौरव ण जुत्तं णाम दे पुरा अस्समपदे सहावोत्ताणहिअअं इमं जणं समअपुरु-

---

त्ययार्थं प्रतिवचनं प्रत्ययप्रतिवचनम् । अत्र न साधनान्तरमिति भावः ॥

शोच्यास्मीति स्वयं विमृशति । इदमिति । स्मारितेन स्मारणेन । इत्येतद्व्यवसितमिति संबन्धः । राज्ञः स्मरणं हि प्रत्ययप्रतिवचनस्य फलं तस्यानुरागाभावे निष्फलत्वमत आत्मनः शोच्यता निश्चितेत्यर्थः । अतो विराम एव श्लाघ्य इति भावः । अत्र निर्वेददैन्यादयो भावाः । अथापि मुनिगौरवादाहार्यपुत्रेति । अथवेति । आर्यपुत्रेति न संबोधनीयमित्यर्थः । कुत इत्यत्राह संशयित इति । संशयित इति कर्मणि क्तः । परिणयन इति शेषः । कर्तरि क्तः । अस्मिन्निति शेष इति केचित । यथोचितं संबोधयति । पौरवेति । इदमयुक्तत्वे हेतुः । स्वभावेन उत्तानमार्जवयुक्तं हृदयं यस्य तं स्वप्रेऽप्यनिरूपितयुष्मद्वञ्चनमिति भावः । समयपूर्वं समयप्रकारो वक्ष्यते । “एकैकमत्र दिवस” इत्यादि । प्रतार्य वञ्चयित्वा । प्रतिश्रुत्याकरणमत्र वञ्चनम् । ईदृशैः परकलत्रत्वप्रतिपादकैः । प्रत्याख्यातुं

वं पदारिअ ईरिसेहीं अक्खरेहीं पच्चाचक्खिदुं । (आर्यपुत्र (इत्यर्द्धोक्ते) अथवा संशयिते नैष समुदाचारः । पौरव न युक्तं नाम ते पुरा आश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य साम्प्रतमीदृशैरक्षरैः प्रत्याख्यातुम् )

राजा— शान्तं शान्तं पापम् ।

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।
कूलङ्कषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ २१ ॥

शकु— होदु जइ परमात्थदो परपरिग्गहसंकिणा तुए एव्वं पउत्तं अहिण्णाणेण इमिणा तुज्झ आसंकं अपणइस्सं ।

---

निराकर्तुम् । न युक्तमिति संबन्धः । युक्तमित्येव पाठे विपरीतलक्षणा । पूरुवंशे जातस्य तवानुचितमेतदित्यर्थः । तदिमं जनं मा निराकुरुष्वेति भावः ॥

तद्वचनमसहमान आह । शान्तमिति । आशंसायां क्तः । वीप्सया शान्तावादरातिशयः प्रकाश्यते । व्यपदेशमिति । व्यपदिश्यतेऽनेनेति व्यपदेशः कुलं पितृकुलमिति यावत् तम् । आविलयितुं दूषयितुं कलुषयितुं च । ईहसे इच्छसि । व्यवस्यसि वा । पातयितुं नरके जले च । कूलङ्कषेति कलुषीकरणे तरुपातने च हेतुः । सिन्धुर्नदी । प्रसन्नं निर्दोषं स्वच्छं च । किं कुलटात्वमवलम्बसे । उभयकुलशुद्धिवदुभयकुलदोषोऽपि स्यादित्यर्थः । अत्र दूषणपतनयोरवश्यंभाव उपमया व्यज्यते । असूया मतिश्च भावः ॥

अथ सखीसंदिष्टेनाङ्गुलीयकदर्शनेन राज्ञः शङ्कां परिहर्तुमारभते । होदु इति । अभिज्ञानेन प्रत्ययहेतुना अङ्गुलीयके-

(भवतु यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रयुक्तं, अभिज्ञानेनामुना तव आशङ्कामपनेष्यामि)

राजा— उदारम् ।

शकु— (मुद्रास्थानं परामृश्य) हद्धि हद्धि अङ्गुलीअसुण्णा मे अङ्गुली ॥ (हा धिक् हा धिक् अङ्गुलीयशून्या मे अङ्गुली)

(गौतमीमवेक्षते)

गौत— णूणं दे सक्कावदारब्भन्तरे सईतित्थसलिलं वन्दमाणाए पब्भट्टं अंगुलीअअं । (नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् )

राजा— ( सस्मितम ) इदं तत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ॥

---

न । अमुना प्रस्थानकाले त्वद्दत्तेन मत्करतलगतत्वात् स्वाधीनेन । उदारमिति विदग्धमेतदित्यर्थः । "उदारो महति ख्याते दानशौण्डविदग्धयो"रिति वैजयन्ती । हद्धि इति । अहो मे दैववैपरीत्यमिति भावः । संचारिणी खल्वापदिति भद्द्वचनं तथ्यमिति शकुन्तलाबुद्धिरत्र गम्यते । गौतमीमवेक्षत इति कथमेतदिति तदभिप्रायः ॥

तदङ्गुलीयकादर्शनस्य संगतिं संभावयन्त्याह णूणमिति । शक्रावतारो गङ्गातीरैकदेशः । सस्मितमिति । तयोरलीकवचनेनात्मवञ्चनोद्यमावगमात् परिहासस्तद्धेतुः । अलीकवचनोपन्यासवैदग्ध्यावगमाद्विस्मय इत्यन्ये । इदमिति । इदं तापसतरुण्याः लीकस्याङ्गुलीयकस्यादर्शने कथिते तापसवृद्धया तस्य संगतिकथनम् । प्रत्युत्पन्ना तत्तत्काले तत्तदुचितविषयोन्मेषवती मतिः

शकु— एत्थ दाव विहिणा दंसिदं पहुत्तणं । अवरं दे कह-इस्सं । (अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि)

राजा— श्रोतव्यमिदानीं संवृत्तम् ॥

शकु— णं एक्कस्सिं दिअहे णोमालिआमण्डवे णलिणीपत्तभाअण-गअं उदअं तव हत्थे सण्णिहिदं आसि । (नन्वेकस्मिन् दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितमासीत् )

राजा— शृणुमस्तावत् ।

शकु— तक्खणन्तु सो मम किदअपुत्तओ दिह्हावंगो णाम हरिणपोदओ उवट्ठिदो । तुए अअं दाव पढमं पिब-दुत्ति अणुकम्पिणा उपछंदिदो उदएण ण उण दे अवरि-अआदो हत्थब्भासं उपगओ । पछा तस्सिं एव्व मए

---

बुद्धिर्यस्य तत् । प्रतिभाबलेन तत्तत्कालोचितव्यवहारनिपुणमित्य-र्थः । स्त्रैणं स्त्रीसमूहः ।

एत्थ इति । विधिना स्वेच्छापरिकल्पितलोकतन्त्रेण । प्र-भुत्वं स्वातन्त्र्यम् । विधिवैपरीत्यमेवात्र हेतुरिति भावः । अत्र विधिं प्रत्यसूया भावः । अपरं अभिज्ञानान्तरम् । श्रोतव्यमि-ति । पूर्वं द्रष्टव्यत्वेनोक्तमभिज्ञानमद्य श्रोतव्यमभूदित्यर्थः । अनेन कथयिष्यमाणमपीदृशमेवेति राज्ञो हृदयं प्रतीयते ॥

अभिज्ञानमाह णं इति । नलिनीत्यादि । आतिथ्यक्रि-यासमारम्भे मया समानीतमुदकं पादप्रक्षालनाद्यर्थं तव करे स-मर्पितमभूदित्यर्थः । शृणुमस्तावदिति । विवक्षितं सर्वमुच्यतामि-ति भावः । तक्खणं इति । स इत्यनुभूतार्थकम् । प्रथममि-

गहिदे सळिळे किदो तेण पणओ । तदो इत्थं परिहसिदोसि । सव्वो सगन्धेसु विस्ससदि । दुवे वि एत्थ आरण्णआ इत्ति ॥ (तत्क्षणं तु स मम कृतकपुत्रको दीर्घापाङ्गो नाम हरिणपोतक उपस्थितः । त्वयायं तावत् प्रथमं पिबत्वित्यनुकम्पिना उपच्छन्दित उदकेन न पुनस्त्वापरिचयाद्धस्ताभ्याशमुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिले कृतस्तेन प्रणयः । तत इत्थं प्रहसितोसि । सर्वः सगन्धेषु विश्वसिति, द्वावप्यत्रारण्यकाविति)

राजा— एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतवाङ्मधुधाराभिराकृष्यन्ते विषयिणः ।

गौत— महाभाअ णारुहासि एव्वं मंतिदुं । तपोवणसंवड्ढिदो अणहिण्णो अयं जणो कैदवस्स । (महाभाग नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्द्धितोऽनभिज्ञोऽयं जनः कैतवस्य)

---

ति पादप्रक्षालनादिकं तु पश्चात्संपाद्यमिति भावः । उपच्छन्दितः उपच्छन्दनमनुवृत्तिः । प्रहासित इति । व्यवसितादित्वात् कर्तरि क्तः । हासप्रकारमाह सर्व इति । सगन्धेषु । "सगन्धो बन्धुरुच्यत" इति हलायुधः । बन्धुत्वमुपपादयति । द्वाविति ॥

एवमादिभिरिति । आकृष्यन्ते विषयिण इति । नाहं विषयत त्वानृतवाङ्मधुधाराभिर्नाकृष्य इति भावः । अत्रानृतवाचां मधुत्वारोपाद्विषयिणां भ्रमरत्वं स्त्रीणां लतात्वं च गम्यत इत्येकदेशविवर्ति रूपकमित्यपि केचित । वाङ्माधुर्यं मधुत्वेनाध्यवसित इत्यतिशयोक्तिरित्यन्ये । महाभाअ इति । नार्हसीत्यत्र

राजा— तापसवृद्धे !

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२ ॥

---

हेतुः तपोवनेति । सत्यमेव भणितमनया तपोवनवर्द्धितत्वात् कैतवं न जानातीयमिति भावः ॥

तदाकर्ण्य सोपहासमाह । तापसवृद्ध इति । तापसी चासौ वृद्धा च वेश्याजनन्या इव तपोऽपदेशेनेयमेवं भणतीति संबुद्ध्या सूच्यते । तदेव विवृणोति स्त्रीणामिति । स्त्रीणामिति निर्द्धारणे षष्ठी । अमानुषीष्वित्यनेनान्वेति । अशिक्षितपटुत्वं शिक्षां विना नैसर्गिकं पाटवम् । अर्थात् कैतवे । किमुत याः प्रतिबोधवत्यः । याः प्रतिभावत्यः शिक्षाशालिन्यश्च तासु मानुषीषु किमुच्यत इत्यर्थः । उक्तं विशेषेण साधयति । प्रागिति । प्रागन्तरिक्षगमनात् उड्डयनशक्त्युत्पत्तेः पूर्वम् । अपत्यजातं "जातिर्जातञ्च सामान्य"मित्यमरः । अन्यैर्द्विजैः काकैः । परभृताः कोकिलस्त्रियः । खल्विति प्रसिद्धौ । अत्र पूर्वार्द्धे काव्यार्थापत्तिः । स्त्रीसामान्यवृत्तान्तकथनेनेयं कैतवे निपुणेति प्रकृतार्थप्रतीत्याप्रस्तुतप्रशंसार्थान्तरन्यासश्च । परभृता इत्यनेन शकुन्तलायाः स्वमपत्यमित्यनेन भरतस्य अन्यैर्द्विजैरित्यनेन मारीचाश्रमवासिनां मुनीनां प्रागन्तरिक्षगमादित्यनेन देवेन्द्रप्रेषितमातलिसहकृतस्य राज्ञ आगमनात् पूर्वमित्यर्थस्य च प्रतीत्या मारीचाश्रमे मुनिभिः संरक्ष्यमाणायाः सपुत्रायाः शकुन्तलाया स्थितिरिन्द्रलोकात् प्रत्यागमनकाले राज्ञस्तया संसर्गश्चेति वक्ष्यमाणः कथाभागोऽप्यत्र सूच्यते ॥

शकु— (सरोषम्) अणॲअ अत्तणो हिअआणुमाणेण पेक्खसि । को अण्णो धम्मकञ्चुकप्पवेसिणो तिणच्छण्णकूवोवमस्स तुह अणुकिदीभविस्सदि । (अनार्य आत्मनो हृदयानुमानेन पश्यसि । कोऽन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकारीभविष्यति)

राजा— (आत्मगतम्) सन्दिग्धबुद्धिं कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया ।

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३ ॥

---

अथ तस्याधिक्षेपमसहमाना तमुपालभते । अणॲअ इत्यादि । आत्मनो हृदयानुमानेन आत्महृदयमिव परहृदयमपीति कल्पनेन । पश्यसि आत्मवदस्मान् जानासीत्यर्थः । उक्तं च "स्वयमशुद्धः पराना शङ्कत" इति । अथानार्यत्वं विवृणोति । क इत्यादि । धर्मेत्यादि । बहिः सर्वप्रकारेण व्याजेन धर्मपरस्येत्यर्थः । अत एवाह । तृणेति । तृणच्छन्नो हि कूपः स्थलबुद्ध्या जनान् पातयति । अन्तर्नृशंसस्येत्यर्थः । कोऽन्यो भविष्यति । कश्चिदपि नैवेति भावः ॥

अथ नायकः कुपितायास्तस्या अक्षिलौहित्यभ्रूभेदाभ्यामनुभावाभ्यां कोपस्याकृत्रिमत्वमवधार्य सत्य एव परिणयेन सत्येवंविधः कोपः स्यादिति परिणयनस्य सत्यत्वं मन्वानोऽपि मुनिशापबलेनानिश्चिन्वन्नाह सन्दिग्धेत्यादि । सन्दिग्धा इयं मया परिणीता न वेति बुद्धिर्यस्य । मामिति शेषः लक्ष्यते लक्षणै-

(प्रकाशम्) भद्रे प्रथितं दुष्यन्तचरितं तथापीदं न लक्ष्यते ॥

---

हन्नीयते । अस्याः कोपः अकैतव इव लक्ष्यते । अतः मां सन्दिग्धबुद्धिं कुर्वन्निति संबन्धः । अत्र तर्को भावः । एवं कोपस्याकृत्रिमत्वमुक्त्वा तस्य ज्ञापकहेतुमाह । तथा हीत्यादि । तत्राक्ष्यतिलौहित्यं भ्रूभङ्गं च विधेयं ज्ञापकद्वयमनूद्य तयोर्भ्रूभङ्गं वर्णयति । मय्येवेति । मय्येव न तु यस्मिन् कस्मिंश्चित्तटस्थे किं तु रहःप्रणयप्रतिसंबन्धिनि मयि । विस्मरणेन दारुणा निरनुक्रोशा चित्तवृत्तिर्यस्य तस्मिन्नित्यप्रतिपत्तौ हेतुः । वृत्तं जातम् । प्रणयं परिचयम् । अप्रतिपद्यमाने सति तन्निमित्तेनेत्यर्थः । निमित्तं च स्मरविषयस्य रोषस्य । स खल्वेवंविधे मय्यस्या आस्थाबन्धं कृतवानिति । भेदाद् भङ्गात् । ल्यब्लोपे पञ्चमी । भ्रूभेदमपदिश्येत्यर्थः । भग्नमिवेत्यत्र संबन्धः । कुटिलयोरिति शरासनसाम्यार्थमुक्तम् । शरासनं त्रिभुवनविजये प्रधानसाधनं धनुः । अतिरुषा तीव्रेण स्मरविषयेण रोषेण । भग्नमिवेति । कोऽस्य धनुर्भञ्जनादपरः पराभव इति । अत्र सापह्नवोत्प्रेक्षा । तया भ्रूगतः संस्थानसौष्ठवातिशयः सकललोकहृदयोन्माथकत्वं च व्यज्यते । भ्रूवर्णनमिदं किंचिदुन्मिषिताया रतेरनुभावः । पुनरपि शापनिह्नुतस्मृतिराह भद्र इति । भद्रे त्वं वृथा मा कुप्य सत्यमेव भणितमनार्थं मनसि कृत्वा न स्वलीकमिति भावः । प्रथितमित्यादि । सुहृत्परिवृतत्वादतिप्रकाशम् । दुष्यन्तचरितम् । दुष्यन्तेत्यविसंवादित्वकृतज्ञत्वधार्मिकत्वाद्यर्थान्तरसङ्क्रामितम् । इदं त्वत्पारिणयनम् । न लक्ष्यत इति । मदीयं दिग्विजयाद्यपदानामिन्द्रसाहाय्यार्थं स्वर्गलोकगमनं मृगयाप्रसङ्गेन मुनिजनसत्वरक्षणार्थं तपोवननिवासश्चेत्यादयः सर्वे

शकु—सुट्ठु दाव अत्तछन्दआरिणी किदह्मि । जा अहं इमस्स पुरुवंशप्पच्चएण मुहमहुणो हिअअत्थविसस्स हत्थाब्भासं उवअदा ॥ (सुष्ठु तावदात्मच्छन्दचारिणी कृतास्मि । याहम-मुष्य पूरुवंशप्रत्ययेन मुखमधोर्हृदयस्थविषस्य हस्ताभ्याशमुप-गता)

(पटान्तेन मुखमावृत्य रोदिति)

शार्ङ्ग—इत्थमात्मकृतं प्रतिहतं चापलं दहति ।

---

व्यापारा हृदयपथमवतरन्ति न तु त्वत्परिणयनमेकं न चान्येन प्रतिबोधितं वेत्यर्थः । केचित्तु प्रथितं दुष्यन्तचरितमित्यलक्षणे हेतुः । इदं त्वदुक्तं धर्मध्वजित्वं इति भद्र इति तथापीति चापठित्वा व्याचक्षते ॥

शोचति सुट्ठु इत्यादि । "बलवत्सुष्ठु" इत्यमरः । आ-त्मच्छन्दचारिणी कृता अनेनेति शेषः । अत्राहमेवापराद्धेति सोपालम्भमाह येत्यादि । पूरुवंशप्रत्ययेन आभिजात्यं विश्वस्ये-त्यर्थः । मुखमधोः मधुरभाषिणः । हृदयस्थविषस्य क्रूरहृदय-स्य । मधुपदेन मधुरवचनस्य विषपदेन क्रौर्यस्य च निगरणा-दतिशयोक्तिः । विशेषणाभ्यामतिखलस्वभावत्वमुक्तम् । यथाह "मुखं पद्मदलाकारं वचश्चन्दनशीतलम् । हृदयं वज्रकठिनं त्रि-विधं धूर्तलक्षण"मिति । हस्ताभ्याशमुपगता वशंवदाभूवम् । अ-त्र निर्वेददैन्यादयो भावाः । एभिरुपस्कृतो रोदनाद्यनुभावितो नायकक्रौर्यनिमित्तको नायिकायाः शोकोऽत्र व्यज्यमानः करुण-रसत्वमुपगच्छति । भीता वेपते भगवति वसुन्धरे क्रन्दि-तुं च प्रवृत्ता इत्यादिना चास्यैव परिपोषो वर्णयिष्यते ॥

अथ तदा शकुन्तलावस्थामनुसंदधानः "सहसा विदधीत

अतः परीक्ष्य कर्तव्यं विशेषात् संगतं रहः।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४ ॥

राजा — अयि भोः किमत्रभवतीप्रत्ययादेवास्मान संवृतदोषाक्षरेण क्षिणुथ ।

---

न क्रियामविवेकः परमापदां पदम्'' इति न्यायं मनसि कृत्वा शार्ङ्गरवः शोचति । इत्थमित्यादि । आत्मकृतं बन्धुजनमप्यनवेक्ष्य स्वयमेवानुष्ठितम् । अत एव प्रतिहतं निषिद्धम । चापलमनालोचितकारित्वम् । इत्थं दहतीति संबन्धः । वर्तमानप्रत्ययेन दहनावसानं न दृष्टमिति द्योत्यते । आत्मानं बन्धुजनं चेति शेषः । अत इति । संगतमित्यपकृष्यते सौहृदमित्यर्थः । परीक्ष्य येन संगतं करोति तस्य मनः परीक्ष्येत्यर्थः । विशेषादिति । रहस्संगतं गान्धर्वलक्षणम् । विशेषतः परीक्ष्य कर्तव्यमित्यर्थः । प्रतिविधानाभावादिति भावः । संगतस्य परीक्ष्य कर्तव्यत्वे हेतुमाहाज्ञातेति । वैरीभवति पीडाकरं भवति । केचित्तु । परीक्ष्य बन्धुभिः सह परीक्ष्य कर्तव्यं सर्वमिति शेषः । विशेषादित्याद्यर्थे हेतुरज्ञातेत्यादीत्याहुः । अत्र काव्यलिङ्गम । मतिर्भावः ॥

अथ राजा शकुन्तलावचनप्रत्यायितस्य मुनेः स्निग्धकथनेन रुषितमतिराहायि भो इति । अत्रभवतीति गम्भीराक्षेपपरम । तत्प्रत्ययादेवेत्येवकारेण सत्यवादिनि मयि विश्वासलवोऽपि नोत्पद्यत इति द्योत्यते । अस्मानिति सत्यवादित्वाद्यर्थान्तरसंक्रमितम् । संवृतदोषाक्षरेण शकुन्तलादोषसंकीर्तनव्याजेनाच्छादितास्मद्दोषाक्षरेण वचसेत्यर्थः । दोषसंकीर्तनस्य गौरवमक्षरपदेन द्यो-

शार्ङ्ग—(सासूयम्) श्रुतं भवद्भिरधरोत्तरम् ।

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥ २५ ॥

---

त्यते । क्षिणुय हिंस्य । अधिक्षिपथेत्यर्थः । अथ तदुक्तमस- ह्मानो मुनिरात्मीयानाह । श्रुतमित्यादि । श्रुतमित्यत्र प्रश्नका- क्वायमस्मान् विजिगीषया व्यवहरतीति द्योत्यते । अधरोत्तरं व- चनतारतम्यम् । अधरमपकृष्टमुत्तरमिति केचित् । आ जन्मन इति । शाठ्यं परातिसंधानं । तस्य जनस्य मुनिजनस्येत्य- र्थः । परातिसंधानं तत्प्रतिपादकं कौटिल्याद्यर्थशास्त्रम । अधी- यते अनेनार्थशास्त्रे वेदवद्बहुमानातिशयो द्योत्यते । विद्येति इयं नः कुलविद्येति मत्वा । आप्तवाचः प्रमाणभूतवचसः । अत्रार्धद्वयेऽपि विपरीतलक्षणया काका वा मुनीनां वचसां प्रा- माण्यं शाठ्यं वचसामप्रामाण्यं च बोध्यत इति वक्रोक्तिः । अनेन स्ववचनानां भूतार्थत्वं नायकवचनानामनृतत्वं च भङ्ग्या प्रतिपाद्यत इति सामान्यनिबन्धनाप्रस्तुतप्रशंसा च । अथवा अधरो- त्तरं विपर्ययः । यथा महाभारते "अधर्मेण जितो धर्मः प्रवृत्तमधरो- त्तरम् । अर्मिष्ठयाभिवृत्तासि दुहित्रा वृषपर्वण" इति । तत्प्रकारमाह। आ जन्मन इति । अविदितशाठ्यानामिदं वचनमप्रमाणं शाठ्यपण्डित- स्याम्य वचनं प्रमाणमित्यनेनोक्तमधरोत्तरं भवद्भिः श्रुतं किमित्यर्थः । अस्मिन पद्येऽप्रस्तुतप्रशंसेत्र । असूयादयो भावाः ॥

राजा—भोः सत्यवादिन्नभ्युपगतं तावदस्माभिरेवम् । किं पुनरि-
मामतिसन्धाय लभ्यते ।

शार्ङ्ग—विनिपातः ।

राजा—विनिपातः पौरवैः प्रार्थ्यत इति श्रद्धेयमेतत् ॥

शार—शार्ङ्गरव ! किमुत्तरोत्तरेण अनुष्ठितो गुरुसंदेशः । प्रतिनि-
वर्तामहे वयम् । राजन् !

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २६ ॥

गौतमि ! गच्छाग्रतः ।

(प्रस्थिताः)

---

अथ मुनिजनाधिक्षिप्तः सोपहासमाह भो इति । सत्यवादिन् भवानेव सत्यवादीति सोल्लुण्ठोक्तिः । तावत् प्रथमम् । एवं परातिसन्धानलक्षणमनृतवादित्वम् । अयमभ्युपगम्यानुवादः । अथ "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायेनाह किं पुनरिति । किं पुनर्लभ्यते न किमपीत्यर्थः । कुपितस्तदुत्तरमाह विनिपात इति । अधर्म इत्यर्थः । लभ्यत इत्यनुषङ्गः । विनिपात इति । पौरवैः न केवलं भयेत्यर्थः । श्रद्धेयमिति । अत्र विपरीतलक्षणा । अश्रद्धेयमित्यर्थः । क्वचित्तथा पाठः । असत्यमप्यश्रद्धेयं न वदेदिति नयो द्योत्यते ॥

भो इति । उत्तरोत्तरेण उपर्युपरि व्यवहारेण किं तद्विरमेति भावः । कुत इत्यत्राहानुष्ठित इति । अनन्तरकर्तव्यमाह प्रतीति । अथ कार्यमुपसंहरन् राजानमाह तदिति । तत् यतो वयमनुष्ठितगुरुनिदेशा गमनोत्सुकाश्च तस्मात् । एषा भवतः कान्ता इति । मा भूदस्यां परपरिग्रहशङ्केति भावः । किं चैषा त्वत्करे समर्पितेति च । अत

शकु---हं इमिणा दाव किदवेण विप्पलद्धम्हि । तुम्हे मं परिच्चअह । (हं अमुना तावत् कितवेन विप्रलब्धास्मि । यूयं मां परित्यजथ)

(अनुप्रतिष्ठते)

गौत--(स्थित्वा) वच्छ संगरव अणुगच्छइ णो करुणपरिदेविणी संउंदळा । पच्चादेसपरुसे भत्तुणि किं वा पुत्तिआ करेदु ॥ (वत्स शार्ङ्गरव अनुगच्छति नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा पुत्रिका करोतु)

शार्ङ्ग--(सरोषं परावृत्य) पुरोभागे किं स्वातन्त्र्यमवलम्बयसे ।

---

आह त्यजेत्यादि । कामचाराभ्यनुज्ञाने हेतुमाहोपपन्नेति । उपपन्ना युक्ता । हीति हेतौ प्रसिद्धौ वा । दारेषु विषये । सर्वतोमुखी त्यागे चोपादाने च प्रवृत्ता । अत्रार्थान्तरन्यासः । मतिर्भावः । इदं शार्ङ्गरववचनमिति केचित् ॥

हमित्यादि । हमिति दुःखासहत्वद्योतकम् । तावत् प्रथमत् । कितवेनेति विप्रलम्भस्य बुद्धिपूर्वकत्वमाविष्करोति । विप्रलब्धा वञ्चिता । परित्यजथेति । अत्र काका मा परित्यजथेति द्योत्यते । वत्स इत्यादि । अत्र शकुन्तलाया दयनीयत्वं द्योत्यते । अत एव पुत्रिकेति । अनुकम्पायां कः । किं वा करोत्विति । अस्या अनन्यशरणत्वादस्मदनुगमनमेव किन्नु खलु समुचितमिति भावः ॥

पुरोभाग इत्यादि । पुरोभागे दुष्टे । किमित्यादि । ।म

शकु—(भीता वेपते)

शार्ङ्ग—शकुन्तले !

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ २७ ॥

तत्तिष्ठ । साधयामो वयम् ॥

राजा—भोस्तपस्विन् किमत्रभवतीं विप्रलपासि ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २८ ॥

---

स्मानुगम इति भावः । कुत इत्यत्राह यदीति । तथा त्वमसि यदीति संबन्धः । इममेवार्थं विवृणोत्युत्कुलयेति उल्लङ्घितकुलोचिताचारया पांसुलयेत्यर्थः । पक्षान्तरमाहाथेति । तुशब्दः पूर्वस्माद्विशेषे । शुचि व्रतं पातिव्रत्यम् । पतिकुले भर्तृगृहे । दास्यमपि दास्यस्य निकृष्टत्वमपिशब्दो द्योतयति । क्षमं योग्यम् । तस्मादत्रैव स्थातव्यमिति भावः । तदेव व्यक्तमाह तिष्ठेति । केचित्तु गौतमीं प्रति पुरोभाग इत्याद्युक्तिः । किं स्वातन्त्र्य मवलम्ब्यते । "भर्ता रक्षति यौवन" इति न्यायमुल्लङ्घ्य तस्याः स्वातन्त्र्यं किमनुमन्यते । तर्ह्यनन्यशरणयानया किं कर्तव्यमित्यत्र-शकुन्तलामाह शकुन्तल इत्यादीत्याहुः ॥

भो इति । अत्रभवतीमिति पूज्यत्वकथनेनास्याः परपरिग्रहप्रतीतिः विशदीक्रियते । विप्रलपासि विरुद्धं प्रलपासि । गच्छन्तीं मा स्मानुगम इति । अथ त्वदुपायप्रयोगेणात्रासीना-

शार्ङ्ग--यदि पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवान् तदा कथमधर्मभीरुता ।

राजा--भवन्तमेवात्र गुरुलाघवज्ञं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥

---

मध्येनां न स्वीकरिष्यामीति सदृष्टान्तं सामान्यमुखेनाह । कुमुदानीति ।. वशिनां जितेन्द्रियाणाम् । परस्य परिग्रहो भार्या तस्य संश्लेषः स्वीकारः तत्पराङ्मुखी ततो निवृत्ता । वृत्तिर्मनोवृत्तिः । किं पुनः प्रवृत्तिरिति भावः । अस्य सामान्यस्य स्वास्मिन पर्यवसानादप्रस्तुतप्रशंसा । पूर्वार्द्धे वैधर्म्येण दृष्टान्तश्च । यद्वा तद्वाक्यार्थो वशिनामित्यादिसामान्यसमर्थक इत्यर्थान्तरन्यासः । एवकारद्वयेन चन्द्रसूर्ययोः प्रेमप्रवृत्तेर्वशित्वानुरूपं प्रतिनियतत्वमुच्यते । अत्रापि मतिर्भावः ॥

अथ वशिनामित्याद्यधर्मवैमुख्योक्तिमसहमानः सरोषमाह । यदीति । पूर्ववृत्तमतीतं रहोवृत्तम् । अन्यसङ्गात् अन्तःपुरस्त्रीजनसङ्गात् । राज्यतन्त्रसङ्गाद्वा । तदेत्यादि । एवंविधस्य तव नास्त्येवाधर्माद्भयमित्यर्थः । अथ तदानीं संकटे निपतितो राजा पुरोहितमाह । भवन्तमित्यादि । अत्रास्मिन् संकटे । गुरुलाघवज्ञं दोषस्य बलाबलज्ञमिति हेतुगर्भम् । किं पृच्छ्यत इत्यत्राह । मूढ इति । मूढः विस्मृतपूर्ववृत्तः । इति संशये मम मस्या वचसि चाप्रामाण्यसंशये सतीत्यर्थः । तेन परिणयनसंशय इति यावत् । दारत्यागी दारत्यागपातकी । पांसुलः

पुरोहितः—(विचार्य) यदि तावदेवं क्रियताम् ।

राजा—अनुशास्तु मां पुरोहितः ।

पुरो—अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत् त्वं साधुभिरादिष्टपूर्वः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रः तल्लक्षणोपेतो भविष्यति अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये च पितुरस्याः समीपनयनमवास्थितमेव ।

राजा—यथा गुरुभ्यो रोचते ।

पुरो—वत्से अनुगच्छ माम् ।

शकु—भअवादि वसुहे देहि मे विवरम् । (भगवति वसुधे देहि मे विवरम्)

---

पातकी । अस्याः परित्यागपक्षः परिग्रहपक्षश्च दोषापातभयान्न श्रेयान् तत् कोऽत्र कर्तव्य इत्यर्थः । वितर्कादयोऽत्र भावाः ।

पुरोहितो विचार्य कर्तव्यमाह यदीत्यादि । केचित्तु अथ राजा परिणयनस्यानिश्चये इयं न स्वीकर्तव्येत्याशयेन शार्ङ्गरवमाह भवन्तमिति । गुरुलाघवज्ञं पृच्छामीत्युपहासोक्तिः । परस्त्रीस्पर्शपांसुल इत्यनेन परस्त्रीपरिग्रहदोषस्य गौरवमाविष्क्रियते । तदानीं पुरोहितो राज्ञः परिणयनानिश्चयेन संकटमवधार्य तन्निवृत्त्युपायं निरूप्याह यदीत्यादीत्याहुः । यदि संशयश्चेदित्यर्थः । तावत् प्रथमम् । क्रियतां निश्चीयताम् । अनुशास्त्विति पुरो-

(रुदती निष्क्रान्ता पुरोधसा सह तपस्विभिश्च)

राजा — (शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति)

(नैपथ्ये)

आश्चर्यमाश्चर्यम् ।

राजा—(आकर्ण्य) किन्नु खलु स्यात् ।

(प्रविश्य)

पुरोहितः—(सविस्मयः) देव अद्भुतं खलु संवृत्तम् ।

राजा—किमिव ।

पुरो—परावृत्तेषु कण्वशिष्येषु ।

सा निन्दन्ती स्वानि भाग्यानि बाला

बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

---

हित इत्यनेनानुशासनाधिकारो द्योत्यते । त्वं साधुभिरित्यादि । प्रथममेव सारङ्गानुधावनप्रस्ताव एव । अनेन वैखानसोक्तं स्मारयति । अवस्थितमेव पारिशेष्यान्नियतमेव । यथेत्यादि राज्ञस्तदनुवादः । अथ पुरोहितमनुप्रस्थिता शकुन्तलोभयलोकभ्रंशमसहमाना सनिर्वेदं देहत्यागाय जानकीव वसुधामाशंसते : भगवति इति । शकुन्तलागतमेवेति । तद्विषयं वृत्तान्तमेवेत्यर्थः । शकुन्तलामेवेत्यपि पाठः । अनेन राज्ञः शकुन्तलानुरागवासनाबलेन चित्तव्याक्षेप उक्तः । औत्सुक्यादयोऽत्र भावाः ॥

सा निन्दन्तीति । सा पत्या स्वबन्धुभिश्च परित्यक्तत्वादशरणा । स्वानि भाग्यानि समागमकाले नायकेन प्रणयवशात् प्रतिज्ञातानि प्रधानमहिषीत्वादीनि । पितृगृहे पूर्वं तपस्विनां वात्सल्यातिशयादाशीःप्रदानसिद्धानि कल्याणानि लोकोत्तरभर्तृलाभनिमित्तानि रूपादीनि चेत्यर्थः । बाला कर्तव्यमजानती । सा बालेत्याभ्यां दयनीयत्वं ध्वन्यते । बाहूत्क्षेपं दुःखातिशयाद्बाहुद्वयमूर्ध्वं क्षिप्त्वा । "द्वितीयायां चे"ति णमुल् । चकारो यौगपद्ये । तदाकर्ण्य विस्मयहेतुश्रवणौत्सुक्येन

राजा—किमन्यत् ।

पुरो—स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-
दाक्षिप्यैनां ज्योतिरेकं तिरोऽभूत् ॥ ३० ॥

(सर्वे विस्मयं रूपयन्ति)

राजा—भगवन् प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते । विश्राम्यतु भवान् ।

पुरो—विजयस्व ।

(इति निष्क्रान्तः)

राजा—वेत्रवति पर्याकुलोऽस्मि । शयनगृहमार्गमादेशय ।

प्रती—इदो इदो देवो । (इत इतो देवः)

---

मध्ये पृच्छति । किमन्यदिति । अन्यदाह स्त्रीति । स्त्रीसंस्थानं स्त्रीसमानाकृति । अप्सरस्तीर्थं एतन्नामोपपत्तिरुत्तराङ्के व्यक्तीभविष्यति । प्रतीति शेषः । अप्सरस्तीर्थं लक्षीकृत्येत्यर्थः । आप्सरस्तीर्थमिति छेदः । आङ्मर्यादाभिविध्योरित्यव्ययीभाव इति केचित् । आरात्समीपे । ज्योतिरेकं काप्यप्सरा इत्यर्थः । सर्वे इत्यादि । नैपथ्य इत्यादिनैतदन्तेनाद्भुतरसो वर्णितः ॥

अथ तत्तिरोधानं न मे दुःखावहमित्याह भगवन्नित्यादि । प्रागपि । इतः प्रस्थानात् पूर्वमपि । केवलमिदानीमेव । सोऽर्थः शकुन्तलालक्षणः । प्रत्यादिष्ट एव परपरिग्रहभूतत्वादनपेक्षित एव अतस्तत्तिरोधानेन मे न क्षतिरिति भावः । अतश्च किं वृथा तर्केणान्विष्यते । निष्प्रयोजनेन परस्परवचनेन परिग्रहो वा न वा सा कुत्र गता कया नीता इति विचार्यते । तन्मास्त्वित्यर्थः । अत आह विश्राम्यत्विति । अथ मुनिशापबलेन नष्टस्मृतिकोऽपि नायको नायिकावियोगकाले वासनाबलेन मनसि समुज्जृम्भमाणं कमपि संतापमनुभवन् प्रतीहारीमाह । वेत्रवतीत्यादि । अथ पर्याकुलत्वस्य कारणमन्विष्यते ।

(परिक्रामतः)

राजा—(स्वगतम्)

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥ ३१ ॥

(निष्क्रान्तौ)

इति पञ्चमोऽङ्कः ॥

---

काममिति । काममित्यर्द्धाङ्गीकारेण स्मरणाभावस्याप्रामाण्यं ख्याप्यते । प्रत्यादिष्टां दूरनिरस्तत्वाददर्शनं गताम् । स्मरामि न परिग्रहं पूर्वं परिग्रहत्वेनाङ्गीकृतवानस्मीति न स्मरामीत्यर्थः । अनेन विस्मरणस्य चापल्यं स्वयमेवाङ्गीकृतवानिति व्यज्यते । तथापि यदनन्तरनीत्या हृदयसंवादस्तु भवत्येवेत्याह बलवदित्यादि । बलवद्दूयमानत्वान्मम हृदयं तु मत्परिग्रहभूतेयमिति मां प्रत्याययतीवेत्यर्थः । प्रत्यायनस्यास्प ष्टतामिवशब्दो द्योतयति । मे हृदयमित्यनेन हृदयस्य पूर्ववत् प्रामाण्यं ख्याप्यते । अत्र स्मरणाभावेऽपि पीडाकथनाद्विभावना । मतिमूलको वितर्को भावः । अनेन श्लोकेनोत्तराङ्कार्थबिन्दुरुपक्षिप्तः । अत्राङ्के नायकस्य नायिकां प्रति यत्प्रतिकूलवचनप्राचुर्यं वर्णितं तदुत्तरत्र वर्णयिष्यमाणस्य विप्रलम्भस्य उद्दीपनप्रकर्षाय । अत्रोपक्रमे किन्नु खलु गीतमित्यादिना पर्याकुलस्मिप्रतीत्यन्तेन उपसंहारे पर्याकुलोऽस्मि काममित्यादिना च सन्दर्भेणैकरूपेण रतेरुन्मेषो दर्शित इत्यन्यदपि सहृदयैः स्वयमालोचनीयमिति सर्वं शिवम् ॥

इति साराथदीपिकायां शाकुन्तलव्याख्यायां

पञ्चमोऽङ्कः ॥

# षष्ठोऽङ्कः ।

(ततः प्रविशति नागरिकः स्यालः पश्चाद्बद्धं

पुरुषमादाय रक्षिणौ च)

रक्षिणौ——(ताडयित्वा) हंहो कुम्भीळअ कहिं तुए एशे मणिबन्धणुक्कीण्णणामहेयंकिए ळाअकीए अंगुलीअए शमाशादिए । (हंहो कुम्भीलक कस्मिन् त्वया एतन्मणिबन्धनोत्कीर्णनामधेयाङ्कितं राजकीयमङ्गुलीयकं समासादितम् । )

पुरुषः——(भीतिं नाटयित्वा) पशीदन्तु भावमिश्शेः । अहके ण

---

अथ षष्ठाङ्कः । नायकस्य पश्चात्तापपरिपोषितो विप्रलम्भः प्राधान्येनात्र वर्णयिष्यते । सार्थवाहप्रस्तावे पुनः पुत्रशोकप्रकृतिकः करुणो मातलिप्रस्तावे वीरो रौद्रश्च । तत्रादौ विप्रलम्भस्य पूर्वरङ्गभूतां शापनिवृत्तिं प्रदर्शयितुं प्रवेशकमारभते ततः प्रविशतीति । नागरिकः नगरवासिनां योगक्षेमसंपादनाय राज्ञा अधिकृतः । स्यालः राज्ञः कार्योपयोगी हीनजातिः कश्चित् । यथोक्तं दशरूपके । "म्लेच्छाभीरशकाराद्याः स्वस्वकार्योपयोगिनः" इति । राज्ञः स्यालस्तु राष्ट्रिय इत्यमरः । पश्चाद्बद्धं बाहू पृष्ठतः संगमय्य तयोर्बद्धम् । हंहो इति । हंहो इत्यव्ययं नीचजनसंबोधने । कुम्भीलकश्चोरः । मणीति । मणीनां बन्धने बद्धेषु मणिष्वित्यर्थः । उत्कीर्णमुल्लिखितलिपि । कस्मिन् समासादितमिति । अनेन त्वयैतन्मुषितमिति द्योत्यते । पशीदन्त्विति भावमिश्राः । मान्यो भावेति वक्तव्य इति नाट्यपरिभाषा । अहमित्यादि । न खल्विदं स्तेयलब्धमिति भावः । अथायं चोर इति निश्चित्य छलेन

ईदिशकम्मकाळी । (प्रसीदन्तु भावमिश्राः । अहं नेदृशक-र्मकारी)

प्रथमः-- किं खु शोभणे बह्मणत्ति करिअ पडिग्गहे दे दिण्णे ॥ (किं खलु शोभनो ब्राह्मण इति कृत्वा प्रतिग्रहस्ते दत्तः)

पुरुषः--शुणुह दाणीं । अहके शक्कावदाळवाशी धीवळे । (शृणुतेदानीम् । अहं शक्रावतारवासी धीवरः)

द्वितीयः-- पाडच्चर किं अह्मेहिं जादी पुच्छिदे । (किमस्माभिर्जातिः पृष्टा)

स्यालः-- कहेदु सव्वं अणुक्कमेण । मा णं अन्तरा पडिबन्धह । (कथयतु सर्वमनुक्रमेण । मा एनमन्तरा प्रतिबध्नीतम्)

उभौ— जं आवुत्ते आणवेदि । (यदावुत्त आज्ञापयति)

स्यालः-- कहेहि कहेहि ॥ (कथय कथय)

---

तमपहसति । किण्णु इति । शोभनः आभिजात्यादिगुणशाली । ते तुभ्यम् । प्रतिगृह्णात इति प्रतिग्रहो देयद्रव्यम् ॥

शुणुहेति । शृणुत परमार्थमिति शेषः । किं तदित्याहाहमिति । शक्रावतारः शचीतीर्थम् । धीवरो दाशः । अथ तं भीषयन्नाह पाडच्चर इति । पाटच्चरः पटुचोरः । किमित्यादि । इदमङ्गुलीयकं कुतो लब्धमिति पृष्टं न तु जातिरित्यर्थः । कथयत्विति एष इति शेषः । मेत्यादि । एतल्लाभश्रवणपर्यन्तं मा प्रतिबध्नीतमित्यर्थः । एवं भीषिकादिनेत्यादिः । जं इति । आवुत्तेति संबन्धित्वेन कथनमावर्जनार्थम् । यथा “निखिलमाचिराद्भ्रातरुक्तं मयाय”दित्यादौ । “भगिनीपतिरावुत्त” इत्यमरः । स्यालः पुरुषयोर्न भगिनीपतिः ॥

पुरुषः— अहके जालुग्गालादिहीं मच्छबन्धणोपाएहीं कुडुंबभळणं कळेमि । (अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि)

स्यालः— (प्रहस्य) विसुद्धो दाणीं आजीवो । (विशुद्ध इदानीमाजीवः)

पुरुषः— भट्टा मा एव्वं ।

सहजे किल जे विणिन्दिए
ण हि तक्कम्म विवज्जणिज्जए ।
पशुमाळणकम्मदाळुणे
अणुकम्पामिदु एव्व शोत्तिए ॥

(भर्तः मैवम् ।

सहजं किल यद्विनिन्दितं
न खलु तन् कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणः
अनुकम्पामृदुरेव श्रोत्रियः ॥ १ ॥)

---

अहके इति । जालमानायः । उद्गालो नाम शरादिराचितो मत्स्यग्रहणसाधनविशेषः । बलिशादिरादिपदार्थः । मत्स्यबन्धनोपायैरिति । तैर्मत्स्यान्निगृह्य तैरित्यर्थात् क्षिप्यति । तच्छ्रुत्वा सोपहासमाह विसुद्धो इति । विशुद्ध इत्यत्र विपरीतलक्षणा निकृष्ट इत्यर्थः । आजीवो जीवनोपायः । अथ तत्परिहासं परिहर्तुकामः पुरुषो निकृष्टत्वेऽपीदं न त्याज्यमित्याह सहजे इति । सहजं धर्मतया विहितम् । यस्य यत् कर्म निन्दितमपि सहजं तस्य तत् कर्म न खलु विवर्जनीय-

स्यालः— तदो तदो । (ततस्ततः)

पुरुषः— अह एक्कदिअशे खण्डशो लोहिअमच्छे मए कप्पिदे । तदा तश्श उदलब्भन्तले इदं लअणभाशुलं अग्गुळीअअं दक्खिअ पच्छा शे विक्कआअ दंशअन्ते गहिदे भावमिश्शेहिं । मालेह वा मुञ्चेह वा । इअं शे आअदी । (अथ एकदिवसे खण्डशो लोहितमत्स्यो मया कल्पितः । तदा तस्योदराभ्यन्तरे इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चात्तस्य विक्रयार्थं दर्शयन् गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । इयमस्यायतिः)

स्यालः— जाणुअ विस्सगन्धी गोघादी मच्छबन्धो एव्व दाव णिस्संसअं अङ्गुळीअअं से विमरिसिदव्वं । राअउळं एव्व गच्छम्हो । (जानुक विस्रगन्धी गोखादी मत्स्यबन्ध एव तावन्निस्संशयमङ्गुलीयकमस्य विमर्शनीयं, राजकुलमेव गच्छामः)

रक्षिणौ— तह । गच्छ अले गण्डभेदअ । (तथा । गच्छ अरे गण्डभेदक)

(सर्वे परिक्रामन्ति)

---

मित्यर्थः । किं त्वनुष्ठेयमेवेति भावः । उक्तं सामान्यं विशेषेण समर्थयति । पश्विति । दारुण एवेति संबन्धः । निसर्गतो दयामृदुरपि श्रोत्रियो यज्ञाङ्गतया वेदविहितमिति दारुणं पशुमारणकर्म समाचरत्येवेत्यर्थः । अत्रार्थान्तरन्यासः । पूर्ववाक्यार्थस्य स्वास्मिन पर्यवसानादप्रस्तुतप्रशंसा । मृदुरपि दारुण इति विरोधाभासश्च ॥

अहेत्यादि । मारयत वा मुञ्चत वेति कामचाराभ्यनुज्ञाने लोट् । आयतिरागमः । जाणुअ इति । विस्रगन्धीति मत्स्यबन्ध एवेत्यत्र हेतुः । विस्रं स्यादामगन्धि यदित्यमरः । गोखादी मांसादीत्युपदेशः । गोघातीत्यपि पाठः । इयमुक्तिर्निन्दागर्भा । मत्स्यबन्धो दाशः । अनेन दाशवचनैकभागस्य

स्यालः-- सूअअ इमं गोपुरदुवारे अप्पमत्ता पडिपालह । जाव इमं अङ्गुलीअअं जहागमणं भट्टिणो णिवेदिअ तदोसासणं पडिच्छिअ णिग्गमामि । (सूचक अमुं गोपुरद्वारे अप्रमत्तौ प्रतिपालयतं, यावदिममङ्गुलीयकं यथागमनं भर्तुर्निवेद्य तच्छासनं प्रतिगृह्य निर्गच्छामि)

उभौ— पविशदु अॲओ शामिप्पशादाअ । (प्रविशत्वार्यः स्वामिप्रसादाय)

(निष्क्रान्तः स्यालः)

प्रथमः — जाणुअ चिळाअदि खु आवुत्ते । (जानुक चिरायते खल्वावुत्तः)

द्वितीयः-- णं अवशलोपशप्पणीआ लाआणो । (नन्ववसरोपसर्पणीया राजानः)

प्रथमः--जाणुअ फुल्लन्ति मे हत्था इमश्श वहहसुमणसं पिणद्धुम् । (जानुक स्फुरतो मे हस्तावमुष्य वध्यसुमनसं पिनद्धुम)

(इति पुरुषं निर्दिशति)

---

सत्यत्वमनूदितम । अथाप्यस्याङ्गुलीयलाभो विचार्य इत्याह । तावदिति । तावदद्य । तस्मादिति वा । अङ्गुलीयकं तल्लाभः । गच्छेति । गण्डभेदमर्हतीति गण्डभेदकः । जाणुअ इति । जानुकेति रक्षिणोरेकस्य सूचकेत्यन्यस्य च नाम । स्फुरतः प्रसरतः । वध्यसुमनसं वध्यचिह्नभूतां मालाम् णारुहदीति । अकारणं यतोऽहं निरपराध इति भावः । मारणः मारयिता । एशे इति । शुनोमुखमित्यादि । अयमिति शेषः । अस्य वधमात्रं वा शूलाधिरोहणं वा भविष्यतीत्यर्थः । सूअअ इति । मुच्यतामित्यत्र हेतुरुपपन्न इत्यादि । अतोऽयं न चोर इति भावः ॥

पुरुषः— णाळुहदि भावे अकारणमारणे होदुम् । (नार्हति भावोऽकारणमारणो भवितुम्)

द्वितीयः— (विलोक्य) एशे अह्माणं शामी लेहपत्थे गहिअ राअसासणं आअच्छदि । शुणोमुहं वा दक्खिश्शदि गिद्धवली वा भविश्शदि । (एषोऽस्माकं स्वामी लेखपत्रे गृहीत्वा राजशासनमागच्छति । शुनो मुखं वा द्रक्ष्यति गृध्रबलिर्वा भविष्यति)

(प्रविश्य)

श्यालः— सूअअ मुञ्चदु एसो जालोअजीवि । उववण्णो किळ अंगुळीअअस्स आअमो । (सूचक मुच्यतामेष जालोपजीवी । उपपन्नः किलाङ्गुलीयस्यागमः)

प्रथमः— जह भणादि भवम् । (यथा भणति भवान्) जाणुअ एशे जमशदणं दक्खिअ पडिणिवुत्ते । (जानुक एष यमसदनं दृष्ट्वा प्रतिनिवृत्तः)

(पुरुषं परिमुक्तबन्धनं करोति)

पुरुषः— (श्यालं प्रणम्य) भट्टा तवकेरअं मे जीविदम् (भर्तस्तवकेरकं मे जीवितम्)

श्यालः— एसो भट्टिणा अंगुळीअअमूळ्ळसम्मिदो पारिदोसिओ दिण्णो । (एष भर्त्राङ्गुलीयकमूल्यसम्मितः पारितोषिको दत्तः)

(इति पुरुषाय स्वं प्रयच्छति)

---

भट्टा इति । तवकेरकं त्वदीयम् । तव कर इत्यपि पाठः । एसो इति । सम्मितस्तुल्यः । पारितोषिकः परितोषनिमित्तो देयद्रव्यसंचयः । भट्टाळकेणेति । भट्टारकेण राज्ञा । राजानुग्रहेण पुरुषं प्रशंसन् । दे इति । सामन्यवधारणे । पतासिव इति कुतस्तर्हि बहुमतिरि-

पुरुषः— (सप्रणामं प्रतिगृह्य) भट्टाळएण अणुगहीदाह्मि । (भट्टारकेणानुगृहीतोऽस्मि)

सूच—दे णाम अणुगहीदाः । जे शूळादो अवदारिअ हत्थिकन्धं पडिट्ठाविदे । (ते नामानुगृहीताः । ये शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापिताः)

जानु— आवुत्त रण्णो परिदोसं कहेहि । तेण खु अङ्गुळीएण भट्टिणो सम्मदेण होदव्वम् । (आवुत्त राज्ञः परितोषं कथय । तेन खल्वङ्गुलीयेन भर्तुः शर्मदेन भवितव्यम्)

स्यालः—ण तस्सिं महारुहं रदणं भट्टिणो बहुमदत्ति तक्केमि तस्स दंसणेण किंवि अभिमदं भट्टिणो सुमरिदं । मुहुत्तअं पकिदिगंभीरोवि पज्जुस्सुअमणा आसि । (न तस्मिन महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन किमप्यभिमतं भर्तुः स्मृतम् । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत्)

सूच—सेविदण्णाम आवुत्तेण (सेवितं नामावुत्तेन)

स्यालः—णं भण इमश्श किदे मच्छशत्तुणत्ति । (ननु भणामुष्य कृते मत्स्यशत्रोरिति)

(पुरुषमसूयया पश्यति)

पुरुषः— इदो अद्धं भट्टारअ तुह्माणं सुमणोमुळ्ळं होदु । (इतोऽर्द्धं भट्टारक युष्माकं सुमनोमूल्यं भवतु)

---

त्यत्राह तस्येति । स्मृतमित्यत्र हेतुर्मुहूर्तमित्यादि । प्रशंसते सेविदं इति । नामेति प्रशंसायाम् । सेवाफलं तु न ममेत्याह णं इति । सासूयानिरीक्षणमर्थकामुकत्वादिति निश्चित्याह इदो इति । अर्द्धमिति नपुंसकनिर्देशेन समप्रविभाग उक्तः । सुमनोमूल्यं पुष्पमूल्यमिति विनयोक्तिः । वध्यचिह्नभूतमालापनयनमूल्यमित्यर्थो वा । सौहार्दं सूचयन्नाह धीव-

जानु— एदं जुज्जइ । (एतद्युज्यते)

स्यालः— धीवर महत्तरो प्पिअवअस्सो दाणीं संवुत्तो । ता कादंबरीसक्खिअं अह्माणं पढमसोहिदं इछीअदि । ता सोण्डिआभवणं एव्व पविसाम ॥ (धीवर महत्तरः प्रियवयस्य इदानीं संवृत्तः । तस्मात् कादम्बरीसख्यमस्माकं प्रथमसौहृदमिष्यते । तस्माच्छुण्डिकाभवनमेव गच्छामः)

(निष्क्रान्ताः सर्वे)

(प्रवेशकः)

(ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः)

सानु—णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसण्णिज्झं । जाव साहुजणस्स अभिसेयकालोत्ति । संपदं इमस्स राअसिणो उदन्तं पच्चक्खीकारिस्सम् । मेणआसंबन्धेण सरीरभूदा दाणीं मे सउंदला । ता एताण्णिमित्तं आदिट्ठह्मि ।

---

क्षेति । कादम्बरी मद्यम् । शुण्डिका तत्सम्पादयित्री । अत्राङ्गुलीयकलाभप्रदर्शनार्थो धीवरवृत्तान्तः प्रकरी । प्रवेशक इति । अत्र राज्ञोऽङ्गुलीयदर्शनं तेन तत्क्षणमेव शापनिवृत्त्या कान्तास्मरणं च प्रतिपादिते । तस्यानन्तरावस्था चाङ्कमुखपात्रैः प्रदर्शयिष्यत इति सर्वं शिवम् ॥

अथाङ्कमारभमाणो नायिकावृत्तान्तस्यात्यन्तविच्छेदाभावाया-प्सरःपदेन सूचितायाः सानुमत्याः प्रवेशमाह तत इति । अथ मारीचाश्रमे मात्रा मेनकया सह निवसन्त्या वसन्ताविर्भावे प्रेयोवियोगदुःखं सोढुमक्षमया शकुन्तलया प्रेयोवृत्तान्तसाक्षात्करणायाप्सरस्तीर्थगमनकाले संदिष्टा सानुमती स्वकार्यं निर्वर्त्य पुनः सुहृत्कार्यं मनसिकृत्याह णिव्वत्तिदमिति । पर्यायेण अप्सरोभिर्वारक्रमेण निर्वर्तनीयमनुष्ठेयम् । निर्वर्तितमित्यत्र हेतुरिदानीमित्यादि । अभिषेककालः

(समन्तादवलोक्य) किण्णु खु उछवे वि णिरुछवारंभं विअ एदं राअकुलं दिस्सइ । अत्थि खु मे विहवो णिध्याणेण सव्वं परिण्णादुम् । किंदु सहीए आदरो माणइद्व्वो । होदु एदाणन्दाव उज्झाणपालिआणं तिरक्खरिणीपडिछण्णा पस्सपरिवत्तिणी भविअ उवलभिस्सम् । (नाट्येनावतीर्य स्थिता) (निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसान्निध्यम् । यावत्साधुजनस्याभिषेककाल इति । साम्प्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि । मेनकासंबन्धेन शरीरभूतेदानीं मे शकुन्तला । तया तन्निमित्तमादिष्टास्मि । किन्नु खलूत्सवेऽपि निरुत्सवारम्भमिवैतद्राजकुलं दृश्यते । अस्ति खलु मे विभवो निध्यानेन सर्वं परिज्ञातुम् । किं तु सख्या आदरो मानयितव्यः । भवत्वेतयोस्तावदुद्यानपालिकयोः तिरस्करिणीप्रतिच्छन्ना पार्श्वपरिवर्तिनी भूत्वा उपलप्स्ये)

---

स्नानसमयः । इतीति हेतौ । स्वकार्यनिर्वर्तनोक्त्या कार्यान्तरस्यायमवसर इति सूच्यते । कृतकृत्यस्य कामेऽधिकार इति न्यायात् । अत आह साम्प्रतमिति । प्रत्यक्षीकरणे हेतुर्मेनकेत्यादि । मेनकासंबन्धेन मेनकापुत्रीत्वेन । शरीरभूता शरीरवत्प्रेमास्पदभूता । अनेन तत्संदेशस्यावश्यानुष्ठेयत्वं द्योत्यते । तया शकुन्तलया । तन्निमित्तं राजर्षिवृत्तान्तप्रत्यक्षीकरणार्थम् । उत्सवेऽपि उत्सवोचितकालेऽपि । विभवः सामर्थ्यम् । निध्यानेन दिव्यदृष्ट्या । दिवि वर्तमानयैव मया दिव्यदृष्ट्या सर्वमपि ज्ञातुं शक्यत इत्यर्थः । किं त्विति विशेषे । सख्या आदरो मानयितव्य इति । मांसचक्षुषा प्रत्यक्षीकरणं हि सख्या शकुन्तलया सन्दिष्टं तत्तथा कर्तव्यमित्यर्थः । उद्यानपालिके विलोक्याह भवत्विति । तिरस्करिणीप्रतिच्छन्ना तिरस्करिणी नामादृश्यत्वकारिणी कापि विद्या । उपलप्स्ये एतं वृत्तान्तमिति शेषः ॥

(ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी ।

अपरा च पृष्ठतस्तस्याः)

प्रथमा —

आतम्महरिअपण्डर जीविदसव्वं वसन्तमासस्स ।
दिठ्या चूदङ्कुर ऋदुमङ्गळ तुमं खु पेक्खामि ॥
(आताम्रहरितपाण्डर जीवितसर्वं वसन्तमासस्य ।
दिष्ट्या चूताङ्कुर ऋतुमङ्गल त्वां खलु पश्यामि ॥ २ ॥)

द्वितीया — सहि परहुदिए किं एआइणी मन्तेसि । (सखि परभृतिके किमेकाकिनी मन्त्रयसे)

प्रथमा — महुअरिए चूदकळिअं दक्खिअ उम्मत्ता परहुदिआ होदि । (मधुकरिके चूतकलिकां दृष्ट्वा उन्मत्ता परभृतिका भवति)

द्वितीया — (सहर्षं त्वरयोपगम्य) कहं उवाट्ठिदो महुमासो । (कथमुपस्थितो मधुमासः)

प्रथमा — महुअरिए तव दाणीं काळो विब्भमोग्गीदाणम् ।

(मधुकरिके तवेदानीं कालो विभ्रमोद्गीतानाम्)

---

तत इत्यादि । चूताङ्कुरमवलोक्य श्लाघते । आतम्म इति । हरितं श्यामम् । आताम्रेत्यादि स्वभावोक्तिः । अनेनाकृत्या रमणीयत्वं द्योत्यते । जीवितसर्वं सर्वजीवितमित्यर्थः । सारतममिति यावत् । दिष्ट्येत्यानन्दे । ऋतुमङ्गलं वसन्तश्रेयस्करम् । यतो ह्यनेनैव वसन्तस्य इतरर्त्वपेक्षया समुत्कर्षः । पश्यामि हृश्यबुद्ध्या विलोकयामि । हर्षोऽत्र भावः । सहीति । किमेकाकिनी मन्त्रयसे । किमुन्मत्तासी-त्यर्थः । श्लेषवक्रोक्त्या प्रतिवक्ति । महुअरिए इति । नन्वहं हि परभृतिका कोकिलेति श्लेषः । महुअरिए इति । पूर्ववत् श्लेषः । त्वं

द्वितीया-- सहि अवलंबस्स मं जाव णं अग्गपादट्टिआ भविअ गहिअ कामदेवच्चणं करेमि । (सख्यवलम्बस्व मा यावदेनमग्रपादस्थिता भूत्वा गृहीत्वा कामदेवार्चनं करोमि)

प्रथमा— जइ मम वि अद्धं अच्चणफळस्स । (यदि ममाप्यर्द्धमर्चनफलस्य)

द्वितीया-- अभणिएवि एव्वं एदं सम्पज्जइ । जदो एकं एव्व जीविदं दुधा दिट्ठं सरीरं । (अभणितेऽप्येवमेतत्संपद्यते । यत एकमेव जीवितं, द्विधा दृष्टं शरीरम्) सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति) अम्महे अप्पडिबुद्धो वि चूदप्पसवो एत्थ बन्धणभंगे सुरभी होदि । (अम्महे अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गे सुरभिर्भवति) (कपोतकं कृत्वा)

तुमं सि मए चूदङ्कुर दिण्णो कामस्स गहीदधणुअस्स ।
पहिअजणजुवइलक्खो पञ्चब्भहिओ सरो होहि ॥
(त्वमसि मया चूताङ्कुर दत्तः कामस्य गृहीतधनुषः ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥ ३ ॥

(चूताङ्कुरं प्रक्षिपति)

---

हि मधुकरिका भृङ्गीति । सहीति । एनं चूताङ्कुरं गृहीत्वेति संबन्धः । जइ इति । तर्ह्यवलम्ब इति भावः । अभणिए इति । एवमेतत् संपद्यते । ममार्चनफलस्यार्द्धं तव सिध्यतीत्यर्थः । अत्र हेतुर्यत इति । अम्महे इति । अम्महे इत्याश्चर्ये । अप्रतिबुद्धोऽपि विकासरहितोऽपि । विकासे सौरभं किमुच्यत इति भावः । बन्धनं वृन्तम् । कपोतकं प्रणामाञ्जलिविशेषम् । तुममि त्यादि । अर्चनमन्त्रोऽयम् ।

(प्रविश्यापटाक्षेपेण)

कञ्चुकी-- मा तावत् । अनात्मज्ञे देवेन प्रतिषिद्धे वसन्तोत्सवे किमाम्रकलिकाभङ्गमारभसे ।

(उभे भीते)

पसीददु अज्जो । अगहीदत्थाओ वअम् । (प्रसीदत्वार्यः । अगृहीतार्थे आवाम्)

कञ्चु— न किल श्रुतमाभ्याम् । यदा वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च । तथा हि ।

---

गृहीतधनुष इति । अनेन युद्धोद्यमः सूच्यते । तेन शरदानस्यौचित्यं च । पञ्चाभ्यधिकः अरविन्दादिभ्यः पञ्चभ्यः शरेभ्योऽतिरिक्तः षष्ठः इत्यर्थः । इदं च कामशराणां पञ्चसंख्याकत्वप्रसिद्धिमनुसृत्योक्तम् । केचित्तु पञ्चसु शरेषु श्रेष्ठ इत्यर्थ इति चूतसामान्यस्य कामशरत्वमभ्युपेत्य व्याचक्षते ॥

प्रविश्येति । अपटाक्षेपेण प्रवेशः संभ्रमं सूचयति । तत्र हेतुः कोपः, तत्र च चूताङ्कुरप्रक्षेपदर्शनम् । मा तावदिति । साम्प्रतमेवं मा कुरुतमित्यर्थः । निषेधप्राथम्यं देवाज्ञागौरवात् । अनात्मज्ञे कर्तव्यमूढे । यद्वा मा तावदिति वैपरीत्ये विरुद्धमेतदित्यर्थः । किं तदित्यत्राह देवेनेति । कलिका मञ्जरी । अज्ञानादेवं कृतमित्याहतुः । पसीददु इति । अगृहीतार्थे आवाम् । आवाभ्यामुत्सवप्रतिषेधरूपार्थो न ज्ञात इत्यर्थः । अथाज्ञानस्यासंभाव्यत्वमाह नेत्यादि । किलेत्यसंभाव्यतायाम् । आभ्यां देवशासनं न श्रुतमित्येतदसंभाव्यमित्यर्थः । कुत इत्यत्राह यदेति । यदा यस्मात् । वासन्तिकैः वसन्ते पुष्प्यद्भिः का-

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
सन्नद्धं यदपि स्थितं कुरवकं तत् कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम् ॥ ४ ॥

सानु— ण एत्थ सन्देहो । महाप्पहावो राएसि । (नात्र सन्देहः । महाप्रभावो राजर्षिः)

---

लाङ्घ्य । अचेतनानां राजशासनानुष्ठानस्यासंभावनामपिशब्दो द्योतयति । तदाश्रयिभिः वृक्षाश्रयिभिः पुंस्कोकिलादिभिः । उक्तमुपपादयति । चूतानामिति । कलिका कुरवकमिति च जातावेकवचनम् । बध्नाति न स्वं रजः न विकसतीत्यर्थः । सन्नद्धमुद्युक्तं विकसितुमित्यर्थात् । यद्वा सन्नद्धं संजातम् । यत् कुरवकं तत् सन्नद्धमनपि कोरकावस्थया स्थितमिति संबन्धः । कण्ठेषु स्खलितं बहिर्नोद्गच्छतीर्थः । गतेऽपि शिशिरे वसन्ताविर्भावेपि । वाक्यत्रयेण पूर्वोक्तमर्थं प्रसाध्यान्यत किमपि संभावयामीत्याह शङ्क इति । सर्वविजयी कामोऽपि राज्ञा भयेन तूणीरार्द्धाकृष्टमपि शरं संहरतीति संभावयामि । यतोऽत्र कस्यापि न कामोत्सव इत्यर्थः । वाक्यत्रयोक्तचूतकलिकाद्यवस्थादर्शनमित्थं संभावने हेतुरिति केचित् । अत्रोत्प्रेक्षा । अस्य संभावनस्यानाहार्यत्वान्नेत्येके । चिरनिर्गमनादिकारणेऽपि विकासादिरूपकार्यानुत्पत्तिकथनाद्विशेषोक्तिश्च । अनेन श्लोकेन राजशासनस्य सार्वत्रिकी व्याप्तिरुक्ता ॥

सानुमती तदा चूतकलिकाद्यवस्थां सम्यगुपलक्ष्य कञ्चुकीयोक्तं सविस्मयमनुवदति । ण एत्थ इति । अथात्र न विस्म-

उभे— अॅअ कतिइं दिअहाअं ह्माणं मित्तावसुणा राट्ठिएण भट्टिणो पाअमूलं पेसिदाणं पमदवणस्स सअळं पडिकम्म अप्पिदं । तं आअन्तुअदाए ण सुदपुव्वो अह्मेहिं एसो वुत्तन्तो । आर्य कतिचिद्दिवसा आवयोर्मित्रावसुना राष्ट्रियेण भर्तुः पादमूलं प्रेषितयोः । प्रमदवनस्य सर्वं प्रतिकर्मार्पितम् । तस्मादागन्तुकतया न श्रुतपूर्व आवाभ्यामेष वृत्तान्तः)

कञ्चु— भवतु न पुनरेवं प्रवर्तितव्यम् ।

उभे—अॅअ कोदूहळं णो जइ इमिणा जणेण सोदव्वं कहेदु अॅओ किण्णिमित्तं भट्टिणा वसन्तूसवो पडिसिद्धो । (आर्य कौतूहलमावयोः यद्यमुना जनेन श्रोतव्यं कथयत्वार्यः किन्निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः)

सानु— ऊसवप्पिआ खु माणुसा। ता गुरुणा काळणेण होदव्वम् ॥ (उत्सवप्रियाः खलु मनुष्याः । तद्गुरुणा कारणेन भवितव्यम्)

---

यावकाश इति विचिन्त्याह । महेति । अस्य पृथ्व्यादिवन्महाप्रभावत्वात्सर्वमुपपद्यत इत्यर्थः । केचित्तु नात्र संदेहः । अत्र स्मरावस्थायामिति व्याचक्षते । इदं चेट्योर्वचनमित्यन्ये । अथोत्सवप्रतिषेधस्याश्रवणे संगतिमाहतुरॅअ इति । कतिचिद् द्विवाः । राष्ट्रियेण राष्ट्रे नियुक्तेन । प्रमदवनस्योद्यानस्य । प्रतिकर्म सेकसम्मार्जनादिः संस्कारः । तदुक्तमभ्युपगच्छन्नाह भवत्विति ॥

अॅअ इति । कौतूहलमावयोरिति अस्तीति । शेषः । कथयत्वार्य इति तर्हीत्यर्थात् । किं जिज्ञासितमित्यत्राह किन्निमित्तमि-

कञ्चु—बहुलीभूतमेतत् किं न कथ्यते । किमत्रभवत्योः कर्णपथं न तदायातं शकुन्तलाप्रत्यादेशकौलीनम् ।

उभे— आम् । सुदं राष्टिअमुखादो जाव अंगुलीअदंसणं ।
(आम् श्रुतं राष्ट्रियमुखात् यावदङ्गुलीयदर्शनम्)

कञ्चु—तेन ह्यल्पं कथयितव्यम् । यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मया तत्रभवती रहसि शकुन्तला मोहात् प्रत्यादिष्टेति तदाप्रभृत्येव पश्चात्तापमुपगतो देवः ।

रम्यं द्वेष्टि यथापुरं प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडावनम्रश्चिरम् ॥ ५ ॥

---

ति । ऊसवेति । गुरुणा महता । भवितव्यमिति । अत्र श्रवणौत्सुक्यं गम्यते ॥

बहुलीभूतमिति । बहुलीभूतं व्याप्तम् । कौलीनं जनापवादः । "स्यात् कौलीनं लोकवाद" इत्यमरः । आमेति । आमेत्यव्ययमनुमतौ । यावदङ्गुलीयदर्शनमङ्गुलीयकदर्शनावधि ॥

तेन हीत्यादि स्पष्टम् । पश्चात्तापस्य परिपोषमनुभावमुखेन दर्शयति रम्यमिति । रम्यं लोके यद्यदाह्लादकं भोग्यवस्तु तत्तत् । द्वेष्टि उद्वेजकत्वात् । यथापुरं पूर्ववत् । प्रकृतिभिरमात्यादिभिः । न प्रत्यहं सेव्यते । किं तु द्वित्रैः कदाचित् कार्यार्थमेव सेव्यते । वाक्यद्वयेनारतिर्दर्शिता । शय्येत्यादिना विरहसंतापनिस्सहत्वमाविष्कृतम् । क्षपयति शरीरमित्यन्वर्थम् क्षपा । इति बहुवचनं साभिप्रायम् । दाक्षि-

सानु-- पिअं मे पिअं मे । (प्रियं मे प्रियं मे)

कञ्चुकी--तस्मात् प्रभवतो वैमनस्यादुत्सवप्रत्याख्यानम् ।

उभे— जुज्जइ । (युज्यते) (नैपथ्ये) एदु एदु भवम् । (एत्वेतु भवान्)

कञ्चु--(कर्णं दत्वा) अये इत एवाभिवर्तते देवः । स्वकर्मानुष्ठीयताम् ।

उभे— तह (तथा) (निष्क्रान्ते)

(ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकश्च प्रतीहारी च)

कञ्चु— (राजानमवलोक्य) अहो सर्वावस्थासु रमणीयत्व-

---

ण्येन न तु रागाभिनिवेशेन । उचितां तत्कालयोग्यामभ्यस्तां वा । उचितां वाचं ददातीत्यनेनात्मावस्थानिगूहनाय यत्नः प्रकाश्यते । यदा गोत्रेष्वित्यादिना तन्निगूहनस्य भेदश्च । गोत्रेषु नामसु । व्रीडाविलक्ष इत्यपि पाठः । चित्तव्याक्षेपनिमित्तको मुखभावभेदो वैलक्ष्यम् ॥ "आत्मनः स्खलिते सम्यक् ज्ञातेऽन्यैर्यस्य जायते । अपत्रपातिमहती स विलक्ष इति स्मृत" इति दीक्षितः । अत्रोक्तैरनुभावैर्व्यञ्जमानैश्चिन्ताविषादादिभिर्भावैश्च विप्रलम्भः स्फुटमभिव्यज्यते ॥

अथ तादात्विकराजावस्थायाः शकुन्तलानुरागमूलकत्वमवधार्य सानुमती सहर्षमाह । पिअं इति । हर्षातिशयात् प्रिये द्विरुक्तिः । तस्मादिति प्रभवतः प्रभूतात् । वैमनस्यान्मानससंतापात् । निष्क्रान्ते इति । अत्र चेट्योः कञ्चुकीयस्य च प्रवेशो राजकीयविरहवृत्तान्तप्रदर्शनार्थः ॥

अहो इति । सर्वावस्थासु दुःखावस्थायामपि । आकृति-

माकृतिविशेषाणाम् । तथा हि एवमुत्सुकोऽपि प्रियदर्शनो देवः ॥

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं
बिभ्रत् काञ्चनमेकमेव वलयं श्वासापरक्ताधरः ।
चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ६ ॥

सानु—(राजानं दृष्ट्वा) ठाणे खु इमस्स किदे सउन्दळा किळमइ (स्थाने खल्वमुष्य कृते शकुन्तला क्लाम्यति) ✓

---

विशेषाणां मधुराकृतीनाम् । उक्तं सामान्यं विशेषेण समर्थयति एवमुत्सुकोऽपि प्रियदर्शन इति । एतमर्थमुपपादयति प्रत्यादिष्टेति । प्रत्यादिष्टः कार्श्यादरतेश्च निराकृतः विशेषमण्डनानां अवश्यधार्यव्यतिरिक्तानां हाराद्यलंकाराणां विधिर्धारणविधिर्येन । वामेत्यादि । वामप्रकोष्ठेनैकवलयधारणं मङ्गलार्थम् । श्वासैरविरलविनिर्गलन्निश्वासैः । अपरक्तः ऊनरागः । यथा मेघे "निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठ"मिति । तेजोगुणात्तेजोबाहुल्यादिति नालक्ष्यत इत्यत्र हेतुः । संस्कारोल्लिखितः शाणोत्तेजितः । महत्त्वविशेषणं मणेरुत्कर्षप्रदर्शनार्थम् । क्षीणोऽपि कृशोऽपि । नालक्ष्यते क्षीणत्वेन नालक्ष्यते । प्रेक्षकैरिति शेषः । अत्र प्रत्यादिष्टेत्यादिना उत्सुकत्वं तेजोगुणादित्यादिना प्रियदर्शनत्वं चोपपादितम् । अत्राप्यरतिसंकल्पजागरतनुता उक्ताः । पूर्ववद्राजाश्रयाश्चिन्ताग्लान्यादयो भावाः । स्वभावोक्तिरुपमा च । उपमया राज्ञः क्षणे क्षणे नवत्वं द्योत्यते । कञ्चुकिनो हर्षो विस्मयश्च भावः । अथ सानुमती तदाकृतेर्लोकोत्तरत्वमवेक्ष्य

राजा--(ध्यानमन्दं परिक्रम्य)

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम् ॥ ७ ॥

सानु— णं ईइसाणि तपस्सिणीए भाअहेआणि । (नन्वीदृशानि तपस्विन्या भागधेयानि)

विदूषकः-- (अपवार्य) ळंघिदो एसो भूयो वि सउन्दळावाहिणा । ण आणे कहं चिइस्सिदव्वो भविस्सादित्ति । (लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना । न जाने कथं चिकित्सितव्यो भविष्यतीति)

---

श्लाघते ठाण इति । स्थाने खलु युक्तमेव । अमुष्य कृते एतन्निमित्तात् । एतदभिलाषादिति यावत् । प्रत्यादेशविमानितापीत्यपि क्वचित् पाठः ॥

अथ प्रतिबुद्धप्रियावृत्तान्तो नायकस्तत्परित्यागजनितपश्चात्तापेन परवशो हृदयमाधिक्षिपति । प्रथममिति । प्रथमं प्रियासमागमसुखानुभवे समुपनते सति । सारङ्गाक्ष्येति तदानीन्तनादृश्यास्मरणम् । मृगपोतकसलिलप्रदानसमयकृतपरिहासस्यानुस्मरणं च सूचितम् । प्रिययेति प्रतिबोधस्यौचित्यं द्योतयति । प्रतिबोध्यमानम् । प्रतिबोधः प्रत्यभिज्ञा । अपीति विरोधे । सुप्तं जडम् । अनुशयदुःखाय क्रियार्थेत्यादिना चतुर्थी । केवलं पश्चात्तापदुःखमनुभवितुम् । अत्र हेतुः सम्प्रतीति । प्रि-

कञ्चु-- (उपगम्य) जयतु देवः । महाराज प्रत्यवेक्षिताः प्रमद वनभूमयः। यथाकाममध्यास्तां विनोदस्थानानि महाराजः।

राजा-- वेत्रवति मद्वचनादमात्यमार्यपिशुनं ब्रूहि । चिरप्रबोधान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयतामिति ।

प्रती-- जं देवो आणवेदि । (यद्देव आज्ञापयति)

(निष्क्रान्ता)

राजा--वातायन त्वमपि नियोगमशून्यं कुरु ।

(निष्क्रान्तः कञ्चुकीयः)

---

यायामसुलभदर्शनायामित्यर्थः । इदं मदीयम । हतमस्पृष्टसुकृत-गन्धं तदानीमिदानीमप्यस्य न शोभनशीलत्वमिति कुत्सितं च। अत्र पूर्वार्धे विशेषोक्तिः । उत्तरार्धे विभावना च । निर्वेदचि-न्तादयो भावाः । तत्र हृदयं प्रत्यसूया प्राधान्येन ध्वन्यते । तदाकर्ण्य सानन्दमाह णं इति । इदृशानि अलौकिकानि य-तोयं महाराजस्तन्निमित्तमेवं संतप्यते । तपस्विन्या दीनायाः । भागधेयानि भाग्यानि । यद्वा मानधेयानीति कार्ये कारणोप-चारः । ईदृशोऽस्य तस्यामनुराग इत्यर्थः । ळंघिद इति । कथं चिकित्सितव्य इति शकुन्तलाया अलभ्यत्वादिति भावः । अनेन नर्मसचिवस्य विषादो व्यज्यते ॥

महाराजेति । प्रत्यवेक्षिताः संपादितयोगक्षेमाः । वेत्रव-तीति । पिशुन इति मन्त्रिणो नाम । प्रबोधो जागरणम । अध्यासितुं न संभावितमिति संबन्धः । अत्रानेन वाक्येन रा-ज्ञो विरहपर्याकुलत्वेऽपि वर्णाश्रमपरिपालनाधिकारे जागरूकत्वस्या-

विदू--किदं भवदा णिम्मक्खिअम् । सम्पदं सिसिरावच्छेदरमणिज्जे इमस्सिं पमदवणुद्देसे सुहं अत्ताणं रमइस्ससि । (कृतं भवता निर्मक्षिकम् । साम्प्रतं शिशिरावच्छेदरमणीयेऽमुष्मिन् प्रमदवनोद्देशे सुखमात्मानं रमयिष्यसि)

राजा—रन्ध्रोपनिपातिनो विनिपाता इति यदुच्यते तदव्यभिचारि वचः। कुतः—

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ॥ ८ ॥

---

स्खलितत्वं प्रतिपाद्यते । प्रदर्शयिष्यमाणानपत्यतादुःखस्य बिन्दुश्चेदम् । वातायनेति कञ्चुकीयस्य नाम । नियोगमधिकारम् ॥

किदमिति । शिशिरावच्छेदो वसन्तारम्भः । सुखमश्रमेण । अथोद्दीपकवसन्ताविर्भावेण प्रवृद्धमदनतापः प्राह रन्ध्रेति । रन्ध्रे छिद्रे । विनिपाता उपद्रवाः । यदुच्यतइति । "छिद्रेष्वनर्था बहुलीभवन्ती"त्यादि । अव्यभिचारि सत्यम् । अत्र मतिर्भावः । उक्तं सामान्यं स्ववृत्तान्तेन समर्थयति । मुनीति । मुनिसुतेति तपोवनवृत्तान्तानुस्मरणं व्यञ्जयति । प्रणयः परिचयः । तमसा मोहेन । मनसिजेनेति प्रहारमर्मज्ञतां सख इति संबोधनकाक्वा दुःखातिशयं च द्योतयति प्रहरिष्यता मत्प्रहारमिच्छता । अत्र चकारौ भिन्नक्रमौ क्रिययोर्यौगपद्यं द्योतयतः । तेनोत्कण्ठाया दुर्विषहत्वमहो मे दैववैपरीत्यमित्यात्मनि दैन्यं च द्योत्यते। अत्र तमोरूपप्रतिबन्धकनिवृत्तिमुखेन कार्यस्य स्मरणस्य प्रतिपादनादप्रस्तुतप्रशंसा समुच्चयश्च ॥

विदू— चिट्ठ दाव इमिणं दण्डअट्ठेण कन्दप्पवाहिं णासेमि ।
(तिष्ठ तावदमुना दण्डकाष्ठेन कन्दर्पव्याधिं नाशयामि)

राजा— (सस्मितम्) भवतु दृष्टं ब्रह्मवर्चसम् । सखे क्वोपविष्टः प्रियायाः किञ्चिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ॥

विदू— णं आसण्णपरिआरिआ भवदा सन्दिट्ठा माहवीमण्डवे इमं वेळं अतिवाहइस्सं तहिं मे चित्तफळए सहत्थलिहिदं तत्तहोदीए सउन्दळाए पडिकिदिं आणेअत्ति । (नन्वासन्नपरिचारिका भवता सन्दिष्टा माधवीमण्डप इमां वेलामतिवाहयिष्यामि तत्र मे चित्रफलके स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति)

राजा— ईदृशं हृदयविनोदस्थानम् । तत्तमेव मार्गमादेशय ।
विदू—इदो इदो भवम् । (इत इतो भवान्) (परिक्रामतः) सानुमती अनुगच्छति)

---

अथ प्रत्यासन्नस्यौत्सुक्यस्य नायकमनस्यवगाढतां हास्यप्रौढ्या परीक्षितुकामः प्राह चिट्ठ इति । तिष्ठ संतापं मा कृथा इत्यर्थः । कन्दर्पव्याधिं कामपीडाम् । सस्मितमिति हास्यवच । नश्रवणात् स्मितम । राजापि परिहासगर्भमाह भवत्विति - भवतु आस्तां कन्दर्पव्याधिनाशनकथेत्यर्थः । ब्रह्मवर्चसं ब्राह्मं तेजः । दृष्टं सर्वानर्थपरिहारसामर्थ्यं तवास्त्येवेति भावः । अथ संतापशान्तेरुपायं पृच्छति । सखे क्वेति । संबोधनेन नायं परिहासावसरः किन्तु प्रतीकारप्रकारश्चिन्त्यतामिति द्योत्यते । विलोभयामि विनोदयामि । विरहिणां हि प्रियजनसदृक्षानुभवना-

विदू—एसो मणिसिळापट्टअसणाहो माहवीळदामण्डवो उवआररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिपाळअदि। ता पविसिअ णिसीदतु भवम्। (एष मणिशिलापट्टकसनाथो माधवीलतामण्डप उपचाररमणीयतया निस्संशयं स्वागतेनेव नः प्रतिपालयते। तत् प्रविश्य निषीदतु भवान्)

उभौ—(प्रविश्योपविशतः)

सानु—ळदादंसिदा दक्खिस्सं दाव सहीए पडिकिदिम्। तदो से भत्तुणो वहुमुहं अणुराअं णिवेदइस्सम्। (लतादंसिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम्। ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि) (तथा कृत्वा स्थिता)

राजा—सर्वमिदानीं स्मरामि शकुन्तलायाः पूर्ववृत्तान्तम्। कथितवानस्मि भवते च। स भवान् प्रत्यादेशवेलायां मत्सकाशमुप-

---

दयो विनोदाः। अथ विनोदस्थलं पूर्वमेव निर्णीतमित्याह णं इति। आसन्ना अन्तःपुरकार्येष्वभ्यन्तरा। माधवीमण्डप इत्यादि सन्देशप्रकारः। तदुक्तमनुवदन्नाहेदृशमिति। ईदृशं माधवीमण्डपादि। हृदयविनोदस्थानमिति। अनेन तत्र कालातिवाहनस्यौचित्यं दर्शितम्। अत आह तदिति॥

एसो इति। मणिशिलापट्टकसनाथः प्रशस्तमणिशिलाबद्धः। उपचार आस्तरणादिः। ळदेति। लताभिर्दंसिता कवचिता। 'सन्नद्धो दंसित' इत्याद्यमरः। तिरोहितेति यावत्। बहुमुखं प्रतिकृतिदर्शनाद्यनेकप्रकारविशिष्टम्॥

अथ विनोदनायोपविष्टो नायकः प्रियावृत्तान्तं सर्वमप्यनुस्मरंस्तत्प्रस्तावमाह सर्वमिति। स भवानित्यादि। यदि भवान् प्रत्यादेशकाले मत्सकाशे स्यात्तर्हि प्रत्यादेशोऽपि न भवेदिति भावः। णेति। यदि न विस्मरसि तर्हि कुतो न कथितवानित्यत्राह सर्वमिति। इत्या-

गतो नासीत्। पूर्वमपि न त्वया कदाचित् । संकथासु संकीर्तितं तत्रभवत्या नामापि। कच्चिदहमिव विस्मृतवांस्त्वमपि ।

विदू—ण विसुमरामि । किन्तु सव्वं कहिअ अवसाणे तुए परिहासविअप्पिदो एसो ण भूदत्थात्ति आचक्खिदम्। मए मिप्पिण्डबुद्धिणा ता तह एव्व गहीदम्। अहव भविदव्वदा बळवई। (न विस्मरामि। किन्तु सर्वं कथयित्वावसाने त्वया परिहासविजल्पित एष न भूतार्थ इत्याख्यातम्। मया मृत्पिण्डबुद्धिना तत्तथैव गृहीतम्। अथवा भवितव्यता बलवती)

सानु—एव्वं एदम्। (एवमेतत्)

राजा—(ध्यात्वा) सखे परित्रायस्व माम्।

विदू- भो किं एदम्। अणुववण्णं णु खु सप्पुरुसा सोअप्पत्तव्वा होन्ति णं पवादे वि णिक्कम्पा गिरओ। (भोः किमेतत् अनुपपन्नं खल्विदं त्वयि। कदा नु सत्पुरुषाः शोकपात्रव्या भवन्ति। ननु प्रवातेऽपि निष्कम्पा गिरयः)

राजा—वयस्य निराकरणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि। सा हि।

इतः प्रत्यादेशात् स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।

---

ख्यातमिति। परिहासविजल्पितं सख इत्यादीत्यर्थः। मृत्पिण्डमिव बुद्धिर्यस्य तेन। जडबुद्धित्वात् कपटानभिज्ञेन यथोक्तग्राहिणा चेत्यर्थः। अथवेति। त्वया परिहासविजल्पितमिदमित्यपि संकथासु मया न कथितमतोऽत्र भवितव्यतैव हेतुरित्यर्थः। राज्ञो विस्मरणस्यासंभाव्यतां विचिन्त्याथवेत्युक्तमनुवदति एवमिति॥

अथ प्रियां ध्यायन् संतापातिशयमसहमान आह सख इति। भवानेवात्र शरणमिति संबुद्ध्या सूच्यते। परित्रायस्व मामित्यनेन दुःखपारवश्यं दर्शितम्। तमाश्वासयितुमाह भो

पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम् ॥ ९ ॥

सानु—अम्मो ईदिसी सकअवत्थदा । इमस्स सन्दावेण अहं

इति । त्वयि धैर्यादिगुणशालिनि ह्यर्थान्तरसंक्रमितम् । अनुपपन्नमित्यत्र हेतुः कदेत्यादि । कदा नु न कदापि । शोकपात्रव्याः शोकाधीनाः शोकवक्तव्या इति पाठे शोकेन हेतुना वक्तव्या निन्द्या इत्यर्थः । ननु प्रवात इत्यादिरुक्तार्थे दृष्टान्तः । प्रभूतो वातः प्रवातः । अथ शोकस्य प्राबल्यमाह वयस्येति । अशरणः परवशः । उक्तमर्थं विवृणोति । सा हीत इति । इतो मत्सकाशात् । प्रत्यादेशादिति । अनेन भर्ता रक्षति यौवन इति न्यायात् प्रत्यादेशस्यात्यन्तमनौचित्यमुभयलोकविरोधश्च नावधारितमिति द्योत्यते । स्वजनमनुगन्तुं व्यवसितेति । भर्तृपरित्यागे स्वजनानुगमनव्यवसायो युक्त एवेति भावः । पुनश्च स्थिता अत्र हेतुस्तिष्ठेत्यादि । उच्चैरित्यनेन शिष्यस्य कोपो व्यज्यते । गुरुशिष्य इत्यनेन गौरवं गुरुतम इत्यनेन तदतिशयश्च द्योत्यते । तेन तद्वचनस्यालङ्घनीयत्वं च । पुनः पुनरपि । बाष्पप्रसरकलुषामिति गत्यन्तराभावात्तस्यास्तादात्विकं दुःखातिशयं व्यञ्जयति । तथाविधां दृष्टिमर्पितवतीत्यनेनायमिदानीं वा गृह्णीयादिति नायिकाया अभिप्रायो गम्यते । तेन तस्या दयनीयत्वं ध्वन्यते । क्रूरे तदानीमप्यनुग्रहाभावादत्यर्थं कठोरहृदय इत्यनेनात्मनि निर्वेदो व्यज्यते । तदित्यनेनानुभूततथाविधदृष्टिस्मरणं परामृश्यते । अर्पिता दृष्टिरिति पर्यवस्यति । विशिष्टदृष्टेरेव विशिष्टशल्यसाम्यात् । अत्रोपमया दहनस्य प्रतिक्षणं दुस्सहत्वं दहतीति लटानवसानं च द्योत्यते । दहतिना च तापो लक्ष्यते । तदतिशयो व्यङ्ग्यः । अत्र चिन्ताविषादौत्सुक्यादयश्च नायकगता व्यज्यन्ते ॥

रमामि। (अहो ईदृशी स्वकार्यपरता। अमुष्य संतापेनाहं रमे)

विदू—अत्थि मे तक्को केणवि तत्तहोदी आआसआरिणा अवणी दत्ति। (अस्ति मे तर्कः केनापि तत्रभवत्याकाशचारिणापनीतेति)

राजा—कः पतिदेवतामन्यः परामर्ष्टुमुत्सहेत। मेनका किल सख्युस्ते जन्मप्रतिष्ठेति श्रुतवानस्मि। तत्सहचारिणीभिः सखी ते हृतेति हृदयमाशङ्कते।

सानु—सम्मोहो खु विह्मणीओ। ण पडिबोहो। (सम्मोहः खलु विस्मयनीयः न प्रतिबोधः)

विदू—जइ एव्वं अत्थि खु समाअमो कालेण मए विदिदो तत्तहो-

---

अम्मो इति। ईदृशी स्वकार्यपरता। सर्वेषामिति शेषः। इदंपदार्थमाहामुष्येति। रमे हृष्यामि। शकुन्तलासमाश्वाससाधनत्वादिति भावः। अन्यस्य सन्तापेनान्यस्य संतोष इति विस्मयः। नर्मसचिवः पुनरालोच्य किञ्चित्सन्तापशमनाय नायकं रसान्तरे प्रवेशयितुमाह अस्थि इति। केनचित् केनापि पुरुषेण। अपनीतेति। अतस्तत्प्रतीकाराय यत्नः कार्य इति भावः। एवं विदूषकेण नायकस्य संरम्भीकरणं सुभद्राधनञ्जये पञ्चमाङ्के स्फुटम्। अथ तन्नेत्याह क इति। पतिदेवतामिति हेतुगर्भम्। परामर्ष्टुं स्प्रष्टुम्। प्रतिष्ठा जन्मकारणम्। अथैवंविधे दुर्ज्ञेयेऽपि वस्तुनि यथावत् प्रतिभाप्रसरणेन राजानं श्लाघमाना विस्मरणस्यात्यन्तासंभाव्यतां परामृशति सम्मोह इति। संमोहः पूर्वं शकुन्तलाया विस्मरणम्। प्रतिबोधः पश्चात् स्मरणम्। विस्मयनीयत्वे तदभावे च प्रतिभाविशेषशालित्वं हेतुः। यद्वा प्रतिबोधः प्रतिभानं यथावदेवं वस्तुवृत्तज्ञानमित्यर्थः। महापुरुषाणां स्वाभाविकत्वादयं न विस्मयनीयः। किं तु सम्मोह एवेत्यर्थः॥

अथ तद्वचनेनाश्वासनोपायं पश्यन्नाह जइ इति। विदितः ऊहितः। कुत इत्यत्राह न खल्विति। अतो मेनका

दीए। (यद्येवमस्ति खलु समागमः कालेन मया विदितस्तत्रभवत्याः)

राजा—कथमिव।

विदू—णखु मादापिदरौ भत्तुविओअदुःखिअं दुहिदरं चिरं पेक्खिदुं पारन्ति। (न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं चिरं प्रेक्षितुं पारयतः)

राजा—वयस्य।

स्वप्नो नु माया नु मतिभ्रमो नु क्लिष्टं नु तावत्फलमेव पुण्यम्।
असन्निवृत्त्यै तदतीतमेते मनोरथा नाम तटप्रपाताः॥ १०॥

---

त्वया तां संयोजयिष्यतीत्यर्थः। अथापायदर्शी स्नेह इति नीत्या तन्नेत्याह वयस्य स्वप्नो न्विति। तत् असन्निवृत्त्यै अतीतमिति संबन्धः। तदित्यनेन शकुन्तलालक्षणं वस्तु तत्सङ्गमनं तत्सुखं वा परामृश्यते। तस्य न सन्निवृत्तिरित्यर्थः। अमुमर्थं संदेहैर्द्रढयति स्वप्न इत्यादि। स्वप्नः स्वाप्नं वस्तु। नुशब्दः सर्वत्र संशये। माया ऐन्द्रजालिकादिनिर्मितं वस्तु। मतिभ्रमः मतिभ्रमेण प्रतीतं वस्तु। यथा रज्ज्वादौ सर्पादि। क्लिष्टं क्षीणम्। तावत् तत्परिमितं फलं यस्य तत्। फलभोगेन क्षीणं पुण्यं न्वित्यर्थः। एवमतीतस्य तस्यासन्निवृत्तिं स्वप्नादिभिश्चतुर्भिः सन्देहैरुपपाद्य तस्यात्ययं विशेषरूपं सामान्येन समर्थयत्येत इति। एते लोके दृश्यमानाः मनोरथाः मनोरथविषयाः। तटस्य नदीकूलस्य प्रपात इव प्रपातो येषां ते। प्रपातो विनाशः पतनं च। नामेति प्रसिद्धौ। अत्र सन्देहोऽर्थान्तरन्यासश्च। केचित्तु अहो किमिदमापतितमिति मतिभ्रमहेतुविचारपुरस्सरमपायदर्शीत्युक्तन्यायेन तत्प्रत्यापत्त्यभावं शङ्कमान आह स्वप्न इति। प्रथमं व्यूढायास्तस्या दर्शने प्रत्यभिज्ञानाभावः दृष्टायाश्च तिरस्करिण्या तिरोधानं तिरोहितायाश्च पुनः स्मृतिप्रत्यापत्त्या दर्शनौत्सुक्यमित्येवं विरोधात् स्वप्न इत्युक्तम्। ननु कथं स्वापं विना स्वप्नप्रसङ्ग इ-

विदू—मा एव्वं णं अङ्गुळीअं एव्व णिदंसणं अवस्संभाविणो अचिन्तणिज्जो समागमो होदित्ति । (मैवम् । नन्वङ्गुलीयमेव निदर्शनमवश्यंभाविनोऽचिन्तनीयः समागमो भवतीति)

राजा—इदं तावदसुलभस्थानभ्रंशि शोचनीयम् ।

तव सुचरितमङ्गुलीय नूनं प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्याश्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ ९ ॥

सानु—जइ अण्णहत्थगअं भवे सच्चं एव्व शोअणिज्जं भवे । (यद्यन्यहस्तगतं भवेत् सत्यमेव शोचनीयं भवेत्)

विदू—भो इअं णाममुद्दा केण उवाएण तत्तहोदीए हत्थसंसग्गं पाविदा । (भो इयं नाममुद्रा केनोपायेन तत्रभवत्या हस्तसंसर्गं प्रापिता)

---

त्यत आह मायेति । मायेन्द्रजालम् । सा च जागरावस्थाया-मेवानुभूयते । ननु शकुन्तलाविस्मरणादेश्चिरकालप्रवृत्तत्वात् कथं मायेत्युच्यत इत्यत आह मतिभ्रम इति । मतिभ्रम उन्मादः । ननु तस्मिन् सति सर्वत्रैव मतिभ्रमः स्यान्न तु तस्यामेव विषये । तस्मात् किमिति न विद्म इति भावः । एवं स्वस्य सम्मोहे हेतुं वितकर्य तद-तीतमित्यत्र स्वभाग्यवैपरीत्यं हेतुत्वेन संभावयन्नाह क्लिष्टमिति । मदीयं पुण्यं तावत्फलं लोकोत्तरनायिकाप्रथमसंभोगमात्रफलं सदेव क्लिष्टमव-सितं नु । किमर्थं पुनराश्रय इति चेदाहासन्निवृत्तयायेति । तस्यापुन-र्निवर्तनायेत्यर्थः । तदित्यनेन मनसि सर्वदा भावितं शकुन्तलारूपामृ-तपानलक्षणं वस्तु परामृश्यते । अथासन्निवृत्तिं सामान्येन समर्थयत्येत इति । तटप्रपाता इति रूपकं तत्तुल्या इत्यर्थः । यथात्युन्नताद्गिरित-टात् पतितस्य वस्तुनः पुनर्निवृत्तिर्नास्ति तथैषां मनोरथविषयाणामित्य-र्थ इत्याहुः । अत्र विषादमत्यादयो भावाः ॥

नैराश्यस्य नात्रावकाश इति प्रतिसमाधत्ते मेति । मैवं भणेति शेषः । निदर्शनं दृष्टान्तः । कुत्रेत्याहावश्यमिति । अवश्यंभाविन इति

सानु—मम वि कोदूहलेण आआरिदो एसो । (ममापि कौतूहलेनाकारित एषः)

राजा—श्रूयताम् । तदा स्वनगराय मां प्रस्थितं प्रिया सबाष्पमिदमाह "कियच्चिरेणार्यपुत्रः प्रत्यापत्तिं दास्यती"ति ।

---

हेतुगर्भम् । भवतीति । अत्रेति शेषः । यथा भवितव्यताबलेन यत्र कुत्रचित् भ्रष्टस्यांगुलीयस्य समागमोऽभूत्तथा प्रियतमाया अपि भवेदित्यर्थः । अतो न शोचनीयमिति भावः । अथ प्रियासमागममसंभाव्यमेव मन्वानो निदर्शनद्वारेणोद्बोधितमचेतनमङ्गुलीयकं चेतनवदनुशोचतीदमिति । इदमङ्गुलीयकम् । तावत् प्रथमम् । पश्चात्सा शोचनीयेति भावः । यद्वा तावदित्यवधारणे । शोचनीयं तावदिति संबन्धः । असुलभात् सुकृतशतलभ्यत्वेनातः परं दुष्प्रापात् । स्थानात् तदङ्गुलिप्रदेशात् । भ्रंशि अत एव शोचनीयं तत्प्रत्यापत्त्यभावाच्छोचितुमर्हम् । अत्र हेतुमाह तवेति । सुचरितं पुण्यम् । अङ्गुलीयेति दैन्यद्योतिकया संबोधनकाक्वा इदानीमयं जनस्तव सब्रह्मचारी जात इति द्योत्यते । अत आह ममेवेति । प्रतनु नूनमत्यल्पमेव । विभाव्यतेऽनुमीयते । फलमाहारुणेत्यादि । अरुणेत्यादिनाङ्गुलीयस्य परभागलाभो द्योत्यते । अङ्गुलीष्विति बहुवचनेनादरादङ्गुलीयस्य प्रत्यङ्गुलि प्रतिक्षणमामोचनं ध्वन्यते । लब्धपदं त्वं ततश्च्युतमसीति यत्तेन फलेनेति संबन्धः । अत्रोपमा अनुमानं च । अनेन नायकस्योन्मादसमुद्रप्रवेशोपक्रमो दर्शितः । पूर्ववद्विषादादयश्च ॥

अङ्गुलीयमिदानीमत्युन्नतपदस्थितमतो न शोच्यमित्याह जइ इति । अन्यहस्तगतं भवेदिति । तर्हीति शेषः । राज्ञ आकृतिप्रशंसनमिदम् । प्रसङ्गात् पृच्छति भो इति । प्रापिता भवतेति शेषः । मम वीति । आकारितः अङ्कुरितः । एषः अयं प्रश्नः श्रूयतामिति । श्रूयतां अवहितो भवेति भावः । तदा प्रथमसमागमानन्तरम् । सबाष्पमिति । स्मर्यमाणतया भाविनो वियोगस्य दुःसहत्वं द्योतयति । कि-

विदू—तदो तदो । (ततस्ततः)

राजा—पश्चादिमां नाममुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता ।

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छति यावदन्तम् ।
तावत् प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥१२॥

तच्च तथा दारुणेन मया मोहान्नानुष्ठितम् ।

सानु—रमणीअं खु ववधी विहिणा सम्पादिओ । (रमणीयं खलु व्यवधिर्विधिना सम्पादितः)

---

यच्चिरेण कतिभिर्दिवसैः । प्रत्यापत्तिं पुनःप्राप्तिम् । प्रतिपत्तिमित्यपि पाठः । प्रत्यभिहिता प्रियेत्यनुषज्यते । अभिधानप्रकारमाहैकैकमिति । अत्रास्मिन्नङ्गुलीयके । नामाक्षरं नामात्मकमक्षरजातं दुष्यन्त इति । गच्छति नामाक्षरमिति प्रथमान्ततयानुषङ्गः । यावद्यस्मिन् दिने । तावदिति । द्वित्रैर्दिनैरित्यर्थः । नेता जन इति । त्वदानयनयोग्यः कतिश्चिन्मदीयो जन इत्यर्थः । इति प्रत्यभिहितेति संबन्धः । अत्र तदानीन्तनमौत्सुक्यं व्यज्यते । तच्चेति तत् प्रियानेतृजनप्रेषणम् । चकारो विस्मरणस्यात्यन्तमनौचित्यं द्योतयति । तथादारुणेनेति निर्वेदगर्भमभिधानम् । तथाशब्देन पश्चात्तापसहायतया मनसि कृतप्रतिष्ठं पश्चमाङ्कार्थं सूचयता दारुणत्वनिरतिशयत्वमत्यन्तमनुचितत्वं च ध्वन्यते । मोहादिति । मोहस्य विधिप्रयुक्तत्वेन विधिं प्रत्यसूया व्यज्यते । अत्र पूर्वानुभूतसंभोगाङ्गानां स्मर्यमाणतया वर्णनं नायकस्य विप्रलम्भपरिपोषार्थम् । यथा रामायणे किष्किन्धाकाण्डे वसन्तवर्णनायां । एवमुत्तरत्राप्यूह्यम् ॥

अथेत्थमनुरागातिशयं तस्याश्चिरेणैव तिरोधानं चावेक्ष्य सविषादमाह रमणीअं इति । रमणीयं खलु अघटनीयस्य घटनादद्भुत-

विदू—कहं णु धीवलकप्पिदस्स लोहिअमच्छस्स उदलब्भन्तले आसी । (कथं नु धीवरकल्पितस्य लोहितमत्स्यस्योदराभ्यन्तरे आसीत्)

राजा—शचीतीर्थं वन्दमानायाः किल सख्यास्ते हस्तात् गङ्गास्रोतसि परिभ्रष्टम् ।

विदू—जुज्जइ (युज्यते)

सानु—तदो तवस्सिणीए अधम्मभीरुणो इमस्स परिणए सन्देहो । अहव ण ईदिसो अणुराओ अहिण्णाणं अपेक्खदि । कहं विअ एदम् । (ततस्तपस्विन्याः शकुन्तलाया अधर्मभीरोरमुष्य परिणये सन्देहः । अथवा नेदृशोऽनुरागोऽभिज्ञानमपेक्षते । कथमिवैतत्)

राजा—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

---

मेव । संवादनक्रियाविशेषणमिदम् । व्यवधिस्तिरोधानम् । एवंविधस्यानुरागस्य विस्मारकमिति यावत् । विधिना प्रतिकूलेन दैवेन । अत्राद्भुतं विषादाङ्गम् । कहं इति । अङ्गुलीयकमिति शेषः । शचीति । किलेति संभावनायाम् ॥

तदो इति । ततः नाममुद्राङ्किताङ्गुलीयकदर्शनात् । तपस्विन्या मुग्धाया इति तस्याः पतनानवहितत्वं सूचयति । अधर्मभीरोरिति परिणयसन्देहस्य हेत्वन्तरं व्यावर्तयति । अथवेति अङ्गुलीयकादर्शनस्य संदेहहेतुत्वन्न संभवतीत्यर्थः । कुत इत्यत्राह नेदृश इति । ईदृशः अलौकिकः । कथमिवैतदिति । ईदृशानुरागस्यात्यन्ततिरोधानाद्धेत्वन्तरेणावश्यं भूयेत तत्त्वस्माभिर्न विदितमिति भावः । अथांगुलीयस्य तत्करदूभ्रंशमनुस्मरन्नाहोपालप्स्य इति । उपालम्भोऽधिक्षेपः । तावत् प्रथमम् । पूर्वप्रसक्तस्योन्मादस्य मूर्छेनावर्णनायायमारम्भः । अचेतनोपालम्भोपक्रममवेक्ष्य स्वयमाह गहिद इति । अनेनोन्मादस्य दीर्घकालप्रवृत्तत्वं दर्शितम् ॥

उपालभते कथमिति । नुशब्दो वितर्के कथन्नु निमग्नमिति ।

विदू—(अपवार्य) गहीदो णेण पन्था उन्मत्तआणम् । (गृहीतोऽनेन पन्था उन्मत्तानाम्)

राजा—

कथन्नु तङ्कोमळबन्धुरांगुलिं करं विहायासि निमग्नमम्भसि ।

अथवा—

अचेतनन्नाम गुणानपेक्षते मयैव कस्मादवधीरिता प्रिया ॥१३॥

विदू—अहं खु बुभुक्खाए खादयिदव्वत्ति । (अहं खलु बुभुक्षया खादयितव्य इति)

राजा— अकारणपरित्यागानुशयपरितप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ।

---

तत्करं विहाय निमज्जनस्यौचित्यं न संभाव्यत इत्यर्थः । अनेनाङ्गुलीयकस्य गुणनिरपेक्षत्वं द्योत्यते । तमित्यनुभूतार्थकं करस्य गुणोत्कर्षं द्योतयति । तमेव किञ्चिद्विवृणोति कोमलेति । बन्धुराः सुन्दराः । विहायेति त्यागस्य बुद्धिपूर्वकत्वं व्यञ्जयति । असीति त्वमित्यर्थे । अथवेति । उपालप्स्ये तावदिदमित्युक्तस्याक्षेपे । नेदमुपालभ्यमित्यर्थः । अत्र हेतुमाहाचेतनमिति । नामेत्यसंभावनायाम् । अचेतनं गुणापेक्षित्वसंभाव्यमित्यर्थः । केचित्तु नामेति प्रसिद्धौ । गुणानपेक्षते इत्यत्र काकुः नापेक्षत इत्यर्थ इत्याहुः । गुणान्न लक्षयेदित्यपि पाठः । अथात्राहमेवोपालभ्य इत्याह मयेति । मयैव गुणपक्षपातिना मयैवेत्यर्थः । कस्मादवधीरिता मत्कर्तृकप्रियावधीरणं निर्हेतुकमित्यर्थः । अतोऽहमेवोपालभ्य इति भावः । अत्र पूर्वार्धे उन्मादः । उत्तरार्धे मतिः । अन्त्यपादे निर्वेदादयश्च । अथ कस्मादवधीरिता प्रियेत्यवधीरणे हेतुः पृष्ट इति कृत्वा तत्रायं हेतुरिति हास्यप्रौढ्या राजानं विनोदयितुमाह अहं इति । इतीति हेतौ । इत्यतो हेतोस्त्वयावधीरितेत्यर्थः । बुभुक्षाकर्तृकखादनोक्त्या बुभुक्षातिशयो दर्शितः । अथ तदुक्तमशृण्वन् प्रियावधीरणानुस्मरणेन दुस्सहं पश्चात्तापमनुभवन् गत्यन्तरं चापश्यन्

(प्रविश्यापटाक्षेपेण चतुरिका)

चतुरिका—इअं चित्तगआ भट्टिणी । (इयं चित्रगता भट्टिनी)

(इति फलकं दर्शयति)

विदू—(चित्रफलकमवलोक्य) साहु वअस्स महुरसंस्थाणदंसणिज्जो भावाणुप्पवेसो खळदि विअ मे दिट्ठी णिम्मुण्णदप्पदेसेसु । (साधु वयस्य मधुरसंस्थानदर्शनीयो भावानुप्रवेशः । स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु)

सानु—अहो राएसिणो वत्तिआणिउणदा । जाणे मे सही अग्गदो वट्टत्ति । (अहो राजर्षेर्वर्तिकानिपुणता ; जाने मे सखी अग्रतो वर्तत इति)

---

सङ्कल्पोपनीतां प्रियां प्रति प्रार्थयत्यकारणेति । अकारणपरित्यागेन योऽनुशयः पश्चात्तापस्तेन परितप्तहृदय इति अनुकम्प्यतामित्यत्र हेतुः । इदं नायकवचनं चतुरिकाप्रवेशबिन्दुः । केचित्तु नर्मसचिवोक्तं शृण्वन् तं प्रत्याहाकारणेति । यद्यस्यामवस्थायां क्षुत्पीडया त्वयावश्यं गन्तव्यं तर्ह्यविलम्बितमागत्य दर्शनेनानुगृह्यतामयं जन इत्यर्थ इत्याहुः ॥

राज्ञा प्रार्थितं प्रियादर्शनं संपादयितुमवसरे चित्रफलकहस्तायाश्चतुरिकायाः प्रवेशमाह तत इति । अपटाक्षेपेण प्रवेशस्त्वरां सूचयति । इयं इति । भट्टिनीति । देवी कृताभिषेकायामितरासु तु भट्टिनीत्यमरः । चित्रेण वयस्यं विनोदयितुं तदवलोक्य श्लाघते साहु इति । साधु अद्भुतम् । मधुरं हृद्यं यत्संस्थानं रेखान्यासोत्पन्नस्तनजघनाद्याकृतिः तेन दर्शनीयः । भावोऽनुरागोऽनुप्रविशत्यस्मिन्निति सः । चित्रस्था प्रतिकृतिरित्यर्थः । भावा अनुरागादिद्योतका इङ्गिताकाराः तेषामनुप्रवेशः स्फुटप्रतीयमानेति केचित् । निम्नोन्नतप्रदेशेषु नाभिस्तनादिषु । तत्प्रशंसामनुवदत्यहो इति । वर्तिकानिपुणता चित्रनिर्माणकौशलम् । जाने इत्यादि । तादात्म्यात् साक्षात् सखी स्वयमग्रतो वर्तत इति संभावयामीत्यर्थः ॥

राजा—वयस्य ।

यद्यत्साधु न चित्रे स्यात् क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किञ्चिदन्वितम् ॥ १४ ॥

सानु—सदिसं एदं पच्चादावगुरुणो सिणेहस्य अनवलेवस्स अ । (सदृशमेतत् पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च)

विदू—भो तिस्सो तत्तहोदीओ दिंसन्ति । सव्वा दंसणिआओ । कदमा तत्तहोदी अउन्दळा । (भोस्तिस्रस्तत्र भवत्यो दृश्यन्ते । सर्वा दर्शनीयाश्च । कतमा तत्रभवती शकुन्तला)

सानु—अणहिण्णो खु रुवस्स मोहदिट्ठी अअं जणो । (अनभिज्ञः खलु रूपस्य मोघदृष्टिरयं जनः)

---

नर्मसचिवप्रशंसामात्मनि लघूकर्तुं प्रकृत्यपेक्षया चित्रगतप्रतिकृतेरपकर्षमाह यद्यदिति । यद्यद्विलिख्यमानं यद्यद्वस्तु । साधु न स्यात् सम्यङ् न भवति । तत्तदन्यथा क्रियते पौनःपुन्येन प्रवृत्त्या साधु क्रियत इत्यर्थः । लेखकैरिति शेषः । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसया प्रस्तुतो विशेषो गम्यते । मया चित्रे तस्या लावण्यं सर्वं संपादयितुं पौनःपुन्येन यत्नः कृत इति । तथापीति । रेखया चित्रेण । किञ्चिदत्यल्पमेव । अन्वितमनुगतम् । पौनःपुन्येन प्रयत्ने कृतेऽपि तस्या लावण्यं चित्रे स्वल्पमेवायातमित्यर्थः । अत्र चित्रलेखनप्रकारकथनेन नायकस्य तस्यां विप्रलम्भादधिकमनुरागपारवश्यं ध्वन्यते । सदिसं इति । सदृशमनुरूपम् । एतत् एतद्वचनम् । पश्चात्तापेन गुरोर्गुणितस्य । अनवलेपस्य विनयस्य ॥

अथालेख्यालिखितानां शकुन्तलायाः सख्योश्च सौन्दर्यादिगुणसाम्यात् पृच्छति भोइति । तत्प्रश्नेन तमपहसति अणहिण्णो इति । रूपस्य सौन्दर्यस्य । मोघदृष्टिः यतो रूपविशेषं न जानाति ततो निष्फलदृष्टिरित्यर्थः । अयं जनो नर्मसचिवः । मोघदृष्टिः पञ्चवर्णप्रभापटलमूढदृष्टिः । अतो रूपस्यानभिज्ञ इत्यर्थ इति केचित् । भो

राजा—त्वं तावत् कतमां तर्कयसि ।

विदू—भो तक्केमि जा एसा सिढिळबन्धुव्वन्तकुसुमेण केसन्तेण उब्भिण्णसेअविन्दुणा वदणेण विसेसदो ओसरिदाहिं बाहाहिं अवसेअसिणिद्धतरुणपल्लवस्स चूदपादवस्स पस्से ईसिपरिस्सन्ताविअ आळिहिदा एसा तत्तहोदी सउन्दळा । इदराओ सहीओ त्ति । (भोस्तर्कयामि यैषा शिथिलबन्धोद्वान्तकुसुमेन केशान्तेन उद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽवसृताभ्यां बाहाभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता एषा तत्रभवती शकुन्तला । इतरे सख्यौ इति ।)

राजा—निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् । कुतः ।

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्तिकोच्छ्वासात् ॥ १५ ॥

चतुरिके अर्धलिखितमिदं विनोदनस्थानमस्माभिः । गच्छ वर्तिकां तावदानय ।

---

तर्केमीति । तर्कयामीत्यत्र लिङ्गं सूक्ष्मेक्षिकायां सौन्दर्यातिशयदर्शनम् । केशान्तेनेत्यादावुपलक्षणे तृतीया । अवसृताभ्यामवनताभ्याम् । बाहाभ्यां बाहुभ्याम् ॥

तदुक्तं सम्यगवगतानुमोदने निपुणो भवानिति । रूपविशेषस्य सूक्ष्मस्यातिसंवेद्यत्वादिति भावः । विशेषमप्याहास्तीति । अत्र शकुन्तलाप्रतिकृतौ । भावचिह्नं भावोऽनुरागः । चिह्नस्वरूपमाह स्विन्नेति । विनिवेशो विन्यासस्थानम् । तस्यैव दृश्यत्वमलिनत्वोपपत्तिः । रेखाया आलेख्यस्य । प्रान्तेषु उपान्तेषु । मलिनः असितः । अङ्गुलीनां विन्यासस्थानस्य मालिन्यात्तासां स्वेद ऊह्य इति भावः । कपोलपतितं कपोलाभ्यां पतितम् । लक्ष्यमूह्यम् । वर्तिकोच्छ्वासात् वर्तिकासाध्याया रेखाया उच्छ्वासात् संश्लेषशैथिल्यात् । वर्तिकोच्छ्वासादिदं कपोलपतितमश्रु च लक्ष्यमित्यन्वयः । केचित्तु भावचिह्नदर्शनमेव नर्मसचि-

चतु—अॲअ माडव्य ओलंब चित्तफळअं। जाव आअच्छामि।
(आर्य माढव्य अवलम्बस्व चित्रफलकम्। यावदागच्छामि)

राजा—अहमेवैतदवलम्बे।

(इति यथोक्तं करोति)

(निष्क्रान्ता चतुरिका)

राजा—अहं हि।

साक्षात् प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम्॥ १६॥

विदू—(आत्मगतम्) एसो अतभवं णदीं अदिक्कमिअ मिअतिह्णिआअं सङ्कन्तो। (एषोऽत्रभवान् नदीमतिक्रम्य मृगतृष्णिकायां संक्रान्तः)

(प्रकाशम्)

भो वअस्स अवरं किं एत्थ ल्लिहिदव्वम्। (भो वयस्यापरं किमत्र लिखितव्यम्)

---

वस्य तर्के लिङ्गं तदवगत्य श्लाघते निपुण इति। निपुणत्वमुपपादयत्यस्तीति। चिह्नस्य स्वरूपं दुरवबोधत्वं चाह खिन्नेति। अत्राङ्गुलीनां विन्यासस्थानमालिन्यात् स्वेद ऊह्यः। वर्तिकोच्छ्वासादश्रु च ताभ्यां सात्विकविकाराभ्यामनुरागस्तेन सेति परम्परया तर्को निपुणमतिसाध्य एव अतो भवान् निपुण इत्यर्थ इत्याहुः॥

अअ इति। अवलम्बस्व गृहाण। अहमेवैतदवलम्ब इति। विनोदार्थमिति भावः। अथ स्वकीयामविमृश्यकारितामनुसंदधाति। साक्षादिति। अत्र निदर्शनालङ्कारः। प्रथममार्गे महानदीमुत्तीर्य गतवतः पिपासोः पश्चान्मृगतृष्णिकायां प्रणय इव प्रथमं स्वयमुपनतां प्रियामवधीरितवतो मम चित्रार्पितायामस्यां बहुमान इति भावः॥

सत्यमेतदिति स्वयमेवानुवदति। एसो इति। अत्र विषादो

सानु—असंसअं जो जो पदेसो अहिरुइदो तं तं आलिहिदुकामो हवे । (असंशयं यो यः प्रदेशोऽभिरुचितः तं तमालिखितुकामो भवेत्)

राजा—श्रूयताम् ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ १७ ॥

---

भावः । केचित्तु नायकावस्थां सविषादं स्वयं परामृशति एसो इति । एष मोहात् प्रियामपहाय इदानीं तदलाभादुन्माददशां प्रविष्ट इत्यर्थ इत्याहुः । पुनरपि सेवावसरज्ञः पृच्छति भो वअस्स इति ॥

अथोन्मादावगाढः प्रसङ्गानुप्रसङ्गेन प्रकृतनिर्माणशेषं पूरयितुमुपक्रममाण आह कार्येति । कार्या लिखितव्या । तथेच्छामीति भावः । पादाः पर्यन्तभूमयः । कार्याः इति विपरिणामेनानुषङ्गः । तां मालिनीम् । अभितः तस्या उभयोः पार्श्वयोरित्यर्थः । निषण्णा हरिणा येषु । हरिण्यश्च हरिणाश्चेत्येकशेषः हरिणमिथुनानीत्यर्थः । गौरीगुरोरिति पावनत्वोपपादकम् । शाखालम्बितेति शोषणार्थं निक्षिप्तत्वाच्छाखालम्बनं शाखेत्यादि तरोराश्रमस्थत्वं छायाबाहुल्यं च द्योतयति । इदन्तिरश्चामपि संभोगगोपनेच्छां व्यञ्जयतीति केचित् । शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानामिति । अत्राहुः कामतन्त्रकाराः । "रिरंसा यत्र जायेत कण्डूतिस्तत्र जायते । मृगीणां वामनयने योषिता मदनालये" इति । कण्डूयमानामिति शतृप्रत्ययेन निश्चलस्थित्या कृष्णमृगस्य मृगीबुद्ध्यनुसारित्वं द्योत्यते । तेन परस्पराস্थाबन्धश्च । वाक्यत्रयेणात्र जलवनस्थलानां कामधर्मोभयानुकूलत्वं प्रकाश्यते । तत्र सैकतेत्यादि निषण्णहरिणा इति कण्डूयमानां मृगीमिति च शृङ्गारे उपक्रमोपसंहारः । कण्डूयमानां मृगीमिति स्त्रिया आरब्धत्वात्

विदू—(आत्मगतम्) जह अहं पेक्खामि तह पूरयिदव्वं णेण चित्तफलअं लंबकुच्चाणं तावसाणं कदंबेहीम् । (यथाहं पश्यामि तथा पूरयितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बकैः)

राजा—वयस्य अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतमत्र विस्मृतमस्माभिः।

विदू—किंविअ । (किमिव)

सानु—वणवासस्स सोउमारस्स अ जं सरिसं भविस्सदि । (वनवासस्य सौकुमार्यस्य च यत् सदृशं भविष्यति)

राजा—

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ १८ ॥

---

संभोगस्य सातिशयत्वं चेति । केचित्तु हरिणपदेनैकशेषः । पादविशेषणाभ्यां तेषामाश्रमपदत्वं प्रदर्श्यत इत्याहुः । पूर्वार्धेन मनःप्रसादहेतुकं रम्यत्वं उत्तरार्धेन मदनोद्दीपकत्वं च दर्शितमित्यन्ये । अत्र सूक्ष्मवस्तुस्वरूपकथनरूपा स्वभावोक्तिः ॥

अथाश्रमपदस्य लिखितव्यत्वोक्त्या तच्छेषतया लिखितव्यं स्वयमाह जह इति । लम्बकूर्चानां दीर्घश्मश्रूणामिति हासालम्बनत्वोक्तिः । कूर्चोऽस्त्री श्मश्रुपीठयोरिति केशवः । अनेनात्मगतेन नर्मसाचिवस्य चित्रविन्यासेष्वौचित्यानौचित्यविवेकराहित्यं प्रकाश्यते । अन्यच्चेति । अभिप्रेतं शकुन्तलाया अतिप्रियमित्यनेनावश्यलिखितव्यत्वं व्यज्यते । यद्वा स्वयं लिखितव्यत्वेनाभिप्रेतमित्यर्थः । अत्र चित्रफलके । विस्मृतमिति लिखितुमित्यर्थात् । तदपि लिखितव्यमिति भावः । किमिति किं तदित्यर्थः । वणेति । शकुन्तलाया इत्यनुषङ्गः । यत् सदृशं

विदू—किण्णु खु तत्तहोदी रत्तपल्लवसोहिणा अग्गहत्थेण मुह-
मावारिअ चकिदचकिदा विअ ट्ठिआ (किन्तु खलु तत्रभवती रक्तपल्लवशोभिना अग्रहस्तेन मुखमावृत्य चकितचकितेव स्थिता)

(सावधानं निरूप्य)

विदू—एसो महुअरो दासीएवुत्तो कुसुमासवपाडच्चरो अत्तहोदीए वअणं अदिळंघेदि (एष मधुकरो दास्याःपुत्रः कुसुमासवपाटच्चरोऽत्रभवत्या वदनमतिलङ्घयति)

राजा—ननु वार्यतामेष दुष्टः।

विदू—भवं एव्व अविणीदाणुशासी इमस्स वारणे पभविस्सदि (भवानेवाविनीतानुशासी अमुष्य वारणे प्रभविष्यति)

राजा—युज्यते । अयि भोः कुसुमलताप्रियातिथे किमितः परिप-तनखेदमनुभवसि ।

---

भविष्यतीति तल्लिखितव्यामिति शेषः। तदेवाह कृतमिति । शकुन्तला-या इत्यनुषज्यते । बन्धनं वृन्तम् । सख इति उक्तमर्थं संवादयति । शिरीषं शिरीषपुष्पम्। आगण्डेत्यादि । गण्डस्याप्ययमलङ्कार इत्यपि द्योतयति। न वेति वाशब्दः समुच्चये । कोमलमिति धर्मयोरेकनिर्देश इति न्यायादनेन धावल्यादिकमपि द्योत्यते। अत्र समुच्चयश्च ॥

किण्णु इति। चकितचकिता अत्यर्थं भीता। इवेति संभावना-याम्। एसो इति। दास्याःपुत्र इति । पुत्रेऽन्यतरस्यामिति निन्दाया-मलुक्। पाटच्चरश्चोरः। स्वत एवाकृत्यकारीत्यर्थः। अतिलङ्घयत्या-वृणोति। अथोन्मादमूर्छां प्रतिपन्नो राजा चित्रगतामपि शकुन्तलामेवा-स्मत्प्रियतमेयमिति निश्चित्याह नन्विति। नन्वित्यनुवादे । एवं तर्ह्य-त्यर्थः। वार्यतामिति विधौ लोट् । अथ तदीयमुन्मादमवगम्य तदनु-गुणं व्यवहरति भवं इति। भवानेव न त्वहम् । अविनीतानुशासीति हेतुगर्भम् ॥

तदुक्तमनुवदति युज्यत इति। अथ भ्रमरमभिमुखीकृत्य मधु-

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥ १९ ॥

सानु—अज्जवि खु अभिआदं एसो वारिदो । (अद्यापि खल्वभिजातमेव वारितः)

विदू—पडिसिद्धेऽपि वामा एसा जादी । (प्रतिषिद्धेऽपि वामैषा जातिः)

राजा—एवं न मे शासने तिष्ठसि । श्रूयतां तर्हि सम्प्रति ।

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ २० ॥

---

स्वचनेन प्रियामुखाद्वियोजयितुमुपक्रमते । अयि भो इति । कुसुमप्रधाना लता कुसुमलता तस्याः प्रियातिथ इति । कुसुमलता समुपस्थितं त्वां सत्करिष्यत्यतस्तामेवाभिसरेति भावः । किं किमर्थम् । इतः अस्या वदने । परिपतनं संचरणं तत्खेदमिति । परिपतने परिश्रम एवावाशिष्येतेत्यर्थः । किञ्चेत्याहैषेति । एषेत्यालेख्यालिखिते कस्मिन्नपि पुष्पे लिखितां भ्रमरीमुद्दिश्य वास्तवबुद्ध्या निर्देशः । कुसुमनिषण्णेति पानव्यवसाय उक्तः । तत्र हेतुस्तृषितेति । आग्रहवतीत्यर्थः । अपीति विरोधे । सती वर्तमाना । अनुरक्तेति प्रतिपालने हेतुः । अथ चिरयति मयि सा स्वयं पास्यतीति चेन्नेत्याह न खल्विति । तदेषा त्वरितमभिगम्यतामिति भावः । अज्जवीति । अद्यापि उन्मादावस्थायामपि यद्वा प्रियापरिभवेऽपि । अभिजातमपरुषम् । वारित इति । अत्र विस्मयः ।

त्वया वारितोऽप्ययं न विरमतीत्याह पडिसिद्ध इति । प्रतिषिद्ध इति कर्मणि क्तः । वामत्वे प्रतिषिद्धेऽपीत्यर्थः । यद्वा भावे क्तः ।

विदू—एव्वं तिक्खणदण्णस्स किं ण भाइस्सइ । (एवं तीक्ष्णदण्डस्य किन्न भेष्यति)

(प्रहस्यात्मगतम्)

एसो दाणीं उन्मत्तओ । अहं वि एदस्स संसग्गेण ईरिसवण्णो संवृत्तो । (एष इदानीमुन्मत्तकः। अहमप्येतस्य संगसर्गेण ईदृशवर्णः संवृत्तः । )

(प्रकाशम्)

भो चित्तं खु एदम् । (भोः चित्रं खल्वेतत् ।)

राजा—कथमेतत् ।

सानु—अहं वि दाव दाणीं अणवगदत्था । किं उण जहालिहि-

---

प्रतिषेधेपीत्यर्थः । वामा विरुद्धमार्गवर्तिनी । एषा जातिर्भ्रमरजातिः । एवं त्वदाज्ञां न बहुमनुत इत्यर्थः । अथ प्रतिषेधेऽपि विरोधात्यजनाद्भ्रमरं प्रति क्रुद्ध आहैवमिति । एवमिति एवं किमाचरसीत्यर्थः । आचारस्यानुचितत्वं प्रकाशयति न म इति । तिष्ठसीति अत्र काका प्रश्नः । श्रोतव्यमाहाक्लिष्टेति । अक्लिष्टो यो बालतरोः पल्लवः । अक्लिष्ट इत्यनेनान्यूनगुणत्वं बालतरोरित्यनेन गुणोत्कर्षश्च द्योत्यते । बालपदेन शकुन्तलाया नवयौवनाविर्भावश्च । तद्वल्लोभनीयं सौकुमार्यादिना स्पृहणीयामिति सदयमेव पाने हेतुः । मया अत्युत्कण्ठितेनापि । सदयमिति सदयं सुन्दरि गृह्यत इत्यत्रेवार्थः । बिम्बाधरं बिम्बसदृशमधरमिति रक्तिमातिशयः प्रकाश्यते । स्पृशसि चेत् स्पर्शोऽपि न कर्तव्यः का कथा रसास्वाद इति भावः । भ्रमरेत्यन्वर्थं बन्धनासहत्वं सूचयति । प्रियाया इति पूर्वावस्थास्मरणं च । कमलोदरमेव बन्धनं कारागृहम् । इदमेव भ्रमरस्योचितमिति भावः । तत्स्थं कारयामीति प्रयोजकत्वोक्तिः स्वस्य प्रभुत्वं प्रकाशयति ॥

एव्वं इति । किं न भेष्यति एव भेष्यत्येवेत्यर्थः । आक्षेपगर्भेयमुक्तिः । सुकुमारोयं दण्डप्रकार इति भावः । प्रहस्येति । स्वात्मस्थाया

दाणुहावी एसो। (अहमपि तावदिदानीमनवगतार्था। किं पुनर्यथालिखितानुभाव्येष:)

राजा—किं त्वया पौरोभाग्यमाचरितम्।

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २१ ॥

(बाष्पं विहरति)

सानु—पुव्वावरविरोही अपुव्वो एस विहाणमग्गो। (पूर्वापरविरोध्यपूर्व एष विधानमार्ग:)

राजा—वयस्य। कथमविश्रामदुःखमनुभवामि।

प्रजागरात् खिलीभूतस्तस्याः स्वप्ने समागमः।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२ ॥

---

अनुसंधानाद्धास:। तामाह एसो इति। ईदृशवर्ण: वर्णपदेन स्वभावो लक्ष्यते। एवंविध इत्यर्थ:। ईदृशानि वर्णान्यक्षराणि यस्य स इति केचित्। कथमिति। कथमेतच्चित्रं स्यादित्यर्थ:। अथास्यानवगतार्थत्वं सङ्गच्छत इत्याहाहं वीति। यथालिखितानुभाव्यी पूर्वमनुभूतं हि लिखितमित्यर्थ:॥

किमिति पौरोभाग्यमिति। दोषैकदृक् पुरोभागीत्यमर:। अत्रानेनापराधो लक्ष्यते। किं तादित्यत्राह दर्शनेति। साक्षात् प्रत्यक्षम्। इवेति वाक्यालङ्कारे। तन्मयेन कान्तामयेन हृदयेनेति कान्तैवेयमिति दृढबुद्ध्येत्यर्थ:। स्मृतिकारिणा आलेख्यकान्तेयमिति स्मृतिं कारितवता। मध्ये अन्यथात्वात् पुनरपीति। चित्रीकृता आलेख्यस्था कृता। बाष्पं विहरतीति। विसृजतीत्यर्थ:॥

पुव्वावरेति। पूर्वापरविरोधी पूर्वमास्थया हि प्रियाया: परिग्रह: पश्चादनास्थया परित्याग: पुनरिदानीमास्थया पश्चात्ताप इति पूर्वापरविरोध:। अत एव अपूर्व: अदृष्टपूर्व: विधानमार्ग: वृत्तान्तप्रकार:। अत्र विस्मय:। अथालेख्यदर्शनादिविनोदस्य बाष्पादिना प्रतिहननात् सखेदमाह वयस्येति। संबुद्ध्या त्वमेवात्र शरणमिति

सानु—सव्वहा पमज्जिदं तुए पच्चादेसदुःखं सउन्दळाए। (सर्वथा प्रमृष्टं त्वया प्रत्यादेशदुःखं शकुन्तलायाः)

(प्रविश्य)

चतुरिका—जयदु भट्टा। वत्तिआकरण्डअं गहि्णअ इदोमुही पत्थिदह्मि (जयतु भर्ता। वर्तिकाकरण्डकं गृहीत्वा इतोमुखी प्रस्थितास्मि)

राजा—किम्।

चतु—अस्मद्धत्थादो अन्तरा पिङ्गळिआदुदीआए देवीए वसुमदीए अहं एव्व एदं अॅअउत्तस्स उवणइस्सात्ति सबळक्कारं गहिदम्। (अस्मद्धस्तादन्तरा पिङ्गलिकाद्वितीयया देव्या वसुमत्याहमेवैतदार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतम्)

विदू—दिट्ठिआ तुवं मुक्का (दिष्ट्या त्वं मुक्ता)

चतु—जाव विडवळग्गं उत्तरीअं देवीए पिङ्गळिआ मोएदि दाव

---

मूर्च्छ्यते। कथमित्यादि। निरन्तरदुःखमनुभवितुं न शक्नोमीत्यर्थः। कुत इत्यत्राह प्रजागरादिति। खिलीभूत इत्यनेन निरोधो लक्ष्यते। ददातीति। अवसरमित्यर्थात्। यद्वा ददातीत्यनेन विधेयीकरणं लक्ष्यते। एनामित्येव कर्म। चित्रगतामपीति साक्षाद्दर्शनं पुनरतिदुर्लभमेवेत्यपिशब्देन द्योत्यते। अत्र वियोगे चायोग इत्यादिनोक्तयोरप्यभावस्य उपलक्षणमेतत्। तदवस्थामालोक्य सकरुणमाह सव्वहेति। सर्वथा वाङ्मनःकायिकैर्व्यापारैः। शकुन्तलायाः प्रत्यादेशदुःखं शकुन्तलायाः प्रत्यादेशेन यदस्माकं दुःखं तदित्यर्थः। प्रमृष्टमिति। तद्दुःखादप्येवमाधिकदुःखानुभवदर्शनादिति भावः। यद्वा मया कथयिष्यमाणेनैतद्वृत्तान्तेन तव प्रेमातिशयमवगम्य सा प्रत्यादेशदुःखं परित्यक्ष्यतीति भावः। प्रमृष्टमिति। भाविनोऽप्यर्थस्य भूतत्वेन निर्देशोऽविलम्बं द्योतयति॥

जअदु इति। वर्तिकाकरण्डकमिति। वर्तिका चित्रलेखनसा-

णिव्वाहिदो मए अत्ता । (यावद्विटपलग्नमुत्तरीयं देव्याः पिङ्गलिका मोचयति तावन्निर्वाहितो मयात्मा)

राजा—वयस्य उपस्थिता देवी । बहुमानगर्विता च । भवानिमां प्रतिकृतिं रक्षतु ।

विदू—अत्ताणं ति भणाहि (अत्मानमिति भण)

(चित्रफलकमादायोत्थाय)

जइ भवं अन्तेउरकळहादो मुंचिअदि तदो मं मेहप्पडिछंदे पासादे सद्दावेहि । (यदि भवानन्तःपुरकलहान्मुच्येत ततो मां मेघप्रतिच्छन्दे प्रासादे शब्दापय)

(द्रुतपदं निष्क्रान्तः)

सानु—अण्णसंकंतहिअओ वि पुठमासंभावणं अवेक्खदि ठिरसोह-

---

धनं करण्डकं भाजनम् । अस्मदिति । पिङ्गलिका वसुमत्याः सखी सबलात्कारं गृहीतमिति । वर्तिकाकरण्डकमित्यनुषज्यते । वर्तिकाकरण्डकनयनं विनोदार्थं राज्ञः शकुन्तलाप्रतिकृतिलेखनोपयोगि भवेदिति मत्वा प्रणयकोपेन तद्विघटनायैवमाचरितमिति कोपानुभावोऽयम् । जावेति । विटपलग्नमिति । इदं कोपेन ससंभ्रमगमनात् । निर्वाहितः देशमिमं प्रापितः । आत्मा देहः ॥

उपस्थितेति । बहुमानेन मत्कर्तृकेण गर्विता । देवी यद्येतदवस्थं मामवलोकयेत्तदा कुपितायास्तस्याः पसादनं दुर्घटं स्यादिति भावः । रक्षत्विति । अनेन प्रतिकृतेरप्यपायः शङ्कनीय इति द्योत्यते । देव्यागमनश्रवणेन संभ्रान्त आह अत्ताणं इति । मह्यमेवाधिकं कुप्येदतो गच्छामीति भावः । जइ इति । मेघप्रतिच्छन्द इति प्रासादस्य गुणनाम । निष्क्रान्त इति । एतदर्थमेव देवीप्रसङ्गः । निष्क्रामणफलं च मातलिप्रवेशे व्यक्तीभविष्यति । मेघप्रतिच्छन्दप्राप्तिश्च मातलिप्रवृत्तिसौकर्यार्था ॥

राज्ञो वचनेन तस्यासाधारणं दाक्षिण्यमवगत्य सविस्मयं श्ला-

दो एसो। (अन्यासंक्रान्तहृदयोऽपि प्रथमासंभावनमपेक्षते स्थिरसौहृद एषः)

(प्रविश्य पत्रहस्ता)

प्रतीहारी—जयदु देवो (जयतु देवः)

राजा—वेत्रवति न खल्वन्तरा दृष्टा त्वया देवी।

प्रति—अथ इम्। (अथ किम्) पत्थहत्थं मं दक्खिअ पडिणिवुत्ता। (पत्रहस्तां मां दृष्ट्वा प्रतिनिवृत्ता)

राजा—कार्यज्ञा कार्योपरोधं मे परिहरति।

प्रती—देव अमच्चो विण्णवेदि अत्थजातस्स गणणाबहुळदाए एक्कं एव्व पोरकज्जं पच्चवेक्खिदं तं देवो पत्तारूढं पच्चक्खीकरोदु त्ति। (देवामात्यो विज्ञापयति अर्थजातस्य गणनाबहुलतया एकमेव पौरकार्यं प्रत्यवेक्षितम्। तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति)

राजा—इतः पत्रं दर्शय।

प्रती—(उपनयति)

राजा—(अनुवाच्य) कथं समुद्रव्यवहारी सार्थवाहो धनमित्रो नौ-

---

घते श्लाघत इति। प्रथमा पूर्वमहिषी तत्संभावनं तद्बहुमानम्॥

अथ प्रस्तुतविरहवेदनायाः परिपोषं प्रदर्शयितुमनपत्यतादुःखं वर्णयिष्यन् पूर्वप्रस्तुतायाः प्रतीहार्याः प्रवेशमाह तत इति। न खल्विति। खल्विति प्रश्ने। कार्योपरोधपरिहारेच्छां प्रतिनिवृत्तौ हेतुं दर्शयन् देवीं श्लाघते कार्यज्ञेति। कार्यज्ञेति हेतुगर्भम्। अमच्च इति। अर्थो राजकीयं धनं कार्यं वा तज्जातस्य तत्समूहस्य॥

कथमिति। कथमिति विचारे। समुद्रव्यवहारी पोतवणिक्। सार्थवाहः श्रेष्ठिकः। नौव्यसनेन नावो भ्रंशेन। "व्यसनं विपदि भ्रंशे" इत्यमरः। किलेति वार्तायाम्। धनमित्रावस्थां विचिन्त्य सविषादमाह कष्टमिति। कष्टं दुःखम्। कार्यकारणयोरभेदोपचारः। दुःखातिशयकारिणीत्यर्थः। सर्वेषामित्यर्थात्। वेत्रवतीति। विचीयतामन्विष्यताम्। देवेति। साकेतकस्य अयोध्यावासिनः॥

व्यसनेन विपन्नः । अनपत्यश्च किल सः । राजगामी तस्यार्थसञ्चय इत्यमात्येन लिखितम् ।

(सविषादम्)

कष्टं खल्वनपत्यता । वेत्रवति महाधनत्वात्तत्रभवता बहुपत्नीकेन भवितव्यम् । विचीयतां काचिदापन्नसत्त्वापि तस्य भार्या स्यात् ।

प्रती—देव दाणीं एव्व साकेदअस्स सेट्ठिणो दुहिदा णिवुत्तपुंसवणा जाआ से सुणीअदि ॥ (देवेदानीमेव साकेतकस्य श्रेष्ठिनो दुहिता निवृत्तपुंसवना जायास्य श्रूयते)

राजा—ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ । एवममात्यं ब्रूहि ।

प्रती—जं देवो आणवेदि । (यद्देव आज्ञापयति)

(प्रस्थिता)

राजा—एहि तावत् ।

प्रती—इअं ह्मि । (इयमस्मि)

राजा—किमनेन सन्ततिरस्ति नास्तीति ।

---

ननुविति । नन्वित्यवधारणे । रिक्थं धनम् । एवं ननु गर्भ इत्याद्युक्तप्रकारेण । अथ परदुःखानुसन्धानेन तद्विषयककारुण्योद्बोधादाहेहीति । किमनेनेति । सन्ततिरस्तु वा मास्तु वा तद्विचारो मास्त्विति भावः । अथ धनमित्रस्यार्थजातं तद्बान्धवा एवानुभवन्त्वित्यर्थं दर्शयितुं सामान्येनाह येन येनेति । स इति दुष्यन्तस्तत्कृत्यकारीत्यर्थः । विशेषमाह पापादिति । पापाद्दुष्टात् पापस्य विपत्तौ तत्कार्यकारिनेत्यर्थः । पापादृते इत्यस्य तासामित्यनेन वा संबन्धः । पापभिन्नानां प्रजानामित्यर्थः । घुष्यतां "उच्चैर्घुष्टं तु घोषण"मित्यमरः । भेरीप्रहारपूर्वकमावेद्यतामित्यर्थः । एठ्ठं णामेति । एवं घोषयिष्यामीत्यर्थः; क्वचित् घोषयिष्यामीति पाठः । काळ इति । प्रवृष्टं प्रभूतं वर्षम् ॥

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ २३ ॥

प्रती—एव्वण्णाम घोसइदव्वम् । (एवन्नाम घोषयितव्यम्)

(निष्क्रम्य पुनः प्रविश्य)

काळे पविट्ठं विअ अहिणन्दिअं देवस्स सासणं अमच्चेण जणेण अ ॥ (काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनममात्येन जनेन च)

राजा—(दीर्घं निश्वस्य) एवं भोः सन्ततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति । ममाप्यन्ते पूरुवंशश्रिय एष वृत्तान्तः ।

प्रती—पडिहदं अमङ्गळम् (प्रतिहतममङ्गलम्)

राजा—धिङ्मामुपस्थितश्रेयोवमानिनम् ।

सानु—असंसअं सहीं एव्व हिअए करिअ णिन्दिदोऽणेण अत्ता ॥ (असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा)

राजा— संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।

---

अत्र प्रतीहार्याः पुनःप्रवेशपर्यन्तं राज्ञो व्यापारान्तरावर्णनेन राजानपत्यतावस्थामेव ध्यायन् स्थित इति प्रकाश्यते । प्रतीहारीवचनेन च तद्ध्यानात् किञ्चिन्निवृत्तः पुनरपि तामेव चिन्तयन् स्वयमाहैवमिति । एवं धनमित्रवत् । भो इति चिन्तायाम् । दीर्घनिश्वासादयस्तदनुभावाः । मूलपुरुषः कारणपुरुषः । उपतिष्ठन्ति प्राप्नुवन्ति । उक्तमर्थमात्मनि योजयन्नाह ममापीति । पूरुवंशेति । पूरुपदेन वंशवैशिष्ट्यं द्योतयता तच्छ्रियः परोपस्थानस्यातिशोच्यत्वं सूच्यते । एष वृत्तान्तः एतत्सदृशो वृत्तान्तः । स्यादिति शेषः । अत्रात्मानमेवापराधिनं मन्यमानः सनिर्वेदमाह धिगिति । श्रेयःपदेनापन्नसत्त्वा शकुन्तला विवक्षिता । असंसअं इति । राजोक्तार्थानुवादप्रायमेतत् ॥

अथोपस्थितेत्याद्युक्तमेवार्थं दुःखातिशयेन विशदीकुर्वन्नाह सं-

कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ॥ २४ ॥

सानु—अपरिछिण्णा सन्तदी दे भविस्सदि ॥ (अपरिच्छिन्ना सन्ततिस्ते भविष्यति)

चतुरिका—(जनान्तिकम्) अए इमिणा सत्थवाहवुत्तन्तेण दिउणिआणुसओ भट्टा । णं आस्सासइदुं मेहप्पडिछन्दादो माठव्वं गह्णिअ आअछामि । (अये अमुना सार्थवाहवृत्तान्तेन द्विगुणितानुशयो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दान्माढव्यं गृहीत्वा आगच्छामि)

प्रती—सुट्ठु भणासि । (सुष्ठु भणसि)

(निष्क्रान्ता चतुरिका)

राजा—अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः । कुतः ।

---

रोपित इति । संरोपितेऽप्यात्मनि निषिक्तेऽपि बीज इत्यर्थः । "आत्मा प्रविश्य जायायां पुत्ररूपेण जायत" इति स्मृतिः । तत्काले परित्यागस्यात्यन्तानौचित्यमपिशब्दो द्योतयति । नामेति कुत्सने । कुलप्रतिष्ठा कुलस्थितिहेतुभूता । अत्र हेतुः कल्पिष्यमाणा महते फलायेति । अयमुपमायां साधारणो धर्मः । फलं सन्तानं धान्यादिकं च । वसुन्धरेत्यन्वर्थं वैशिष्ट्यं द्योतयति । उप्तं कृतवपनं बीजं यस्या इति संरोपितेऽप्यात्मनीत्यस्य प्रतिबिम्बम् । धर्मपत्नीपरित्यागः कृत इत्येव नापराधः, सन्ततिविच्छेदस्याप्यहमेव हेतुरिति शोकातिशयोत्र निर्वेदाद्युरस्कृतो गम्यते । अहो इत्यादिना चोपसंहारे पुत्रशोकस्यास्यैव परिपोषो वर्णयिष्यते । अपरिछिण्णेत्यादि स्पष्टम् ॥

अथानपत्यतया न केवलमैहिकस्य परं तु पारत्रिकस्यापि श्रेयसो विघातो जात इति सातिशयं शोचति अहो इति । दुष्यन्तस्येति निन्दागर्भम् । संशयं पिण्डमस्ति वा न वेति । पिण्डभाजः पितरः ।

अस्मात् परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि करिष्यतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २५ ॥
(मोहमुपगतः)

प्रती—(ससंभ्रममवलम्ब्य) अस्ससदु अस्ससदु भट्टा । (आश्वसित्वाश्वसितु भर्ता)

सानु—हद्धि हद्धि । सदि दीवे खु ववहाणदोसेण एसो अन्धआरं अणुहोदि । अहं दाणीं एव्व णिव्वुदं कारए । अहव सुदं मए सउन्दलं समासासअन्तीए महिन्दजणणीए मुहादो जण्णभाउस्सुआ देवा एव्व तह अणुचिट्ठन्ति जह तुमं धम्मपदिणीं

---

अत एव पितॄणामवस्थां संभावयन्नाहास्मादिति । अस्मादुष्यन्तात् । बतेति खेदे । यथाश्रुति यथाविधि । क इति क्षेपे । न कोऽपीत्यर्थः । निवपनानि पितृतर्पणानि । नियच्छतीति पाठे वर्तमानसामीप्ये लट् । दास्यतीत्यर्थः । इति इति मत्वा । नूनमिति संभावनायां । प्रसूतिविकलेन निरपत्येन । प्रसिक्तं दत्तम् । धौतमश्रु येन करणेन तद्धौताश्रु ततः शेषम् । मद्दत्तेन जलेन प्रथममश्रु क्षालयित्वा पश्चात्तच्छेषं जलं पितरः पिबन्तीति संभावयामीत्यर्थः । यथा रघौ "मत् परं दुर्लभं मत्वा नूनमावर्जित"मित्यादि । मोहमुपगत इति । पश्चात्तापसदृशत्वेष इत्यङ्कादावुपक्रान्तस्य पश्चात्तापस्य परमा काष्ठानेनोपसंहारे प्रदर्शिता ॥

राज्ञस्तदवस्थामालोक्य सकरुणमाह हद्धि इत्यादि । सति दीपे खलु व्यवधानदोषेणैषोऽन्धकारमनुभवतीति । सत्येव पुत्रे तदज्ञानादेव तद्राहित्यदुःखमनुभवतीत्यर्थः । अत्र ललितालङ्कारः । तन्निवृत्त्युपायं विचिन्त्याहाहमिति । निर्वृतं कुर्यामिति । पुत्रसद्भावं निवेदयेयमिति भावः । अथवेति । न निवेदयामीत्यर्थः । कुत इत्यत्राह श्रुतमित्यादि । एतच्च पुनराक्षेपबिन्दुः । अथ राजर्षेरुदन्तमेवं सा-

अइरेण भट्टा अहिणन्दिस्सदि त्ति । ता जुत्तं एदं कालं खंतुं जाव इमिणा वत्तिआउत्तन्तेण पिअसहीं आस्सासेमि ॥ (हा धिक् हा धिक् । सति दीपे खलु व्यवधानदोषेणैषोऽन्धकारमनुभवति । अहमिदानीमेव निर्वृतं कुर्याम् । अथवा श्रुतं मया शकुन्तलां समाश्वासयित्र्या महेन्द्रजनन्या मुखात् यज्ञभागोत्सुका देवा एव तथानुतिष्ठन्ति यथा त्वां धर्मपत्नीमचिरेण भर्ता अभिनन्दिष्यतीति । तद्युक्तमेतं कालं क्षन्तुम् । यावदमुना वर्तिकावृत्तान्तेन प्रियसखीमाश्वासयामि)

(निष्क्रान्ता)

(नैपथ्ये)

अविहा अविहा ।

राजा—(कर्णं दत्वा) माढव्यस्येवार्तस्वरः । कः कोऽत्र भोः ।

(प्रविश्य)

चतु— परित्ताअदु परित्ताअदु देवो संसअगअं वअस्सम् । (परित्रायतां परित्रायतां देवः संशयगतं वयस्यम्)

---

क्षात्कृत्य तद्विनियोगाय त्वरमाणाह यावदिति । वर्तिकावृत्तान्तेनालेख्यवृत्तान्तेन । वृत्तान्तेनेत्यपि पाठः । अत्र यदर्थं सानुमत्याः प्रवेशस्तदनेन निर्व्यूढम् ॥

अथ नायकं रसान्तरे प्रवेशयितुं मातलिप्रवेशमुत्थापयति । नैपथ्य इति । कर्णं दत्वेति । अनेन मोहनिवृत्तिर्दर्शिता । माढव्यस्येति । आर्तस्वरो रोदनम् । माढव्यमानेतुं गता चतुरिका तदवसरे प्रविश्य ससंभ्रममाह । परित्ताअदु इति । संशयगतं संशयो जीवितसंशयः । केनेति । केन कस्माद्धेतोः । आर्त्तकण्ठः आर्तस्वरः । "कण्ठः शब्दे गतेऽन्तिक" इति भोजः । आतगन्ध इति पाठ अभिभूत इत्यर्थः केनेति कर्तरि तृतीया । माणवक इति दयनीयत्वं द्योतयति । देवेति । अदृष्टरूपेण छन्नेन । सत्वेन भूतपिशाचादिष्वन्यतमेन । आक्रम्य बलात् ॥

राजा—केनार्तकण्ठो माणवकः ।

चतु—देव अदिट्ठरूवेण केण वि सत्तेण अक्कमिअ गहिअ मेहप्पडिच्छन्दस्स पासादस्स अग्गभूमिं आरोविदो । (देवादृष्टरूपेण केनापि सत्त्वेनाक्रम्य गृहीत्वा मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः)

राजा—(उत्थाय) मा तावत् । ममापि सत्त्वैरभिभूयन्ते गृहाः । अथवा ।

अहन्यहन्यात्मन एव तावत्
ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतो वेदितुमस्ति शक्तिः ॥ २६ ॥

(नैपथ्ये)

---

उत्थायेति । अत्र नायकस्य वर्ण्यमानेन वीररसेन प्रस्तुतस्य विप्रलम्भस्य तिरस्कारः । विदूषकस्य करुणेन च वीरस्य प्रस्तावावसर उपपादित इति ध्येयम् । मा तावदिति । विपरीतमेतदित्यर्थः । किं तदित्यत्राह ममापीति । ममापि सत्त्वाभिभाविनो ममापि । सत्त्वैः क्षुद्रैर्भूतादिभिः न त्वात्मसमैस्तेजस्विभिः । गृहाः न तु जनपदः । स्वापकर्षसंभावनया दैन्यमत्र भावः । केचित्तु ममापि धार्मिकस्य निर्दोषस्य ममापीत्यर्थ इत्याहुः । अथ प्रजापचारनिमित्तकमिदमिति मन्वान आह अथवेति । नैतदनुपपन्नमित्यर्थः । कुत इत्यत्राहाहनीति । तावदात्मीयेन । प्रमादेनानवधानेन जातं स्खलितं दुराचरणम् । न शक्यं जनैर्मया वेति शेषः । अत्र स्वस्य प्रमादपतितं पत्नीपरित्यागं मनसिकृत्यात्मनः प्रमादस्खलितमित्युक्तम् । प्रजास्विति निर्धारणे सप्तमी । केन पथा न्याय्येनान्याय्येन वा । अस्तीत्यत्र काकुः । नास्तीत्यर्थः । अत्र काव्यार्थापत्तिः । मतिर्भावः ।

भो वअस्स अविहा अविहा । (भो वयस्य अविहाविहा)

राजा—(गतिभेदेन परिक्रामन्) सखे न भेतव्यं न भेतव्यम् ।

(नैपथ्ये पुनस्तदेव पठित्वा)

कहं ण भाइस्सं । एसो मं कोवि पच्चादवणदसिरोहरं इक्खुं विअ तिक्खणभङ्गं करेइ । (कथं न बिभेमि । एष मां कोऽपि पश्चादवनतशिरोधरं इक्षुमिव तीक्ष्णभङ्गं करोति)

राजा—(सदृष्टिक्षेपम्) धनुस्तावत् ।

(प्रविश्य शार्ङ्गहस्ता)

यवनिका—भट्टा इदं ससरं सरासणं हत्थावावसहिदम् । (भर्तः इदं सशरं शरासनं हस्तावापसहितम्)

राजा—(सशरं धनुरादत्ते)

(नैपथ्ये)

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥ २७ ॥

राजा—(सरोषम्) कथं मामेवोद्दिशति । तिष्ठ तिष्ठ कुणपाशन । न त्वमिदानीं भविष्यसि । (शार्ङ्गमारोप्य) वेत्रवति सोपानमार्गमादेशय ।

---

भो वअस्स अविहेति । अनेन वीररसं परिपोषयति । न भेतव्यमिति तदाश्वासनपरम् । कहमिति । तीक्ष्णभङ्गमिति । भङ्गः परिभवः । इक्षुपक्षे भञ्जनम् । धनुस्तावदिति आनयेति शेषः । शार्ङ्गहस्तेति । शार्ङ्गं चापम् ॥

एष इति । अहमिति शेषः । अभिनवेत्यादि हनने हेतुः । तत्रानायासः शार्दूलः पशुमिवेत्युपमया प्रकाश्यते । चेष्टमानं लुठन्तम् । अत्र बीभत्सो रसः । आर्तानामित्यादि गम्भीराक्षेपः ॥

प्रती—इदो इदो। (इत इतः)

(सर्वे सत्वरमुपसर्पन्ति)

राजा—(समन्तादवलोक्य) शून्यं खल्विदम्।

(नैपथ्ये)

अविहाविहा। अहं अत्तभवं पेक्खामि। तुवं मं ण पेक्खसि। विळाळग्गहिदो मूसिओ विअ णिरासंह्मि जीविदे संवुत्तो। (अहमत्रभवन्तं पश्यामि। त्वं मां न पश्यसि। बिलालगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः)

राजा—भोस्तिरस्करिणीगर्वित मदीयमस्त्रं त्वां द्रक्ष्यति। एष तमिषुं सन्दधे।

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षति च द्विजम्।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः॥ २८॥

(अस्त्रं च सन्धत्ते)

(ततः प्रविशति विदूषकमुत्सृज्य मातलिः विदूषकश्च)

---

गम्भीराक्षेपस्य फलं दर्शयति। सरोषमिति। कथमिति वितर्के। तिष्ठ तिष्ठेति वीप्सा रोषावेगं सूचयति। कुणपाशनेति निन्दागर्भम्। कुणपः शवमस्त्रियामित्यमरः। न त्वमिदानीं भविष्यसीति। त्वामद्यैव हन्मीत्यर्थः। शून्यं खल्विदमिति। अत्र विस्मयः। पुनरपि रसपरिपोषायाह नैपथ्य इति। अविहेति। बिलालगृहीतो मूषिक इवेत्युपमया जीवितनाशस्यावश्यंभावो द्योत्यते॥

तिरस्करिणीगर्वितेति। तद्गर्वमपहरामीति भावः। इषुं शरम्। य इति। वध्यं रक्ष्यमिति हेतुगर्भम्। रक्ष्यत्वे हेतुर्द्विजमिति। रक्षति रक्षिष्यति। चकारो हननरक्षणयोर्यौगपद्यं द्योतयति। अथोक्तार्थे असंभाव्यत्वशङ्कां परिहर्तुं दृष्टान्तमाह हंस इति। तथा च स्वभाव एवायमिति भावः। अत्र दृष्टान्तालङ्कारः॥

मातलिः— कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥ २९ ॥

राजा—(अस्त्रमुपसंहरन्) अये मातलिः । स्वागतं देवेन्द्रसारथये ।

विदू—अहं जेण इट्ठिपसुमारं मारिदो सो इमिणा साअदेण अहिणन्दीअदि (अहं येनेष्टिपशुमारं मारितः सोऽमुना स्वागतेनाभिनन्द्यते)

मातलिः—(सस्मितम्) आयुष्मन् यदस्मि हरिणा भवत्सकाशं प्रेषितः ।

राजा—अवहितोऽस्मि ।

मातलिः—अस्ति कालनेमिप्रभृतिः दुर्जयो दानवगणः ।

राजा—श्रुतपूर्वं मया नारदात् ।

मातलिः— सख्युस्ते स किल शतक्रतोरजय्य-
स्तस्य त्वं रणशिरसि स्मृतोऽसि हन्ता ।

---

मातलिर्निजागमनकार्यं सामान्येन कथयन् राज्ञः कोपं शमयति कृता इति । शरव्यं लक्ष्यम् । लक्षं लक्ष्यं शरव्यं चेत्यमरः । हरिणा इन्द्रेण । शरासनं सन्धितशरं धनुः । तेषु लक्ष्येषु कृतेष्वसुरेषु । विकृष्यतामिति । शरमोक्षस्य शरव्यभेद एव प्रार्थ्यते न तदुपसंहार इति भावः । अथ सामान्यमुखेनात्मनि प्रसाद एव कर्तव्य इति कथयन् शरव्यतां निषेधति प्रसादेति । प्रसादेन सौम्यान्यनुग्राहीणि । आह्लादकानीति यावत् । पतन्तीति लटाव्यभिचारः प्रकाश्यते । नेति । पतन्तीत्यनुषज्यते । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा ॥

अये मातलिरिति । अये इति विस्मये । देवेन्द्रसारथय इति गौरवं द्योतयति । सासूयमाहाहमिति । इष्टिपशुमारमिति । यथा यागे पशुर्मार्यते तथेत्यर्थः । सस्मितमिति । विदूषकवचनेन स्मितम् । यद-

उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ ३० ॥

स भवानात्तशस्त्र एव इदानीमैन्द्रं रथमारुह्य विजयाय प्रतिष्ठताम् ।

राजा—अनुगृहीतोऽस्म्यनया मघवतः संभावनया । अथ माढव्यं प्रति भवता किमेवं कृतम् ।

मातलिः—किन्निमित्तादपि मनस्सन्तापादायुष्मान्मया विक्लबो दृष्टः । पश्चात् कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ।

---

स्मीति । यद्यस्मात । अस्मि अहम् । तच्छ्रूयतामिति शेषः । अत आहावहितोऽस्मीति । अनेन श्रवणादरं द्योतयन्निन्द्रे बहुमानं प्रकाशति । श्रुतपूर्वमिति । अस्तीति पूर्वं श्रुतमित्यर्थः । सख्युरिति । सख्युः पूर्वं साहाय्यानुष्ठानात्सुहृद इति स्मृतोऽसीत्यत्र हेतुः । सः दानवगणः । किलेति प्रसिद्धौ । शतक्रतोरिति पराक्रमातिशयं व्यञ्जयति । रणशिरसि युद्धाग्रे । ननु शतक्रतोरजय्यः कथं मम जय्य इत्याशङ्कां परिहर्तुं दृष्टान्तमाहोच्छेत्तुमिति । सप्तसप्तिः सूर्यः । नैशं निशाभवम् । अत्र दृष्टान्तः । तेन शतक्रतोस्तद्दानवहननाशक्तिरदृष्टविशेषेणैवेति व्यज्यते । तेन शतक्रतोर्निकर्षो नास्तीति च ॥

अथ कर्तव्यमाह स भवानिति । आत्तशस्त्र एवेत्येवकारेण सहायान्तरव्यवच्छेदः प्रकाश्यते । सविनयमनुवदत्यनुगृहीत इति । संभावनया बहुमत्या । मघवत इत्यन्वर्थमिन्द्रस्य सर्वपूज्यत्वं वदत्तत्संभावनया स्वस्य कृतार्थतां प्रकाशयति । अत एवानुगृहीत इति । अथ वयस्यपरिभवे हेतुं पृच्छत्यथेति । किन्निमित्तादिति । किन्निमित्तात् किञ्चित्कारणात् । कोपाधाने हेतुमाह । ज्वलतीति । अत्र दृष्टान्तः । तद्द्वयोश्चेतनाचेतनसाधारण्यप्रदर्शनार्थो । उत्तरार्द्धे सामान्यनिबन्धनाप्रस्तुतप्रशंसा । अर्थान्तरन्यासो वा ॥

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं कोपात् प्रतिपद्यते हि जनः ॥ ३१ ॥

राजा—युक्तमनुष्ठितं भवद्भिः । (जनान्तिकम्) वयस्य अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यमार्यपिशुनं ब्रूहि ।

त्वन्मतिः केवला तावत् परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन् कर्मणि व्यापृतं धनुः ॥ ३२ ॥

इति ।

विदू—जं भवं आणवेदि । (यद्भवानाज्ञापयति)

(निष्क्रान्तः)

मातलिः—इत इत आयुष्मान् ।

राजा—तथा । (रथारोहणं नाटयति)

(निष्क्रान्ताः सर्वे)

इति षष्ठोऽङ्कः ॥

---

तदुक्तमनुमनुते युक्तमिति । वयस्येति । दिवस्पतेरित्यनतिक्रमणीयत्वे हेतुः । परिगतार्थं विदितकार्यम् । त्वन्मतिरिति । केवला एकाकिनी । धनुषः सहायिनोऽभावादिति भावः । एतेन नायकस्योभयायत्तसिद्धित्वं दर्शितम् । तावदद्य तदवधि मत्प्रत्यागमनपर्यन्तामित्यर्थः । परिपालयतु सुष्ठु रक्षतु । उक्तार्थे हेतुमाहाधिज्यमिति । अन्यस्मिन् कर्मणि दानवहनने । व्यापृतमित्यनेनोत्साहातिशयः प्रकाश्यते । व्यापृतत्वं चात्मनिष्ठमारोप्यते धनुषि । यथा "विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनु"रित्यादौ । इत्यत्र वीररसस्य परिपोषः कृतः । अत्र काव्यलिङ्गम् । षष्ठोऽङ्क इति । अत्राङ्के विप्रलम्भप-

रिपोषपरायणे पुरुषस्य धनलाभः स्यालस्य रक्षिणोश्च तत्संविभागलाभः चेट्योरभयदानलाभः सानुमत्याः शकुन्तलामनोरथपूरणसंपत्तिः विदूषकादेः सेवायामौचित्येन स्वामिप्रसादलाभः नायकस्य पश्चात्तापपरवशस्याङ्गुलीयचित्रदर्शनादिना लतादिसदृशदर्शनेन विदूषकसेवाविशेषेण च विनोदलाभश्चेति फलजातमुन्नेयम् । अन्ते मातलिप्रवेशेन वीर्यसन्धुक्षणं चेत्यलम् ॥

इति सारार्थदीपिकायां शाकुन्तलव्याख्यायां

षष्ठोऽङ्कः ॥

# सप्तमोऽङ्कः ॥

(ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च)

राजा—मातले अनुष्ठितनियोगोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ॥

मात—(सस्मितम्) उभयमप्यपरितोषम् ।

प्रथमोपकृतं मरुत्वतः प्रतिपत्त्या लघु मन्यते भवान् ।
गणयत्यपदानविस्मितो भवतः सोऽपि न सत्क्रियागुणान् ॥ १ ॥

---

तत्र राज्ञो बालस्य शकुन्तलाया मारीचस्य च क्रमात् प्रवेशः । रसस्तु वीरोद्भुतश्च रतिर्देवादिविषयेति लक्षितो भावश्च । नायिकाप्रवेशात् परतोऽङ्गी शृङ्गारश्च । परं परस्ताद्वक्ष्यते ॥

अथातीताङ्के सानुमतीवचनेनोपक्षिप्तं नायिकासंगमं नायकस्य वर्णयिष्यन् "अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचना" इत्युक्तेनाङ्कास्येन नायकस्य मातलिना सह प्रवेशमाह । तत इत्यादि । आकाशयानेनेति मारीचाश्रमगमने बीजम् । अथ विजितदानवगणो राजा परितुष्टेन देवराजेन सगौरवं विसृष्टो व्योमयानेन भूलोकमवतरन् देवराजस्य सत्कारातिशयं विचिन्त्याह मातल इत्यादि । संबुद्ध्या हर्षातिशयः सूच्यते । अनुष्ठितो नियोगो महासुरवधरूपो येन सोऽपि । आत्मना उपयोगे जातेऽपीत्यर्थः । मघवत इत्यन्वर्थकं उभयत्रान्वेति । मघवतः सत्क्रियाविशेषात् न केवलं सत्कारमात्रं किन्तु तदतिशयः सोऽपि न यस्य कस्यचिदपि तु त्रिभुवनमहनीयस्येन्द्रस्य तस्मादित्यर्थः । इवेति वाक्यालङ्कारे । समर्थये मन्ये । अत्र विनयाद्युपस्कृता राज्ञो देवराजविषयिका रतिर्व्यज्यते ॥

उभयमित्यादि । उभयं उभाववयवावस्य तत् । उभावित्यर्थः ।

राजा—मा मैवं, मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः। मम हि दिवौकसां समक्षमर्द्धासनोपनिवेशितस्य।

अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन।
आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा ॥ २ ॥

---

अपरितोषमनलंभावम्। तत्प्रकारमाह प्रथमेति। प्रथमं सत्कारात् पूर्वं न तु सामान्यजनस्येव ततः परमिति भावः। उपकृतं दानवनिधनलक्षणमुपकारम्। मरुत्वतः मरुतो देवाः सन्त्यस्येति देवानामपि प्रतिपत्तिं द्योतयति। प्रतिपत्त्या बहुमानेन तत्कार्येण सत्कारेणेति यावत्। लघु मन्यते भवानिति। अहं तु तद्गुर्वेव मन्य इति भावः। अपदानेति। "अपदानं कर्म वृत्त"मित्यमरः। भवत इत्युभयान्वयि। स इन्द्रः। सत्क्रियाणां गुणानावृत्तीः। "गुणस्त्वावृत्ती"त्याद्यमरः। पौनःपुन्येन कृतान् सत्कारानित्यर्थः। भवानिन्द्रश्चोभावपि न परितुष्यतः, अहो द्वयोरपि सौजन्यमिति मातलेर्विस्मयो हर्षश्च। अत एव स्मितम्। एतत्समानो रघावपि प्रयोगः। यथा "जनस्य साकेतनिवासिनस्तौ"वित्यादिः। विस्मयाद्युपस्कृतोभयविषयिका रतिः प्राधान्येन व्यङ्ग्या। अत्रापदानसंपत्प्रतीतेरुदात्तमलङ्कारः। एवमुत्तरत्राप्यूह्यम्। राजमरुत्वतोः परस्परसाम्यप्रतीतेरुपमेयोपमा व्यज्यते ॥

मेति। मा मैवं इन्द्रस्यापरितोषस्य नावकाश इति। यद्वाहमत्र न प्रशंसनीय इति भावः। कुत इत्यत्राह मनोरथानामिति। अभूमिरविषयः। उक्तमुपपादयति मम हीत्यादि। दिवौकसां समक्षमास्थानमण्डपे। अर्द्धासने सिंहासनस्य समेंऽशे। उप समीपे स्वांससंसर्गं निवेशितस्य हरिणा स्वयं गृहीत्वा स्थापितस्य। अत्र उपवेशनं तदपीन्द्रकर्तृकं तत्राप्यर्धासने तदपि सर्वदेवसमक्षमित्येते सर्वेऽपि सत्कारप्रकारा मालासमर्पणस्याङ्गभूताः। अन्तरिति। अन्तर्गता अङ्कुरिता प्रार्थना मन्दारमालायामभिलाषो यस्य। अत एवान्तिकस्थम्। तत एवोद्वीक्ष्य

मात—किमिव नामायुष्मानमरेश्वरान्नार्हति । पश्य ।

सुखपरस्य हरेरुभयैः कृतं त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः पुरुषकेसरिणश्च पुरा नखैः ॥ ३ ॥

---

कृतस्मितेन इदानीं त्वत्तोऽयमस्याधिकारीति स्मितं कृतवता । अत्र जयन्तप्रार्थनाविषयत्वोक्त्या मालाया वैशिष्ट्यं द्योत्यते । यद्वा प्रार्थना मन्दारमालयैवायं सत्कार्य इत्यभिप्रायः । अत एव तत्सूचनायान्तिकस्थितिः । अत एवोद्वीक्ष्य स्मितं कृतवता तवाभिप्रायमहं ज्ञातवानिति । आमृष्टेत्यादिना मालायाः सौभाग्यातिशयः सूच्यते । आमृष्टं संश्लिष्टं अङ्कः भूषणम् । हरिणा इन्द्रेण । पिनद्धा निवेशितस्य ममेत्यस्यात्र संबन्धः । स्ववक्षस उन्मुच्य मम कण्ठे वक्षोवलम्बिता कृतेत्यर्थः । भुज्यमाननिखिलावनिभोगस्यास्य नान्यद्विशिष्टमिति मालासमर्पणम् । अत्र राज्ञो हरिविषयिका हरे राजविषयिका च रतिर्भावः ॥

किमिवेति । अमरेश्वरादिति । आदातुमिति शेषः । कुत इत्यत्राह सुखेति । सुखमेव परं प्रधानं यस्य दानवोद्धरणादिनि भावः । यद्वा हरेरिन्द्रस्य यत् सुखं तत्परस्य तत्संपादनपरस्येति तव पुरुषकेसरिण इति द्वयोर्विशेषणं हेतुगर्भम् । त्रिदिवमिति । 'त्रिदिवं सुखे स्वर्गे'चेति हैमः । उद्धृता दानवा एव कण्टकाः शत्रवो यस्मात् । कण्टकपदेन शब्दशक्त्या सूच्यग्रतादात्म्यं ध्वन्यते । तेन नखानां तदुद्धरणस्यौचित्यं च । केचित्तु । कण्टकाः सूच्यग्राणीव दानवा इत्युपमा, तया तदुद्धरणे क्लेशाभावः सूच्यत इत्याहुः । किं तदुभयमित्यत्राह तवेति । नतानि पर्वाणि सन्धिबन्धा येषां तैः दूरावगाढैरिति भावः । नखसाम्यार्थमिदम् । पुरुषकेसरिणो नृसिंहस्य । अत्र प्रकृतानां शराणामप्रकृतानां नखानां चोद्धरणक्रियाकारकत्वरूपैकधर्मान्वयाद्दीपकम् । तेन शराणां नखसाम्यं राज्ञो नृसिंहसाम्यं च व्यज्यते । तेन राज्ञः पराक्रमस्य लोकोत्तरत्वं च । अत्र वीरोपस्कृता राजरतिर्भावः ॥

राजा—मा मैवम् । अत्र खलु शतक्रतोरेव महिमा स्तुत्यः । कुतः ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं वाभविष्यदरुणस्तमसां निहन्ता
तं चेत् सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

मात—सदृशमेतदायुष्मतः ॥

(स्तोकमन्तरं परिक्रम्य)

आयुष्मन्नितः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु ।

---

मा मैवमिति । वादीरिति शेषः । कुत इत्यत्राहात्रेति । अत्र भक्त-
र्तृकदानवोद्धरणे । शतक्रतोरितीन्द्रस्य माहात्म्यातिशयं सूचयति ।
शतक्रतोरेव न ममेति भावः । उक्तमुपपादयति सिध्यन्तीति । नियो-
ज्या भृत्याः । संभावना नियोज्यविषयको बहुमानः तस्या गुणमुत्क-
र्षम् । ईश्वराणां स्वामिनाम् । अत्र हेतुमति हेतोरारोपः । सिध्यन्ती-
ति यत्तस्य हेतुरीश्वराणां संभावनागुण इत्यर्थः । यथा किराते "सं-
भावना ह्यधिकृतस्य तनोति तेज" इति । उक्तं सामान्यं विशेषेण
साधयति किं वेति । सहस्रकिरण इति तमोनिहननसामर्थ्यं सूचयति ।
धुरि अग्रे । अत्रार्थान्तरन्यासः । पूर्वार्धे रूपकं हेतुर्वा । देवेन्द्रविषयि-
का रतिर्भावः । तदुक्तमनुमोदमान उपसंहरन्नाह सदृशमिति । एतदा-
त्मनोऽपदानस्य शतक्रतावारोपणम् । आयुष्मतः धीरोदात्तस्य भवतः ॥
स्तोकमिति । अन्तरमवकाशम् । आयुष्मन्नित्यादि । प्रतिष्ठित-
स्य स्थिरीकृतस्य । सौभाग्यं ललनीयत्वम् । सौभाग्यमुपपादयति
विच्छित्तीति । विच्छित्तिस्तिलकादिरलङ्कारः तच्छेषैस्तदुपयुक्तशेषैः ।
वर्णैर्हरिचन्दनादिभिः । कल्पलतानामंशुकेषु पल्लवात्मकेषु । संचिन्त्य

संचिन्त्य गीतिक्षममर्थबन्धं
दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५ ॥

राजा—मातले ! असुरसंप्रहारोत्सुकेन पूर्वेद्युरधिरोहता न लक्षितो मया स्वर्गमार्गः । कतमस्मिन मरुतां पथि वर्तामहे ।

मात—त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मि ।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥

राजा—अतः खलु सबाह्यकरणोन्तरात्मा मम प्रसीदति ॥

---

सम्यग्विचिन्त्य विरचय्य । अर्थबन्धं सन्दर्भम् । लिखन्तीति । दानवविजयादिरूपं त्वच्चरितं प्रबन्धरूपेण विरचय्य लिखन्तीत्यर्थः । वर्तमाननिर्देशेनापरिसमाप्तिः कथ्यते । एवं दिवौकसः स्वकान्ताभिः समं यशो विचिन्त्य लिखन्तीति यशसः सौभाग्यं दानववधेन कृतार्थानां देवानामात्मकान्तानेपथ्यावसाने रतौ चिन्तया हि भाव्यं तदानीमेव ते यशो विलिखन्तीत्युक्त्या च यशसः सौभाग्यातिशयो गम्यते । अत्र वीरोपस्कृतो मातलेर्विस्मयो राजभावस्याङ्गं देवनिष्ठो राजभावश्च तमुपस्करोति ॥

अथात्मस्तुतिमसहमानो मातलिं विषयान्तरं प्रवेशयितुमाह मातल इत्यादि । स्वर्गमार्गः स्वर्गारोहणपदवी । कतमस्मिन् मरुतां पथीति । सप्त वायुस्कन्धाः । यथा महाभारते । "आवहः प्रवहश्चैव ततश्चानुवहस्तथा । संवहो विवहश्चैव ततश्चोर्ध्वं परावहः । द्विजाः परिवहश्चैव वायोर्वै सप्त नेमय" इति । ब्रह्माण्डे तु परिवहो वायुः षष्ठ इत्युक्तम् । त्रिस्रोतसमिति । गगनप्रतिष्ठां त्रिस्रोतसमाकाशगङ्गाम् । ज्योतींषि ग्रहनक्षत्रादीनि । वर्तयति संचारयति । प्रविभक्ता रश्मयः रज्वाकारा वायुरूपाः यस्मिन् कर्मणि तत् । यथा विष्णुपुराणे "ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः । भ्रमन्त्युचितचारेण मैत्रेयानि-

(रथाङ्गं विलोक्य)

मेघपदवीमवतीर्णौ स्वः ।

मात—कथमवगम्यते ।

राजा— अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७ ॥

मात—क्षणादायुष्मानधिकारभूमौ वर्तिष्यते ।

राजा—(अधो विलोक्य) मातले वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः ।

---

लरश्मिभिः" इति । द्वितीयेति । द्वितीयत्वं भूगतविक्रमापेक्षया । तेन हरेर्वामनस्य विक्रमेण पादनिक्षेपेण निस्तमस्कं निष्पापम् । अत्राङ्गभूतमहापुरुषचरितवर्णनादुदात्तम् । अनुबद्ध्यत इति । अतः उक्तगुणविशिष्टवायुमार्गवर्तनात् । सबाह्यकरणः सबाह्येन्द्रियवर्गः । अन्तरात्मा मनः ॥

अवगमनसाधनान्याह अयमिति । अराणि चक्राङ्गान्यश्राणि तेषां विवरेभ्यः । निष्पतद्भिः निर्गच्छद्भिः । मेघमार्गे चातकसञ्चारः कविप्रसिद्धः । हरिभिरश्वैः । अचिरभासां विद्युताम् । अनुलिप्तैः अनुलेपनेन मिश्रणं लक्ष्यते । परभागलाभो व्यङ्ग्यः । गतं गमनं । उपरि पृष्ठे । वारिगर्भेति शीकरक्लिन्नत्वे हेतुः । पिशुनयति सूचयति । नेमिः चक्रान्तः । चातकनिष्पतनं विद्युत्प्रभानुलेपनं नेमिक्लेदश्च मेघमार्गानुमापकानीत्यर्थः । अनुमानमलङ्कारः । मतिर्भावः ॥

अथासन्नो भूलोक इत्याह क्षणादिति । मातल इति । आश्चर्यं दर्शनं यस्य । एतदुपपादयति शैलानामिति । उन्मज्जतामिति । अत्र शैलकर्तृकमुन्मज्जनमपि संभाव्यमानमेव । मेदिनी शैलानां शिखराद्-

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
वर्णस्वास्तरलीनतां विजहति स्कन्धोदयात् पादपाः ।
सन्तानं तनुभावनष्टसलिला व्यक्तं व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव मर्त्यभुवनं मत्पार्श्वमानीयते ॥ ८ ॥

मात—साधु दृष्टम् । (सबहुमानं विलोक्य) अहो उदग्ररमणीया पृथिवी ॥

राजा—मातले कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दी सान्ध्य इव मेघपरिघः सानुमानालक्ष्यते ।

---

वरोहतीव शैला मेदिन्या उन्मज्जन्तीवेत्यर्थः । यथोक्तम् । "एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवो मताः । तत्रैवादिः प्रयोक्तव्यः प्रधानादेव नान्यत" इति । उन्मज्जनेन प्रकाशनं लक्ष्यत इति केचित् । वर्णः श्यामादिः स एव स्वास्तरः प्रच्छदपटः । दूरतया वर्णत्वेनाज्ञानादेवमुक्तम् । पर्णस्वास्तरेत्यपि पाठः । तत्र लीनतां पृथगनुपलब्धिम् । स्कन्धानामुदयादाविर्भावात् । सन्तानमविच्छिन्नप्रवाहताम् । तनुभावेन नष्टसलिलत्वेन प्रतीयमानाः । केनापीत्यादि । कश्चिन्ममोत्कण्ठामपनेतुं मर्त्यभुवनमुत्क्षिप्य मत्समीपं नयतीवेत्यर्थः । अत्र चतुर्भिः पादैः वर्णितानामनुभवानां क्रमो विवक्षितः । अत्र स्वभावोक्तिश्च । विस्मयो भावः । क्षणादित्यादि । मातलिवचनस्यानुवादप्रायं चेदं वचनम् । साधु दृष्टमिति तदुक्तानुमोदनम् । अहो इत्यादिना स्वर्गिणो भूलोकबहुमतिः ख्याप्यते ॥

मातल इत्यादि । कनकरसनिष्यन्दी कनकमयधातुरसनिष्यन्दीत्यर्थः । अत एवोपमाने सान्ध्य इति । परिघाकारो मेघो मेघपरिघः । आयुष्मन्नित्यादि । किंपुरुषपर्वतः किंपुरुषवर्षस्य मर्यादापर्वत इत्यर्थः । यथोक्तं भागवते "दक्षिणेनेळावृतं निषधो हेमकूटो हिमालय इति त्रयो हरिवर्षकिंपुरुषभारतानां मर्यादागिरय इति" । तस्य मह-

मात—आयुष्मन्नेष खलु हेमकूटो नाम किंपुरुषपर्वतः परं तपस्विनां सिद्धिक्षेत्रम् ।

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽस्मिन् सपत्नीकस्तपस्यति ॥ ९ ॥

राजा—तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ॥

मात—प्रथमः कल्पः ।

(नाट्येनावतीर्णौ)

राजा—(सविस्मयम्)

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुन्धत-
स्तवावतीर्णोऽपि न लक्ष्यते रथः ॥ १० ॥

---

स्वमाह परमिति । सिद्धेरभिलषितसिद्धेः क्षेत्रमुत्पत्तिस्थानम् । महत्त्वान्तरमाह स्वायंभुवादिति । स्वायंभुवात् ब्रह्मपुत्रात् । प्रजापतिरिति मारीचनामक इति भावः । सपत्नीकः पत्नी अदितिः । अत्र स्वायंभुवपुत्रत्वोक्त्या सुरासुरगुरुत्वोक्त्या च जन्मना ज्ञानादिना च समुत्कर्षं द्योतयन्त्यावश्यं नमस्कार्यत्वं द्योत्यते । अत एवाह तेन हीति । अनतिक्रमणीयान्यादरणीयानि । निषेधमुखेनोक्तिरतिक्रमणे प्रत्यवायं व्यञ्जयति । यथा रघौ 'प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रम' इति । श्रेयांसि श्रेयःपदेन तद्धेतुर्लक्ष्यते । फलाव्यभिचारो व्यज्यते । प्रदक्षिणीकृत्येति । यथोक्तं । "मृदङ्गं दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत प्रख्यातं च वनस्पति"मिति ॥

उक्तमनुमोदते प्रथम इति । प्रथमः कल्पः मुख्यः पक्षः । "मुख्यः स्यात् प्रथमः कल्प" इत्यमरः । एष इति शेषः । उपोढेति । अत्रालक्षणे लिङ्गमुपोढेत्यादि वाक्यद्वयार्थः । तत्र हेतुमाहाभूतलेत्यादि ।

मात—एतावानेव शतक्रतोरायुष्मतश्च विशेषः ॥

राजा—कतमस्मिन् प्रदेशे मारीचाश्रमः ।

मात—(हस्तेन प्रदर्शयन्)

वल्मीकार्द्धनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापिशकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ११ ॥

राजा—नमोऽस्मै कष्टतपसे ।

---

निरुन्धत इति हेतुगर्भं भूतलस्पर्शं विना स्तंभितत्वादित्यर्थः । तवेति संबन्धमात्रे षष्ठी । अवतीर्णोऽपि न लक्ष्यते अवतीर्णत्वेन न लक्ष्यत इत्यर्थः । अत्रावतरणरूपकारणेऽपि तत्कार्याभावोक्त्या विशेषोक्तिः । स्तुतिगर्भमनुवदत्येतावानिति । एतावान् रथस्य भूतलस्पर्शाभावः ॥

कतमस्मिन्निति । अत्र मारीचदर्शनौत्सुक्यं गम्यते । वल्मीकेति । वल्मीके अर्द्धनिमग्ना मूर्तिर्यस्य सः । परितः उद्गतेन वल्मीकेन तिरोहितनाभ्यधःकाय इत्यर्थः । अनेन वक्ष्यमाणैश्च मुनेस्तपश्चर्यायाश्चिरकालप्रवृत्तत्वं प्रकाश्यते । उरसेत्युपलक्षणे तृतीया । संदष्टाः संलग्नाः सर्पत्वचो यत्र । वल्मीकस्य सर्पाधिवासत्वात् । जीर्णं यल्लताप्रतानं वलयाकारं तेन । प्रतानपदेन प्रतिक्षणं वार्द्धिष्णुत्वं गम्यते । शकुन्तानां पक्षिणां नीडैः कुलायैः निचितं व्याप्तम् । विशेषणानि स्थाणावपि योज्यानि । उक्तार्थे सर्वत्र हेतुमाह स्थाणुरिवाचल इति । अचलः निष्पन्दः । अत्र हेतुः समाधौ चित्तैकाग्र्यं मुनिरित्यनेन द्योत्यते । असाविति अभिनये । अभ्यर्कबिम्बं सूर्यबिम्बं लक्षीकृत्य । स्थित इति तदानीन्तनावस्था । यत्र स्थितः तत्रेति शेषः । मारीचाश्रम इत्यनुषज्यते ॥

नाम इति । कष्टं कृच्छ्रं तपो यस्य । अत्र भक्तिबहुमानादयो

मात—(संयतप्रग्रहं कृत्वा) एतावति परिवर्द्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

राजा—स्वर्गादधिकतरनिर्वृतिस्थानम् । अमृतह्रदमिवावगाढोऽस्मि ।

मात—(रथं स्थापयित्वा) अवतीर्यताम् ।

राजा—(अवतीर्य) भवान् कथमिदानीम् ।

मात—संयन्त्रितो मया रथः । अहमप्यवतरामि । (तथा कृत्वा) इत इत आयुष्मान् ।।

(उभौ परिक्रामतः)

मात—दृश्यन्तामत्र भवतां तपोधनानां तपोवनभूमयः ।

राजा—ननु विस्मयादवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसन्निधौ संयमो
यत् काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ।।१२।।

मात—उत्सर्पिणी खलु महतां प्रार्थना ।।

---

गम्यन्ते । इत आरभ्याश्रम इत्याहैतावतीति । एतावति प्रदेशे । आश्रमलक्षणमाह परिवर्द्धितेति । अथ स्वतः सात्त्विको राजा सत्त्वोद्दीपनस्थलसंसर्गेण प्रवृद्धसत्त्वगुणतया प्रहृष्यदन्तःकरण आह स्वर्गादिति । अधिकतरा निर्वृतिः यस्मिन् । निर्वृतिस्वरूपमाहामृतेति । भवान् कथमिति । अवतरति वा न वेत्यर्थः ।।

दृश्यन्तामिति । दृश्यबुद्ध्या विलोक्यन्तामित्यर्थः । तदुक्तमनुमोदमान आह नन्वित्यादि । विस्मयात् विस्मयमवलम्ब्य । विस्मयावहत्वमुपपादयति प्राणानामिति । अनिलेन न तु फलमूलादिना । उचिता अभ्यस्ता । सन्तः कल्पवृक्षा यस्मिन् । पुण्याभिषेकक्रिया त्रिषवणस्नानम् । अत्र सत्कल्पवृक्ष इत्यनेन स्वादुभोजनसुलभत्वं काञ्चनेत्यादिना जलक्रीडायोग्यत्वं रत्नेत्यादिना सरसगोष्ठीयोग्यत्वं विबुधेत्या-

मात—अये वृद्धशाकल्य किमनुतिष्ठति भगवान्मारीचः ।

(किं ब्रवीषि)

दाक्षायण्या पतिव्रतापुण्यमधिकृत्य पृष्टस्तदस्यै महर्षिपत्नीसहितायै निवेदयतीति । तर्हि प्रतिपाल्यावसरः प्रस्तावः ।

(राजानमवलोक्य)

अस्मिन्नशोकवृक्षे तावदास्तां यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि ॥

राजा—यथा भवान् मन्यते ।

(स्थितः)

---

दिना संभोगयोग्यता च द्योत्यते । यत् यत्स्थानम् । यत्काङ्क्षयान्ये तपांसि चरन्तीत्यर्थः । अत्राश्रमस्य स्वर्गसाम्यं भोगयोग्ये स्थाने योगमभ्यस्यन्तीति मुनीनां धैर्यातिशयश्च व्यज्यते । अत्र तपोवने वृक्षाः कल्पतरवः पद्मानि काञ्चनानि शिलातलानि रत्नानि स्त्रियोऽप्सरसः इति सामान्यात्सर्वत्र व्यतिरेकः । तथा मुनीनां मुन्यन्तराच्चेति व्यतिरेकोऽलङ्कारः । राज्ञो विस्मयस्तदुपस्कृता मुन्यालम्बना रतिश्च भावः । नात्र विस्मयस्यावकाश इत्याशयेनाहोत्सर्पिणीति । उत्सर्पिणी ऊर्ध्वं प्रसरणशीला ऊर्ध्वोर्ध्वफलापेक्षिणीति यावत् ॥

अये इत्यादि । वृद्धशाकल्येति । इदमुत्तरप्रमेयप्रस्तावार्थं पात्रप्रवेशं विना । अत एव किं ब्रवीषीति । दाक्षायण्या अदित्या । पुण्यं धर्मम् । तत् पुण्यम् । अस्यै दाक्षायण्यै । तर्हीति । प्रतिपाल्यः प्रतीक्ष्यः अवसरो यस्य । प्रस्तावः प्रस्तुतोऽर्थः । मारीच इति यावत् । यद्वा पतिव्रताधर्मकथनरूपः । अशोकवृक्षे तद्वेद्यामित्यर्थः । अशोकेत्यन्वर्थेनात्र स्थितौ राज्ञः शोकराहित्यं भविष्यतीति द्योत्यते । आस्तां भवानिति शेषः । इन्द्रस्य गुरवे पित्रे मारीचायेत्यर्थः । अन्तरान्वेषी अन्तरमवकाशम् । एवं षष्ठान्ते सप्तमादौ च मातलिप्रसङ्गः प्रकरी । यथोक्तं "प्रकरी च प्रदेशभाक्" इति । मातलेः स्वामिन इन्द्रस्यासुर-

मात—आयुष्मन् साधयाम्यहम् ॥

(निष्क्रान्तः)

राजा—(निमित्तं सूचयित्वा)

मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १३ ॥

(नैपथ्ये)

मा खु मा खु चावलं करेहि । कहं गओ एव्व अत्तणो पकिदीम् (मा खलु मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् । )

राजा—(कर्णं दत्वा) अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते ।

(शब्दानुसारेणावलोक्य)

अये को नु खल्वयमनुबध्यमानस्तापसीभ्यामबालसत्त्वो बालः ।

अर्द्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ १४ ॥

---

वधलक्षणकार्यसाधनं फलम् । राज्ञस्तु मारीचाश्रमप्रापणम् । अत्र ह्यस्य पुत्रकलत्रलाभो भविष्यति ॥

अथोत्तरप्रमेयबिन्दुमाह निमित्तमिति । निमित्तं दक्षिणबाहुस्पन्दनरूपम् । अथ तस्य दयितावाप्तिसूचकत्वेन तदुद्बोधितदयितापरित्यागखेदस्तामनुसंदधानः सानुशयमाह मनोरथायेति । मनोरथायेति विषये विषय्युपचारः मनोरथविषयाय प्रेयस्यै तामवाप्तुमित्यर्थः । नाशंसे नेच्छामि प्रेयसी न सन्निवर्तेतेति भावः । तस्मात् बाहो तव स्पन्दनं वृथैवेत्यर्थः । उक्तं प्रथमवाक्यार्थं सामान्येनोपपादयति पूर्वेति । दुःखं कृच्छ्रेण । परिवर्तते न परिवर्तत इति भावः । अर्थान्तरन्यासः । विषादो भावः । अत्र रतेरनुसन्धानं दर्शितम् ॥

बालप्रवेशं वक्तुमुपक्रमते नैपथ्य इति । अथोपमातृस्थानीये

(ततः प्रविशति यथानिर्दिष्टकर्मा बालस्तापसीभ्याम्)

बालः—जिंभ जिंभ दंदाणि दे गणइस्सं । (डिम्भ डिम्भ दन्तांस्ते गणयिष्यामि)

प्रथमा—अविणीद किं णो अवच्चणिव्विसेसाणि सत्ताणि विप्पअ-अरेसि। हंत वड्ढदे संरंभो । ठाणे खु इसिजणेण सव्वदमण त्ति किदणामहेओसि । (अविनीत किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि। हन्त वर्द्धते संरम्भः। स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि)

राजा—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः। नूनमनपत्यता मां वत्सयति।

---

तापस्यौ कमपि केसरिकिशोरं कर्षन्तं बालकं निषेधन्तौ मा खु इति। चपलस्य कर्म चापलमकृत्यम् । आत्मनः क्षत्रियस्य बालस्य वा। प्रकृतिं स्वभावम्। अभूमिरित्यादि । अभूमिरस्थानम् । अये इति विस्मये । अनुबध्यमानः कृच्छ्रादनुगम्यमानः । अबालमल्पेतरं प्रभूतमिति यावत्। सत्त्वं पराक्रमो यस्य। "सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रम" इति केशवः । अबालसत्त्वत्वमुपपादयत्यर्द्धेति। मातुरिति स्तनमित्यनेनान्वेति । आमर्दः मातुर्जिह्वया लेहनमूधसो हननं वा कर्षणार्थं बालस्य स्कन्धग्रहणं वा । तेन क्लिष्टमयथातथं केसरं सटा यस्य। अत्र स्वभावोक्तिः॥

तत इति। तापसीभ्यां सहेति शेषः। बालस्य क्रीडाप्रकारं दर्शयति। जिंभ इति। डिम्भ बाल। जृम्भस्वेति वा पाठः । विदारितास्यो भवेत्यर्थः। दन्तान् दंष्ट्राः। अविणीदेति। सत्त्वानीति सामान्योक्तिः। सिंहशिशुमिति भावः। विप्रकरोषि बाधसे । हन्तेति खेदे । संरम्भः उत्साहः। स्थाने खलु अन्वर्थत्वाद्युक्तमेव॥

आत्मा प्रविश्य जायायां पुत्ररूपेण जायते इति पुत्रस्य तादा-

द्वितीया—सव्वदमण एसा केसरिणी तुमं लंघेति जइ से पुत्तअं ण मुञ्चेसि । (सर्वदमन एषा केसरिणी त्वां लङ्घयति यद्यस्याः पुत्रकं न मुञ्चसि)

बालः—(सस्मितम्) बलिअं भीदह्मि । (बलवद्भीताः स्मः)

(अधरं दर्शयति)

राजा—महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थितः ॥ १५ ॥

प्रथ—वच्छ एदं बालं मिअइंदअं मुंच । अवरं दे कीळणीअं दाइस्सम् । (वत्स एतं बालं मृगेन्द्रं मुञ्च । अपरं ते क्रीडनीयं दास्यामि)

बालः—कहिं देहि णम् । (कस्मिन् देह्येतत्)

(हस्तं प्रसारयति)

राजा—(दृष्ट्वा सविस्मयम्) कथं चक्रवर्तिलक्षणमप्यनेन धार्यते । तथा ह्यस्य ।

---

स्यात्तद्दर्शनेन वत्सलहृदयस्तत्त्वमजानंस्तद्धेतुं विमृशति किन्वित्यादि । अथात्र हेतुमुत्प्रेक्षते नूनमिति । वत्सलयति वात्सल्ययुक्तं करोति । बालं निवर्तयितुं भीषयति सव्वदमणेति । सस्मितमिति विभीषिकाश्रवणेन हासात् स्मितम् । अत एव सोल्लुण्ठमाह बलिअं इति । अत्र विपरीतलक्षणा । सिंहीतो मनागपि न बिभेमीत्यर्थः । अतो नैतं मुञ्चामीति भावः । अधरं दर्शयतीति इदमनादरं द्योतयति । रोषानुभावोऽयमिति केचित् । तत्फलं दर्शयति राजा महत इति । बीजमिति । यथा बीजमङ्कुरादिक्रमेण महातरुर्भवति तथा महातेजा भविष्यन्नित्यर्थः । अत्रोपमामाह स्फुलिङ्गेति । एधे इन्धने अपेक्षा यस्य सः । स्फुलिङ्गावस्थया स्थितो वह्निरिव वर्द्धिष्यमाणो वह्निस्फुलिङ्ग इवेत्यर्थः ॥

वच्छ इति । क्रीडनीयं क्रीडासाधनम् । हस्तमिति । हस्तं प्रसा-

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६ ॥

द्विती—सुव्वदे ण सक्को एस वाआमत्तेण विसुमराथिदुम् । गच्छ ममकेरके मक्कणअस्स इसिकुमारस्स वण्णचित्तिदो मित्तिआमोरः चिट्ठइ । तं से उवहर । (सुव्रते न शक्य एष वाङ्मात्रेण विस्मारयितुम् । गच्छ ममकेरके मङ्कणकस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति । तमस्योपहर)

प्रथ—तह । (तथा)

(निष्क्रान्ता)

---

रणमादानार्थम् । तत्फलमाह राजा कथमिति । कथमिति विस्मये । चक्रवर्तिलक्षणमपि न केवलं महापुरुषलक्षणमित्यपिशब्दार्थः । उक्तमुपपादयति तथा हीत्यादि । प्रलोभ्यस्य क्रीडनीयस्य वस्तुनः प्रणयो याच्ञा तेन प्रसारितः । जालवद् ग्रथिताः परस्परं निरन्तरसंश्लिष्टाः अङ्गुलयो यस्य । अलक्ष्यं पत्राणां दलानामन्तरमितरेतरान्तरालं यस्य । इद्धो रागो लौहित्यं यस्या इत्युषसो विकासनसामर्थ्यं दर्शयति । नवोषसा उषःप्रारम्भेण । नवेत्यलक्ष्यपत्रान्तरत्वोपपादकम् । उषश्शब्दः स्त्रीलिङ्गोऽपि । यथा भागवते "अथोषस्युपवृत्तायामि"ति । भिन्नं विकासितम् । करस्यैकत्वादेकपङ्कजमिति । अत्र प्रसारितमित्यस्य प्रतिबिम्बं भिन्नमिति । जालेत्यादेरलक्ष्यमित्यादि । अत्र उपमया गम्यमाने मृदुत्वातिरक्तत्वे तथा प्रसारणेऽपि जालग्रथिताङ्गुलित्वं च लक्षणम् । यथाहुः सामुद्रिकाः "अतिरक्तः करो यस्य ग्रथिताङ्गुलिको मृदुः । चापाङ्कुशाङ्कितः सोऽपि चक्रवर्ती भवेद्ध्रुव"मिति ॥

सुव्वदइति । विस्मारयितुं प्रकृतमित्यर्थात् । ममकेरके मदीय इत्यर्थः । हसतीति । अस्य फलमाह राजा स्पृहयामीत्यादि ।

बालः—इमिणा एव्व दाव कीळिस्सं । (अमुनैव तावत् क्रीडयिष्यामि)

(तापसीं विलोक्य हसति)

राजा—स्पृहयामि खलु दुर्ललितायास्मै ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७ ॥

तापसी—एदु एदु ण मं अअं गणेइ (एत्वेतु न मामयं गणयति)

(पार्श्वमवलोकयन्ती)

को एत्थ इसिकुमारआणम् । (कोऽत्र ऋषिकुमाराणाम् ।

(राजानं दृष्ट्वा)

---

दुर्ललिताय दुर्दान्ताय । अथ विशिष्टबालस्वभावमवलोक्य तदुद्बोधितानपत्यताखेद आत्मानमनुशोचत्यालक्ष्येति । आलक्ष्या ईषल्लक्ष्या दन्तमुकुला दन्ताङ्कुरा येषाम् । अनिमित्तैर्निरभिसन्धिभिः हासैर्हेतुभिः । हासादित्यपि पाठः । अव्यक्ता वर्णा अक्षराणि यत्र अत एव रमणीया श्राव्या वचःप्रवृत्तिः वाक्प्रसरो येषाम् । अवस्थाद्वयमिदं तदानीं प्रत्यक्षतोनुभूतम् । अनुमितमप्याहाङ्केति । अङ्के उत्सङ्गे आश्रयः स्थितिः तत्र प्रणयः वाञ्छा अस्त्येषामिति तान् । तनयानौरसान् । तदङ्गरजसा तदङ्गपङ्काङ्गरागेण । मलिनीभवन्ति मलिनीभावमनुभवरूपेण परिशीलयन्ति । अत एव धन्याः । अत्राप्रस्तुतात् सामान्यात् वैधर्म्येण प्रस्तुतो विशेषः प्रतीयते । यतोऽहमेवंविधं तनयं वहंस्तदङ्गरजसा न मलिनीभवामि ततः अधन्य इति । अत्र बालस्वभावोक्तिश्च ॥

अथ बालस्य बालमृगेन्द्रक्रीडामसहमाना स्वयं च वारयितुमशक्ता मुनिकुमारेष्वेकमाह्वयति एदु इति । न मामयं गणयतीति । मा-

भद्दमुह एहि मोअअ दाव इमिणा दुम्मोअहत्थग्गाहणे डिम्भ-लीलाए बाहिअमाणं बालमिइंदअं। (भद्रमुख एहि मोचय तावदमुना दुर्मोचहस्तग्राहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम्)

राजा—तथा। (उपगम्य) अयि भो महर्षिपुत्र।

एवमाश्रमविरुद्धवृत्तिना संयमः किमिति जन्मनस्त्वया।
सत्त्वसंश्रयसुखोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनः॥ १८॥

सत्यव्रता—भद्दमुह ण खु एसो इसिकुमारओ। (भद्रमुख न खल्वेष ऋषिकुमारः)

राजा—आकारसदृशं चेष्टितमेवास्य कथयति। स्थानप्रत्ययात्तु वयमेवन्तर्किणः।

(यथाभ्यर्थितमनुतिष्ठन् बालस्पर्शमुपलभ्य)

(आत्मगतम्)

---

मनादृत्य सिंहशिशुक्रीडां करोतीत्यर्थः। क इति स एत्विति पूर्वेण संबन्धः। राजानं दृष्ट्वाह भद्दमुहेति। भद्रमुखेति मान्यं प्रति संबोधनम्। दुर्मोचः स्वयं मोचयितुमशक्यः हस्तेन ग्राहो यस्य। ग्रहे ग्राह इत्यमरः। डिम्भलीलया बालक्रीडया॥

महर्षिपुत्रेति सौम्यताभिप्रायेण संबुद्धिः। एवमिति। एवमाश्रमविरुद्धा वृत्तिः सिंहशिशुक्रीडारूपा यस्य। किमिति कस्माद्धेतोः। जन्मनः जातेः ब्राह्मणजातेर्विहित इत्यर्थः। संयमः हिंसादिभ्य उपरमः। यदुक्तं महाभारते। "अहिंसा परमो धर्मः सर्वप्राणिहितं परम्। तस्मात् प्राणभृतः सर्वान्न हिंसेत् ब्राह्मणः क्वचित्"। "ब्राह्मणः सौम्य एवेह जायेतेति परा श्रुतिरिति"। सत्त्वस्य सत्त्वगुणस्य संश्रयेण सुखः सुखकरः। चन्दनोऽपि सत्त्वानां प्राणिनां संश्रयेण छायादिना सुखकरः। अत्रोपमया संयमस्य निसर्गतः सौम्यत्वं बालस्य तीक्ष्णत्वं च द्योत्यते। संयमः किमिति दूष्यते न दूष्य इत्यर्थः। तस्माद्बालमृगेन्द्रं मुञ्चेति भावः॥

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्यायमङ्गात् कृतिनः प्ररूढः ॥ १९ ॥

सत्य—(उभौ निर्वर्ण्य) अच्छरिअं अच्छरिअम् । (आश्चर्यमाश्चर्यम्)

राजा—किमिव ।

सत्य—इमस्स तव संबन्धसंवादिणी आकिदित्ति विह्मविदह्मि । (अमुष्य तव संबन्धसंवादिन्याकृतिरिति विस्मापितास्मि) अपरिइदस्स वि दे अप्पदिलोमो संवुत्तोत्ति । (अपरिचितस्यापि ते अप्रतिलोमः संवृत्त इति)

राजा—(बालमुपलालयन्) आर्ये न चेन्मुनिकुमारोऽयमथ कोऽस्य व्यपदेशः ।

---

अनुवदत्याकारेति । कथयतीति । आकारव्यापाराभ्यामयं न मुनिकुमार इत्यवगम्यत एवेत्यर्थः । कथं तर्ह्यन्यथा तर्कितमित्यत्राह । स्थानेति । स्थानं ह्याश्रमः । यथाभ्यर्थितमिति । बालमृगेन्द्रं मोचयन्नित्यर्थः । अथ "न वाससां न रामाणां नापां स्पर्शस्तथाविध" इति महाभारतोक्तनीत्या बालस्पर्शेन हृष्यत्त्वगिन्द्रियः स्वयं विमृशत्यनेनेति । कस्यापि कुलाङ्कुरेणेत्यनेन स्वसंबन्धित्वाभाव उच्यते । गात्रेष्विति बहुवचनेन सुखस्य सर्वाङ्गीणता च । 'गात्रमङ्गे कलेबर' इति विश्वः । एवमनुभवैकवेद्यम् । कां निर्वृतिं प्रभूतां निर्वृतिमित्यर्थः । निर्वृतिपदेन सुखातिशय उच्यते । तनयस्यासान्निध्येऽपि निर्वृतेरुदयाच्चेतसीति । कृतिनः सुकृतिनः । स एव सुकृतीति भावः । प्ररूढः जातः । अत्रार्थापत्तिः कुलाङ्कुरेणेत्यत्र रूपकं च । पुत्रप्रीतिर्भावः ।

आश्चर्यं कुत इत्यत्राह इमस्स इति । अप्रतिलोमः संवृत्त इतीति । इति च विस्मापितास्मीत्यर्थः । पृच्छत्यार्य इति । अथेति प्रश्ने । व्यपदेशः कुलम् ॥

सत्य—पूरुवंसो। (पूरुवंशः)

राजा—(स्वगतम्) कथमेकान्वयो मम। अतः खलु मदनुकारिणमत्रभवती मन्यते। अस्त्येतत् पौरवाणामन्त्यं कुलव्रतम्।

भवनेषु सुधासितेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम्।
निरतैकपतिव्रतानि पश्चात्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

(प्रकाशम्)

न खल्वात्मगत्या मानुषाणामेष विषयः।

सत्य—जइ भद्दमुहो भणादि अच्छरासंबधेण इमस्स बाळस्स जणणी एत्थ देवगुरुणो तपोवणे पसूदा। (यथा भद्रमुखो भणति अप्सरःसंबन्धेनामुष्य बालस्य जननी अत्र देवगुरोस्तपोवने प्रसूता)

राजा—(आत्मगतम्) हन्त द्वितीयमिदमाशाजननम्।

(प्रकाशम्)

---

पूरुवंश्यस्य बालस्याश्रमसद्भावसंगतिं वितर्कयत्यस्तीति। एतद्वक्ष्यमाणम्। अन्त्यमिति। क्षत्रियाणां वानप्रस्थाश्रमोऽन्त्यः। "मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। बाहुजातोरुजातानामयं धर्मो न विद्यत" इति स्मृतेः। एतदित्युक्तं विवृणोति भवनेष्विति। सुधा भित्तिलेपनसाधनविशेषः। ताभिः सितेष्विति भोगप्रवणत्वं सूचयति। यथा रघौ "यौवने विषयैषिणा"मिति। पूर्वं वार्द्धकादर्वाचीने वयसि। क्षितिरक्षार्थमिति भोगस्यानुषङ्गिकत्वं दर्शयति। यथा "असक्तः सुखमन्वभू"दिति। उशन्ति वाञ्छन्ति। अत्र पूर्वार्द्धेन गृहस्थाश्रम उक्तः। उत्तरार्द्धेन वानप्रस्थाश्रमः। तत्र "वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा" इति पक्षयोर्द्वितीयं पक्षमाह निरतेत्यादि। निरता भर्तृशुश्रूषणतत्परा एका पतिव्रता येषु। एकेत्यनेन परिजनान्तरव्यवच्छेदः कथ्यते। पश्चाद्वार्द्धके। यथा रघौ "वार्द्धके मुनिवृत्तीना"मिति। अत्र निरतेत्यादिना बालस्य आश्रमसद्भावसंगतिर्दर्शिता॥

न खल्विति। आत्मगत्या मानुषगत्या। तत् कथमत्रास्य संगति-

सा तत्रभवती किंनामधेयस्य राजर्षेः पत्नी ।

सत्य—को तस्स धम्मदारपरिच्चाइणो णाम कित्तइस्सदि । (कस्तस्य धर्मदारपरित्यागिनो नाम कीर्तयिष्यति)

राजा—(आत्मगतम्) इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छेयम् । अथवा न न्याय्यः परदारव्यापारः ।

(प्रविश्य मयूरहस्ता)

तापसी – सव्वदमण सउन्दलावण्णं पेक्ख । (सर्वदमन शकुन्तलावण्यं पश्य)

बालः—(सदृष्टिक्षेपम्) कहिं मे अज्जु । (कस्मिन् मे माता)

उभे—एसो णामसारिस्सेण वंचिदो मादुवच्छलो । (एष नामसादृश्येन वञ्चितो मातृवत्सलः)

सत्य—इमस्स मित्तिआमोरस्स रम्मत्तणं पेक्खाति भणिदोसि । (अमुष्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोसि)

राजा—(आत्मगतम्) किं वा शकुन्तलेत्यस्य मातुराख्या । सन्ति

---

रिति भावः । जहेति । तत्तथेति शेषः । बालस्य संगतिमाहाच्छरा इति । हन्तेत्यादि । हन्तेति हर्षे । द्वितीयमिति । द्वितीयत्वं पूरुवंश्यत्वापेक्षया । इदमप्सरस्संबन्धकथनम् । शकुन्तलाया मेनकापत्यत्वादिति भावः । को तस्स इति । पापिनस्तस्य नाम न कथयामीति भावः ॥

यदीत्यादि । यदि यद्येषा पितुर्नाम न कथयति तर्हीत्यर्थः । अथवेति । मातुर्नाम न पृच्छामीत्यर्थः । कुत इत्यत्राह न न्याय्य इति । व्यापारो नामव्यवहारादिः । सव्वदमणेति । शकुन्तेति । शकुन्तस्य मृत्तिकामयूरस्य लावण्यमित्यर्थः । सउंदलावण्णं इत्यस्य शकुन्तलावर्णमिति छायेति पृच्छति । कहिं इति । बालस्यान्यथा प्रतिपत्तिं व्यपोहतीमस्सेति । इति भणितोऽसि न तु शकुन्तलावर्णमितीत्यर्थः ॥

बालस्य तापस्याश्च व्यवहारादवगतमर्थमनुवदन्नाह किंवेत्यादि ।

पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नायमत्र प्रस्तावो विषादाय कल्पेत ।

बालः—अज्जुए रोअदे मे एसो भद्दमोरो । (मातः रोचते मह्यमेष भद्रमयूरः)

(क्रीडनीयकमादत्ते)

सत्य—(विलोक्य सावेगम्) अम्महे रक्खाकरण्डअं मणिबंधे से ण दिस्सइ । (अम्महे रक्षाकरण्डकं मणिबन्धेऽस्य न दृश्यते)

राजा—अलमलमावेगेन । नन्विदमस्य सिंहशावमर्दनात् परिभ्रष्टम् ।

(आदातुमिच्छति)

उभे—मा खु मा खु इदं आलम्बअ । कहं गहिदं णेण । (मा खलु मा खल्विदमालम्ब्य । कथं गृहीतमनेन)

(विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः)

राजा—किमित्थं प्रतिषिद्धाः स्मः ।

सुव्रता—सुणादु महाराओ । एसा अवराइदा णाम ओसही इम-

---

माता ह्यस्य शकुन्तला तदयं मत्पुत्र एवेति भावः । एवं निश्चिन्वानोऽप्यपायमाशङ्कते सन्तीत्यादि । अन्यस्या अप्येवं नाम संभवतीत्यर्थः । अपि नामेत्यादि । अपि नामेति संभावनायामीश्वरप्रार्थनायां वा । मृगतृष्णिकेव सूर्यमरीचिषु उदकबुद्धिरिव । न कल्पेतेति संबन्धः । अत्रास्मिन् बाले । अयं प्रस्तावः पुत्रधीः । कल्पेतेति संभावनायां लिङ् । काकात्र वितर्को व्यज्यते । अज्जुए इति । रोचते मह्यमिति रुच्यर्थानामिति संप्रदानत्वाच्चतुर्थी ॥

सावेगमिति । आवेगोऽतिसंभ्रमः । अम्महे इति खेदे । रक्षाकरण्डकं रक्षार्थमोषधिभाजनम् । अलमित्यादि । अलमिति निषेधे । आदातुमिच्छतीति । इच्छति उपक्रमते । माखु इति । मा खल्विति निषेधे । आलम्ब्येति अलंखल्वोरिति क्त्वा । कहं इति । कथमिति सविषादविस्मये । उरोनिहितहस्ते इति विषादावेगादेरप्यनुभावोऽयम् ॥

सुणादु इति । ओषध्या विकाराभावादयमस्य बालस्य पितेति

स्स जादकम्मसमए भअवदा मारीएण दिण्णा । एदं मादापिदरौ अत्ताणअं वज्जिअ अवरो भूमिपडिदं ण गह्णइत्ति । (शृणोतु महाराजः । एषा अपराजिता नाम ओषधी अस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां मातापितरावात्मानं च वर्जयित्वा अपरो भूमिपतितां न गृह्णातित्विति)

राजा—अथ गृह्णाति ।

सुव्र—तदो सप्पो भविअ दंसदि (ततः सर्पो भूत्वा दंशति)

राजा—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ।

उभे—अणेअसो । (अनेकशः)

राजा—(सहर्षम्) किमिदानीं पूर्णमपि मनोरथं नाभिनन्दामि ।

(बालं परिष्वजते)

सत्य—सुव्वदे एहि इमं उत्तंतं णियमवावुदाए सउंदलाए णिवेदह्म । (सुव्रते एहि । इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः)

(निष्क्रान्ते)

बालः—मुंच मं अज्जुए सआसं गच्छामि । (मुञ्च मां, मातुः सकाशं गच्छामि)

---

निश्चिन्वानाह महाराज इति । गृह्णातित्वितीति । इति इत्युक्त्वा । अथ गृह्णातीति । अत्र काका यद्यन्यः कश्चित् गृह्णाति तर्हि किं स्यादित्यर्थः । तदो इति । एषौषधीत्यनुषज्यते । पुनर्निर्णेतुं पृच्छति भवतीभ्यामिति । विक्रिया सर्पभावः । अणेअसो इति । प्रत्यक्षीकृता विक्रियेत्यनुषङ्गः ॥

अथौषधिविकाराभावाद् ममौरस एवेति निश्चित्य सहर्षमाह किमिति । मनोरथं पूर्णमपि अभिवाञ्छितं सिद्धमपि । किं नाभिनन्दामि किं नानुभवामि । परिष्वजत इति । परिष्वङ्गेनानुभवतीत्यर्थः । तत्कालोचितां प्रतिपत्तिमाह सुव्वद इति । निष्क्रान्ते इति । अत्र राज्ञे

राजा—पुत्रक मया सहैव मातरमभिनन्दिष्यसि ।

बालः—मम खु तादो दुस्सन्तो ण तुवम् । (मम खलु तातो दुष्यन्तो न त्वम् । )

राजा—(सस्मितम् स्वगतम्) एष विवाद एव प्रत्याययति ।

(ततः प्रविशति एकवेणीधरा शकुन्तला)

शकु—विआरकाळे वि पकिदित्थं सव्वदमणस्स ओसहीं सुणिअ वि ण मे आसंसा आसी अत्तणो भाअहेएसु अहव जह साणुमदीए आचक्खिदं तह संभावीअदि एदं । (विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधीं श्रुत्वापि न मे आशंसासीदात्मनो भागधेयेषु । अथवा यथा सानुमत्याख्यातं तथा संभाव्यत एतत्)

---

बालवृत्तान्तस्य शकुन्तलायै राजवृत्तान्तस्य च बोधनं तापस्योः प्रवेशनस्य फलमिति स्पष्टम् । पुत्रकेति । अनुकम्पायां कः । पुत्रकेत्यामन्त्रणादाह मम खु इति । एष इति । विरुद्धो वादः विवादः । प्रत्याययति विश्वासयति ॥

तत इति । एकवेणीधरेति । विरहचिह्नमिदम् । अथ शकुन्तला सानुमत्या कथितेन कान्तवृत्तान्तेन किञ्चिदाश्वस्ता पुनस्तापसीभ्यां निवेदितं वृत्तान्तं निशम्य अपायदर्शी स्नेह इति नीत्या चिन्तयति विआरकाळ इत्यादि । विकारकालेऽपि विकारयोग्यकालेऽपि । प्रकृतिस्थामविकाराम् । श्रुत्वापि तच्छ्रवणेन भर्त्रागमने निश्चितेऽपि । भागधेयेष्विति कार्ये कारणोपचारः । भर्तृकर्तृकस्वीकरण इत्यर्थः । न मे आशंसासीदिति । यतो मयि पूर्वं तथाविधः संवृत्त इति भावः । अथवेति । आशंसा अस्तीत्यर्थः । कुत इत्यत्राह यथेत्यादि । अनेन सानुमतीप्रसङ्गः सुष्ठु संघटितः । तथेति सानुमतीकथितस्य भर्तुर्बहुमुखानुरागस्य ज्ञानादित्यर्थः । एतत् भर्तृस्वीकरणम् । केचित्तु आत्मनो भागधेयेष्विति भर्तरीत्यर्थः । संभाव्यत एतदिति । एतत् भर्त्रागमनमित्याहुः ॥

राजा—(शकुन्तलां दृष्ट्वा) अये अत्रभवती शकुन्तला ।

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणी ।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं वहन्ती ॥ २१ ॥

शकु—(पश्चात्तापविवर्णं राजानं दृष्ट्वा) ण खु अज्जउत्तो विअ । तदो को एसो दाणिं किदरक्खामंगळं दारअं मे गत्तसंसग्गेण दूसेइ । (न खल्वार्यपुत्र इव । ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति)

बालः—(मातरमुपेत्य) अज्जुए एसो कोवि परकेरओ मं पुत्तत्ति आळवदि । (मातः एष कोऽपि परकेरको मां पुत्र इत्यालपति)

---

अये इत्यादि । अये इति हर्षे विषादे च । अत्रभवतीति प्रशंसागर्भम् । वसने इति । वसने अधरोत्तरवस्त्रे । परिधूसरे संस्काराद्यभावान्मलिने । नियमैः व्रताङ्गैरुपवासादिभिः क्षामं क्षीणं मुखं यस्याः । अत्र विशेषणत्रयेण विरहव्रतस्वरूपमुक्तम् । शुद्धशीला साध्वी । एतद् व्रताचरणे हेतुः । दीर्घं चिरकालं वहन्तीत्यनेन दुष्करत्वं सावधानत्वं च व्यज्यते । एवं शकुन्तलायाः शोचनीयां दशामवलोक्य तत्प्रयोजकमात्मानं प्रत्यमर्षित आहातिनिष्करुणस्येति । ममेति संबन्धे षष्ठी । मम क्रौर्यमेकमेवात्र निमित्तमिति भावः । अत्र वसने परिधूसरे वसानेत्यनेन इन्द्रियार्थप्रीतिपरित्यागः नियमेत्यादिना प्राणधारणमात्रप्रयासः धृतेत्यादिना देहसंस्कारसमुपेक्षा अतिनिष्करुणस्येत्यनेनानुरागक्षयादेर्हेतुः तथापि तदभावः शुद्धशीलेत्यनेन दीर्घमित्यनेन व्रतं यावत्समागमं यावज्जीवं वेति व्रतमित्यनेन संगमरूपफलश्रद्धा च नायिकायाः प्रकाश्यते । अत्र स्वभावोक्तिः । नायिकाश्रयो विप्रलम्भो नायकाश्रयो विषादाद्युपस्कृतो निर्वेदश्च ध्वन्यते ॥

राजानं दृष्ट्वेति । तमज्ञात्वेति शेषः । पश्चात्तापवैवर्ण्यमज्ञाने

राजा—प्रिये क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तं यदहमिदानीं त्वयाप्रत्यभिज्ञातमात्मानं पश्यामि ।

शकु—(आत्मगतम्) हिअअ अस्ससहि मच्छरेण वि अणुकंपिदह्मि दव्वेण अअँउत्तो एव्व एसो । (हृदय आश्वसिहि मत्सरेणाप्यनुकम्पितास्मि दैवेन । आर्यपुत्र एवैषः)

राजा—प्रिये ।

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः समुपगता रोहिणीयोगः ॥ २९ ॥

शकु—जेदु अअँउत्त । (इत्यर्द्धोक्ते बाष्पकण्ठी विरमति)

राजा—सुन्दरि ।

---

हेतुः । ण खु इति । इवेति प्रतीतौ । कृतरक्षामङ्गलमिति । रक्षामङ्गलस्यापि दूषणं जातमिति भावः । अज्जुए इति । परकेरकः परकीयः ॥

अथेयं मां न जानातीत्यवधारयन्नाह प्रिय इत्यादि । क्रौर्यमिति तत्कार्यं प्रत्याख्यानमित्यर्थः । अनुकूलः परिणामः पश्चात्तापलक्षणो यस्य । परिणामो नाम उपादानस्य स्वाकारपरित्यागेनाकारान्तरापत्तिः । प्रकृते तु प्रत्याख्यानं पश्चात्तापतया परिणतमित्यर्थः । तस्यानुकूल्यं तुल्यदुःखकारित्वादिति दर्शयन्नाह यदिति । अप्रत्यभिज्ञातमिति छेदः । तुल्यदुःखहेतुः पश्चात्तापजनितवैवर्ण्यतानवादिना ह्यप्रत्यभिज्ञानमिति भावः । अथ स्वरेण तं प्रत्यभिजानन्त्याह हिअअ इति । मत्सरेण मत्सरिणा । मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिष्वित्यमरः ॥

अथ पूर्ववृत्तविस्मरणान्मया त्वयि क्रौर्यं प्रयुक्तमिति दर्शयन्नावर्जनार्थमाह प्रिये स्मृतीति । स्मृत्या भिन्नं मोहतमः तमोऽन्धकार इव मोहो यस्य । दिष्ट्येत्यानन्दे । प्रमुखे सम्मुखे । स्थितासीति । तव योगो मम जात इति भावः । सुमुखीत्यनेनाद्भुतं तव प्रत्याख्यानव्यलीकराहित्यमिति द्योत्यते । उपरागो राहुग्रसनं तस्यान्ते निवृत्तौ । समुपगतः संगतः । गता रोहिणी योगमित्यपि पाठः । अत्र दृष्टान्तेन

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २३ ॥

बालः—अज्जुए को एसो । (मातः क एषः)

शकु—वच्छ दे भाअहेआणि पुच्छ । (वत्स ते भागधेयानि पृच्छ)

राजा—(शकुन्तलायाः पादयोः प्रणिपत्य)

सुतनु हृदयात् प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥

---

मोहस्य दैवकृतत्वं तद्व्यपाये योगस्यौचित्यं च द्योत्यते । वाक्यार्थवृत्ति-निदर्शना चालङ्कारः ॥

बाष्पकण्ठीति । बाष्पोद्गमः स्मर्यमाणस्य दुःखस्यानुभूयमान-स्यानन्दस्य चानुभावः । चाटूक्तिं करोति सुन्दरीत्यादि । सुन्दरीति इदानीं विशेषदृश्ये इत्यर्थः । "क्रोधाश्रुहर्षभीत्यादेः संकरः किलिकि-ञ्चित"मिति लक्षितो भावो हि स्त्रीणां विशेषदृश्यतामावहति । बाष्पे-णेति । जयशब्दे प्रतिषिद्धेऽपि तदर्थो मया लब्ध इत्यर्थः । अत्र हेतु-माह यदित्यादि । न विद्यते संस्कारोऽलक्तकादिना यस्य सः अत एव पाटलः । "श्वेतरक्तस्तु पाटल" इत्यमरः । ओष्ठपुटो यस्य तत् । अ-कृत्रिममनोहरमित्यर्थः । इयमपि चाटूक्तिः । केचित्तु असंस्कारः त-थापि पाटलो रक्त इत्यर्थः । अत एव विभावनेत्याहुः ॥

वच्छ इति । भागधेयानि पृच्छेति । येषां फलमस्य दर्शनलाभः तानि भाग्यानि पृच्छेत्यर्थः । यद्वा कार्ये कारणोपचारः । एनं पृच्छे-त्यर्थः । पादयोः प्रणिपत्येति । इदं परित्यागापराधपरिहारार्थम् । प्रा-र्थयन्नाह सुतन्वित्यादि । सुतन्वित्यनेन व्यलीकस्य बहिर्विकाराभावो व्यज्यते हृदयादित्यनेन मनसि निगूढमस्तीति च । व्यलीकमप्रियम् । प्रत्यादेशे हेतुमाह किमपीत्यादि । किमपि केनापि हेतुना । मनस इ-

शकु०—उट्ठेदु अॅअउत्तो । णूणं मम सुअरिदप्पडिबंधअं पुराकिदं तेसु दिअसेसु परिणामाहिमुहं आसी । जेण साणुक्कोसो वि अॅअउत्तो मइ तहाविहो संवुत्तो । (उत्तिष्ठत्वार्यपुत्रः । नूनं मम सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामाभिमुखमासीत् । येन सानुक्रोशोऽप्यार्यपुत्रो मयि तथाविधः संवृत्तः)

राजा—(उत्तिष्ठति)

शकु०—अह कहं अॅअउत्तेण सुमरिदो दुःखभाई अयं जणो । (अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः)

---

त्यन्वयार्थम् । मननसाधनस्यैव संमोहः किं कुर्यामिति भावः । संमोहः अज्ञानम् । तदा पूर्वं त्वदागमनकाले । बलवान् केनाप्यनिवर्तनीयः । अनेन तदानीं मुहुर्विमर्शो मया कृत इति द्योत्यते । मया बलवतः संमोहादेव प्रत्यादेशः कृतः ततस्तदपराधो भवत्या क्षम्यतामिति भावः । अथ सम्मोहे कमपि हेतुं विमृशन्नाह प्रबलेति । प्रबलं तमः तमोगुणो येषाम् । एवंप्रायाः अज्ञानादिरूपाः शुभेषु श्रेयस्साधनेषु । वृत्तयः मनोवृत्तयः । शुभेषु एवंप्रायाः वृत्तयः प्रबलतमसां सन्ति हीति संबन्धः । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा । मम प्रबलतमस्त्वमेवं सम्मोहे हेतुरिति भावः । अत्रात्माधिक्षेपः । उक्तार्थे दृष्टान्तमाह स्रजमपीति । अहिशङ्कया सर्पभ्रान्त्या । अत्र प्रतिवस्तूपमा । केचित्तु पूर्वार्द्धेन सम्मोहान्मया प्रत्यादेशः कृत इत्यर्थ उक्तः । तमर्थं सामान्येन समर्थयते प्रबलेत्यादि । तमः सम्मोहः । एवंप्रायाः प्रत्यादेशादिरूपाः । वृत्तयः प्रवृत्तयः । शेषं पूर्ववदिति उपमासंसृष्टोऽर्थान्तरन्यासः । विकस्वरो वा इत्याहुः ॥

उट्ठेदु अॅअउत्त इति । इदं प्रीतेरनुभावः । नूनमित्यादि । नूनं तर्कयामि । सुचरितस्य तत्कार्यस्य सुखस्य प्रतिबन्धकम् । पुराकृतमर्थाद्दुष्कृतम् । सानुक्रोशः सदयः । तथाविधः क्रूरः । अत्रानेन वाक्येन नायिकायाः सौशील्यादिगुणानामतिशयः कविना प्रकाश्यते । यथा रघौ "न चावदद्भर्तुरवर्ण"मित्यादि । अहेति । अथेति प्रश्ने ॥

राजा—उद्धृतविषादशल्यः कथयिष्यामि ।

> मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
> यो बद्धबिन्दुरधरं परिबाधमानः ।
> तं तावदाकुटिलपक्ष्मविलग्नमद्य
> बाष्पं प्रमृज्य विगतानुशयो भवामि ॥ २५ ॥

(यथोक्तमनुतिष्ठति)

शकु—(नाममुद्रां दृष्ट्वा) अॅअउत्त इदं तत् अंगुळीअअं । (आर्यपुत्र इदं तदङ्गुलीयकम्)

राजा—अथ किम् । अस्मादङ्गुलीयोपलम्भात् खलु मया स्मृतिरुपलब्धा ।

शकु—विसमं किदं जेण । जं अॅअउत्तस्स पच्चअकाळे दुळ्ळहं आसी । (विषमं कृतमनेन यदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत्)

राजा—तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

शकु—ण से विस्ससामि अॅअउत्तो एव्व णं धारेदु । (नास्य विश्वसिमि आर्यपुत्र एवैनद्धारयतु)

(ततः प्रविशति मातलिः)

मात—दिष्ट्या धर्मपत्नीसमागमेन पुत्रदर्शनेन चायुष्मान् वर्द्धते ।

---

उद्धृतेति । उद्धृतं विषाद एव शल्यं यस्मात् । शल्योद्धरणप्रकारमाह मोहादिति । मोहादज्ञानात् । उपेक्षितः अपरिमृष्टः । बद्धबिन्दुरित्यधरपरिबाधने हेतुः । अधरं परिबाधमान इत्यवश्यं परिमार्जनीयत्वं सूचयति । तं बाष्पमिति पूर्वतनाद्यतनबाष्पयोरेकत्वोक्तिरैक्याध्यवसायात् । आकुटिलपक्ष्मविलग्नमित्यनेनाद्यतनबाष्पस्याधरपरिबाधनस्याभावः प्रकाश्यते । तेन ततः पूर्वं परिमार्जनीयत्वं च । यथोक्तमित्यादि । बाष्पं प्रमार्ष्टीत्यर्थः ॥

नाममुद्रां दृष्ट्वेति । बाष्पमार्जनकाल इति भावः । पृच्छति

राजा—अभूत्संपादितस्वादुफलो मे मनोरथः । मातले न खलु विदितोऽयमाखण्डलस्यार्थः ।

मात—(सस्मितम्) अथ किम् । अथवा किमीश्वराणां परोक्षम् । एह्यायुष्मन् भगवान्मारीचस्ते दर्शनं वितरति ।

राजा—शकुन्तले अवलम्बस्व पुत्रं त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

शकु—हिरिआमि अॲअउत्तेण सह गुरुसमीवं गंतुं । (जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम्)

राजा—आचरितव्यमभ्युदयकालेषु ।

(सर्वे परिक्रामन्ति)

(ततः प्रविशति अदित्या सार्द्धमासनस्थो मारीचः)

मारी—(राजानमवलोक्य) दाक्षायणि ।

---

अॲअउत्त इति अत्र काका प्रश्नः । तत् पूर्वं मदङ्गुलौ निवेशितम् । अनुवदत्यथ किमिति । स्वापराधं परिमार्ष्टि अस्मादिति । उपालभते विसममिति । विषमं कष्टम् । तेन हीति । लता ऋतुसमवायचिह्नं कुसुमं प्रतिपद्यतामित्यन्वयः । अत्राप्रस्तुतप्रशंसा । भवती मत्समागमाचिह्नमिदमङ्गुलीयकं धारयत्वित्यर्थः ॥

अथ राजसंपत्तेः संविभागभाजनं भवतु मातलिरित्यवसरे तत्प्रवेशमाह तत इति । दिष्ट्येत्यानन्दे । अभूदिति । संपादितं साधितं युष्माभिर्दैवेन वेति शेषः । स्वादुफलं पुत्रकलत्ररूपं यस्य । न खल्विति । अत्र काक्वा प्रश्नः । मनोरथफलावाप्तिराखण्डलेन न वेद्यते किमित्यर्थः । अनुवदत्यथ किमिति । अथवेति । वेद्यत एवेत्यर्थः । कुत इत्यत्राह किमिति । एहीत्यादि मारीचप्रवेशसूचनम् । दर्शनं दर्शनावसरम् । शकुन्तल इत्यादि राज्ञो मातलिवचनाङ्गीकरणम् । राजनियोगानुष्ठानभङ्गीकुर्वत्याह हिरियामीति । तल्लज्जां परिहरत्याचरितव्यमिति । इदमिति शेषः ॥

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्मजातं
तत्कोटिमत् कुलिशमाभरणं मघोनः ॥ २६ ॥

अदि—संभावणीआणुभावा से आकिदी । (संभावनीयानुभावा-स्याकृतिः)

---

तत इति । अत्र मारीचवचनेन वक्ष्यमाणेन विस्मृतेः शापहेतुकत्वावगमान्नायिकाया नायके निरपराधत्वनिश्चयः तेनानुरागस्य भूयोऽपि गरीयस्त्वं तथा पुत्रस्य चक्रवर्तित्वनिवेदनेन परमप्रीतिश्च । मातलिमुखेन मारीचदर्शनप्रसङ्गो मार्गदेशस्थानीयो मातलिरिति नायके बहुमानोत्पत्त्यर्थश्चेत्यादिकं द्रष्टव्यम् । आसनस्थ इति कृतकर्मत्वेन वन्दनयोग्यावसरत्वं व्यञ्जयति । अवलोकयेति । दर्शनस्य प्रीतिबहुमानादिगर्भत्वमवेत्युपसर्गेण द्योत्यते । अनेन राज्ञः परमलाभो गम्यते । यथा "कल्याणदेशिककटाक्षसमाश्रयेणे"त्यादि । दाक्षायणीत्यदितेराभिजात्यबोधिका संबुद्धिः । पुत्रस्येति । ते पुत्रस्येति प्रीतिपात्रत्वं प्रकाशयति । मघोन इत्यत्रापि संबध्यते । रणशिरस्यग्रयायीति राज्ञो वीर्यातिरेकं दुष्यन्त इत्यभिहित इति लोकप्रसिद्धिं भुवनस्य भर्तेति चक्रवर्तित्वं भर्ता न तु स्वामीति प्रजावात्सल्यं च प्रदर्शयति । अथास्याग्रयायित्वमात्रकथनेनापरितुष्यन्ननितरसाधारणमपदानमप्याह चापेनेत्यादि । चापे प्रयोजककर्तृत्वारोपणं चारुत्वार्थम् । विनिवर्तितं शमितमसुरसंहारादिति भावः । कर्मणां जातं समूहः यस्य । अत एव मघोनः आभरणं शोभामात्रफलकत्वात् । शोभायाः पूर्णत्वं दर्शयति कोटिमदिति । निर्व्यापारत्वेनाकुण्ठिताश्रीत्यर्थः । तदिति प्रसिद्धौ । अत्र वीर्यसंपद्वर्णनादुदात्तम् । चापकर्तृककुलिशकर्मजातविनिवर्तनरूपकार्येण निखिलपरिपन्थिसंहारलक्षणं कारणं गम्यत इति पर्यायोक्तं प्रस्तुताङ्कुरो वा । वीररसोपस्कृता राजविषयिका रतिर्भावः । उक्तमनुवदति संभावणीये-

मात—आयुष्मन्नेतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः। तदुपसर्प।

राजा—मातले। एतौ।

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम्।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवास्पदं या
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥ २७ ॥

मात—अथ किम्।

राजा—(उपेत्य) उभाभ्यामपि वासवनियोज्यो दुष्यन्तः प्रणमति।

---

ति। संभावनीयः ऊह्यः अनुभावः प्रभावो यया। यत्राकृतिस्तत्र गुणा इति न्यायादाकृत्या तादृशमनुभावं संभावयामीत्यर्थः ॥

आयुष्मन्निति। पुत्रप्रीतिः पुत्रसहचरत्वाद्राज्ञः। तस्याः पिशुनेन सूचकेन। सर्वे भावाश्चक्षुषीति न्यायात्। मातल इत्यादि। एतौ तदिदं द्वन्द्वमिति संबन्धः। काक्का प्रश्नः। इदंशब्दः प्रसिद्धौ। तच्छब्दार्थं विवृणोति प्राहुरित्यादि। मुनयः प्राहुरित्यनेनास्यार्थस्य प्रसिद्धिर्दर्शिता। द्वादशधा स्थितस्य तेजसः द्वादशानामादित्यानाम्। तेजःपदं जगत्प्रकाशकत्वेनोत्कर्षं द्योतयति। एवमुत्तरवाक्ययोरिन्द्रयोरप्युत्कर्षो गम्यते। कारणं जनकम्। यज्ञे भागो देवानामीश्वरमिन्द्रम्। आत्मभुवः ब्रह्मणः। परः उत्कृष्टः। पुरुषः पुरुषोत्तम इत्यर्थः। भवाय जन्मने। आस्पदं प्रतिष्ठाम्। चक्रे इन्द्रावरजत्वेनावतीर्ण इत्यर्थः। दक्षान्मरीचेश्च संभवो यस्य तत् दाक्षायणीमरीचनामकम्। अत एव स्रष्टुः ब्रह्मणः एकः दक्षो मरीचिश्चान्तरे यस्य तत् ब्रह्मपौत्रम्। अत्राद्यं वाक्यत्रयं द्वन्द्वस्य क्रमेण महिमोत्कर्षं प्रतिपादयति। तत्साधकं श्लाघ्यजन्मत्वं चतुर्थवाक्येनोक्तम्। पादत्रये अङ्गभूतमहापुरुषचरितकथनादुदात्तम्। आदित्यादिविषयकरत्याद्युपस्कृता द्वन्द्वविषयिका रतिर्भावः ॥

उभाभ्यामिति। वासवस्य नियोज्यः किंकर इति करुणापात्र-

मारी—वत्स चिरं पृथिवीं पालय ।
अदि—अप्पतिरहो होहि । (अप्रतिरथो भव)
शकु—दारअसहिदा सउंदळा वो पादवंदणं करेइ । (दारकसहिता शकुन्तला वां पादवन्दनं करोति)
मारी—वत्से ।

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोम्या सदृशी भव ॥ २८ ॥

अदि—जादे भत्तुणो बहुमदा होहि । (पुत्रि भर्तुर्बहुमता भव) अवस्सं दे दीहायू वच्छो उभयकुळणंदणो होदु । (अवश्यं ते दीर्घायुर्वत्स उभयकुलनन्दनो भवतु) उपविसह । (उपविशत)

(सर्वे प्रजापतिमभित उपविशन्ति)

मारी—(एकैकं निर्दिशन्)

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं वः समागतम् ॥ २९ ॥

---

त्वं सूचयति । आशिषं प्रयुङ्क्ते वत्स इति । वत्सेति पितृवद्व्यवहारः पुत्रवात्सल्यं सूचयति । पृथिवीमित्यन्वर्थम् । अत्र सुचिरायुष्कत्वं चक्रवर्तित्वं चाशास्यते । अप्पदिरहो होहीति । तथात्वे हि पृथिव्याः परिपालनं पुरन्दरस्य साहाय्यकं चोपपद्येतेति भावः । दारअ इति । दारकः पुत्रः । आखण्डलेति । आखण्डलेत्यन्वर्थम् । पौलोम्या शच्या । सदृशीति महादेवीपदप्राप्त्यादिनेति भावः । अत्र भवेतिपदं भवत्विति विपरिणामेनाद्यवाक्ययोरपि संबध्यत इत्याशीर्वादत्रयम् । यद्वान्त्यवाक्य एवाशीः पूर्ववाक्यद्वयं तत्साधकमिति काव्यलिङ्गम् । वात्सल्यं भावः ॥

अदितिश्चाशिषं करोति जाद इति । उपविसहेति नियोगः । तदङ्गीकारं दर्शयति सर्वे इति । अथ तेषां संगममभिनन्दति दिष्ट्येति । साध्वीति पृथक्त्वमाह । सदभ्यर्हितम् । "प्रशस्तेऽभ्यर्हिते च

राजा—प्रागभिप्रेतासिद्धिः पश्चाद्दर्शनमपूर्वो वोऽनुग्रहः । पश्यतु भवान् ।

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु संपदः ॥ ३० ॥

मात—एवं विधातारः प्रसीदन्ति ।

---

सन्नि''त्यमरः । भवानिति पूज्यत्ववाची । स्वानुभवगोचरं दृष्टान्तमाह श्रद्धेति । श्रद्धा आस्तिक्यबुद्धिः । वित्तं द्रव्यसञ्चयः । विधिर्यागादिक्रिया । साध्वी शकुन्तला इदं सदपत्यं भवानिति वस्त्रितयं समागतमिति यत् एतत् श्रद्धा वित्तं विधिश्चेति समागतं त्रितयमित्यर्थः । अत्र निदर्शना । तया वः संगमः श्रद्धादीनां संगम इवेत्युपमा गम्यते । तया च संगमस्य रम्यत्वजगदभ्युदयहेतुत्वादिकं पृथग्भावस्य शोच्यत्वादिकं च द्योत्यते । शकुन्तलादीनां प्रत्येकं श्रद्धादिसाम्यं च विवक्षितमिति तदनुरोधेनापत्यपदेन पुत्रनिर्देशः । तदुपमानवाचकस्य वित्तपदस्य नपुंसकत्वादित्यलम् ॥

भगवन्नित्यादि । भगवन्नैश्वर्यादिगुणपरिपूर्ण । अनेन तदनुग्रहस्याभिप्रेतसाधनसामर्थ्यं सूच्यते । अभिप्रेतस्य पुत्रकलत्रसंगमस्य सिद्धिः । अपूर्वः पूर्वं कचिदपि न दृष्टः । उक्तमुपपादयत्युदेतीति । अत्राद्यार्धं दृष्टान्तप्रदर्शकम् । निमित्तनैमित्तिकयोः हेतुकार्ययोः । अयं क्रमः उक्तपूर्वापरीभावरूपः क्रमः । अस्तीति शेषः । व्यतिरेकमाह तवेति । तुशब्दो विशेषे । नैमित्तिक्यः संपदो मम पूर्वमासन् निमित्तभूतस्तव प्रसादः पश्चादिति विशेष इत्यर्थः । अतोऽपूर्वं इति संबन्धः । अत्र विस्मयो भावः । नात्र विस्मयावकाश इत्याशयेनाहैवमिति । विधातारः प्रजापतयः ॥

राजा—भगवन्निमामाज्ञाकरीं वो गान्धर्वेण विधिनोपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मद्गोत्रस्य कण्वस्य । पश्चादेनामङ्गुलीयदर्शनादूढपूर्वामवगतोऽहं तच्चित्रमिव मे प्रतिभाति ।

यथा गजो नेति समक्षरूपे
तस्मिन्नतिक्रामति संशयः स्यात् ।
पदानि दृष्ट्वा तु भवेत् प्रतीति-
स्तथाविधो मे मनसो विकारः ॥ ३१ ॥

मारी—वत्सालमात्मापचारशङ्कया । सम्मोहोऽपि त्वय्यनुपपन्नः । श्रूयताम् ।

---

अथ प्रियाविस्मरणकारणं जिज्ञासमानः पृच्छति भगवन्नित्यादि । भगवन् उत्पत्तिं चेत्यादिलक्षित । अनेन दिव्यज्ञानसंपत्तिः प्रकाश्यते । गान्धर्वेणेति स्मृतिशैथिल्यस्यासंभाव्यत्वं सूचयति । कस्यचिन्न तु बहोः । कालस्येति । अनन्तरमिति शेषः । युष्मद्गोत्रस्येति भवतोऽप्यपराद्धोऽस्मीति द्योतयति । अपराद्ध इत्यर्थ आद्यजन्तम् । अथ स्वप्रतीतेरसंभवद्दृष्टान्तप्रदर्शनेन चित्रत्वमुपपादयति यथेति । इतीति इति बुद्धिरित्यर्थः । गजादन्यः कश्चिदिति निर्णय इति यावत् । स्यादित्यत्रापि संबध्यते । समक्षरूपे प्रत्यक्षस्वरूपे । तस्मिन् गजे । इदं पूर्वोत्तरवाक्ययोर्योज्यम् । अतिक्रामति तिरोहिते सति । संशयः गजो वा न वेति । पदानि पादन्यासप्रतिबिम्बानि । तस्येति विपरिणामेन तस्मिन्नित्यस्यात्रानुषङ्गः । स्यात् भवेदिति च संभावनायाम् । प्रतीतिः मया दृष्टो गज एवेति निश्चयः । तथाविधः तत्प्रकारः । मनसो विकारः प्रतीतिः । पूर्वमस्यामुपगतायामियं न मम भार्येति पुनस्तिरोहितायां भार्या वा न वेति पश्चादङ्गुलीयकदर्शने मम भार्यैवेति च प्रतीतिरित्यर्थः । उपमा निदर्शना वा । अत्र "कुर्यान्निर्वहणेऽद्भुत"मिति वचनानुरोधेन एतदवधि तत्र तत्राद्भुतो रसो वर्णितः ॥

कण्वविषयकापराधशङ्कां निरस्यति वत्सेत्यादि । अलमात्माप-

राजा—अवहितोऽस्मि ।

मारी—यदैवाप्सरस्तीर्थावतरणात् प्रत्यादेशविक्लवां शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणा त्वया प्रत्यादिष्टा नान्यथेति । स चायमङ्गुलीयदर्शनावसानः ।

राजा—(सोच्छ्वासम्) एष वचनीयान्मुक्तोऽस्मि ।

शकु—(स्वगतम्) दिट्ठिआ कारणप्पच्चादेसी अज्जउत्तो । ण खु सत्तं अत्ताणं सुमरामि । (दिष्ट्या कारणप्रत्यादेशी आर्यपुत्रः । न खलु शप्तमात्मानं स्मरामि) अहव पत्तो मए सावो विरहसुण्णहिअआए । अदो एव्व सहीहिं अच्चादरेण संदिट्ठ म्हि भत्तुणो अंगुलीअअं दंसइदव्वत्ति । (अथवा प्राप्तो मया शापो विरहशून्यहृदयया । अत एव सखीभ्यामत्यादरेण सन्दिष्टास्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति)

मारी—वत्से विदितार्थासि । सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः । पश्य ।

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तथैव ।

---

चारशङ्केति । शकुन्तलाया एवापराध इति भावः । सर्वदा प्रबुद्धस्य मम कथं तदा सम्मोहोऽभूदित्याशङ्कामपनयति सम्मोहोऽपीति । उपपत्तिमाह यदैवेत्यादि । अनेन पञ्चमाङ्कोपक्षिप्तार्थो विवृतः । अत्र तरत्यनेनेत्यवतरणं सोपानमार्गः । दुर्वासस इत्याद्यवगमप्रकारोक्तिः ॥

सोच्छ्वासमिति । उच्छ्वासो भयविच्छेदानुभावः । भयं च लोकापवादात् । तदेव दर्शयन्नाहैष इति । वचनीयात् लोकापवादात् । दिट्ठिआ इति । दिष्ट्येत्यानन्दे । तद्धेतुमाह कारणेति । न त्वकारणपरित्याग इति भावः । अकारणप्रत्यादेशी नेत्यपि पाठः ॥

अथ शकुन्तलायाः संशयं समूलमुन्मूलयितुमाह वत्स इत्यादि ।

छाया न मूर्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३२ ॥

राजा—भगवन्नत्र खलु मे वंशप्रतिष्ठा ।

मारीचः—तथाभाविनमेवं चक्रवर्तिनं पुत्रमवगच्छतु भवान् । पश्य ।

रथेनानुत्खातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ ३३ ॥

राजा—भवता कृतसंस्कारे सर्वमस्मिन् वयमाशंसामहे ।

---

विदितार्था विदितपरमार्था । असीति । अत्र काका प्रश्नः । ततः किमित्यत्राह सहेति । सहधर्मचारिणमित्यनेन मन्युकरणे प्रत्यवायोऽपि स्यादिति सूच्यते । मन्युः कोपः । परमार्थं विवृणोति शापादिति । शापादिति स्मृतिरोध इत्यत्रान्वेति । असीति त्वमर्थेऽव्ययम् । प्रतिहता प्रतिषिद्धा अलब्धप्रवेशेति यावत् । अत्र हेतुः स्मृतीति । स्मृतिरोधेन रूक्षे क्रूरे । भर्तरि भर्तृमनसीत्यर्थः । अपेतमसि अङ्गुलीकदर्शनेन शापनिवृत्त्या विगताज्ञाने । भर्तरीत्यनुषज्यते । प्रसृता लब्धप्रवेशा । तथैव पूर्ववदेव । सुप्रतिपत्तये दृष्टान्तमाह छायेति । छाया प्रतिबिम्बम् । मूर्च्छति फलति । मलं मालिन्यम् । शुद्ध इति । छायेत्यत्रापि दर्पण इति पूर्वत्र कपे चान्वेति । अत्र दृष्टान्तोऽलङ्कारः । तेन मनसः प्रसादस्य नैसर्गिकत्वं सूच्यते ॥

वंशस्याविच्छेदमवजिगमिषुः पृच्छति भगवन्नित्यादि । काका प्रश्नः । अत्र खलु अस्मिन् बालक एव । तथेत्याह तथाभाविनमिति । तथाभाविनं वंशप्रतिष्ठाकरं भविष्यन्तम् । विशेषमप्याह चक्रवर्तिनमिति । चक्रवर्तित्वमुपपादयति रथेनेति । उत्खातो निम्नोन्नतप्रदेशः तदभावोऽनुत्खातः तेन स्तिमिता निश्चला गतिर्यस्य तेन गगनचारिणेत्यर्थः । अनेन दिव्यत्वं दर्शितम् । पुरा जयति जेष्यति । "यावत्पुरे"

अदि—भअवं इमाए दुहिदुमणोरहसंपत्तिए कण्णो वि दाव तव पस्सचरेहिं तापसेहिं सुदवित्थारो करीअदु । दुहिदुवच्छला मेणआ इह एव्व मं उवअरंती चिट्ठइ । (भगवन्ननया दुहितृमनोरथसंपत्त्या कण्वोऽपि तावत्तव पार्श्वचरैस्तापसैः श्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनका इहैव मामुपचरन्ती तिष्ठति)

शकु—मणोरहं खु मे भणिदं भअवदीए । (मनोरथः खलु मे भणितो भगवत्या)

मारी—तपःप्रभावात् प्रत्यक्षं सर्वमत्रभवतः ।

राजा—अतः खलु मामनतिक्रुद्धो गुरुः ।

मारी—तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः । कः कोऽत्र भोः ।

(प्रविश्य)

शिष्यः—भगवन्नयमस्मि ।

मारी—गालवेदानीमेव विहायसा गत्वा तत्रभवते कण्वाय मद्वचनात् प्रियमावेदय । यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ।

शिष्यः—यदाज्ञापयति भगवान् ।

(निष्क्रान्तः)

मारी—वत्स त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमास्थाय ते राजधानीं प्रतिष्ठस्व ।

राजा—यदाज्ञापति भगवान् ।

---

ति लट् । अप्रतिरथः निस्सपत्न इति जयफलं दर्शितम् । अन्यच्चाहेहेति । इहाश्रमे सत्त्वानामित्यादिना नामद्वयनिरुक्तिः । अत्र पूर्वार्धे भाविकमलङ्कारः । तदुक्तमनुमोदते भवतीति । आशंसामहे निश्चिनुमः ॥

अथ कर्तव्यं विमृश्याह भअवं इवि । क्रियतामिति कण्वस्याप्येतदभ्युदयसंविभागो भवत्विति भावः । तदुक्तमभिनन्दति मणोरहमिति । तपःप्रभावादिति । सति ध्याने सर्वं प्रत्यक्षमित्यर्थः । अतो

मारी— तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञः स्वर्गिणो भावयालम् ।
युगशतपरिवर्तानेवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ ३४ ॥

राजा—भगवन् यथाशक्ति श्रेयसि प्रसरिष्ये ।

मारी—किं ते भूयः प्रियमुपहरामि ।

राजा—अतः परमपि यदि भगवान् प्रसन्नः कर्तुमिच्छति । एतावदस्तु भरतवाक्यम् ।

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहिता महीयसाम् ।

---

नात्र संदेष्टव्यमिति भावः । अथ लौकिकाचारमनुसरन्नाह तथापीति । कः कोऽत्रेति संदेशार्थम् । गालवेत्यादि सन्देशप्रकारः । विहायसा गत्वेति । विलम्बो मा भूदिति ॥

उपसंहर्तुमिच्छन्नाह वत्सेति । गमनारम्भसमुचितामाशिषं प्रयुङ्क्ते तवेति । बिडौजा इन्द्रः । विड् व्यापकमोजो यस्येत्यन्वर्थम् । प्रजासु विषये । विततयज्ञ इति भावनप्रकारकथनम् । अलंभावय संभावय । युगशतानां परिवर्तानावृत्तीः अतिचिरं कालमित्यर्थः । नयतमिन्द्रस्त्वं च । उभयलोकौ भूमिः स्वर्गश्च । यथा रघौ । "दुदोह गां स यज्ञाय सस्याय मघवा दिव"मित्यादि ॥

सविनयमनुवदति भगवन्निति । उपसंहरति किं त इत्यादि । अनेन मारीचस्य औदार्यं कविना प्रकाश्यते । उपहरामि उपहारत्वेन क-

ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३५ ॥

(निष्क्रान्ताः सर्वे)

इति महाकवेः श्रीकालिदासस्य कृतौ शाकुन्तले

सप्तमोऽङ्कः ॥



---

रोमीति राज्ञि बहुमानं द्योतयति । अत इति । अतः परमपि कर्तुमित्यन्वयः । एतावदिति । तर्हीति शेषः । भरतवाक्यमिति । भरतो नटः तस्य प्रस्तुतानुकार्याभेदेन मङ्गलाशासनतत्परं वाक्यमित्यर्थः । निर्वहणसन्धेरन्त्यं प्रशस्तिरूपमङ्गमिदम् । एतावदित्युक्तं विवृणोति प्रवर्ततामिति । प्रकृतिः सप्ताङ्गी तस्या हिताय हितं कर्तुम् । पार्थिव इति तत्रौचित्यं सूचयति । प्रवर्ततामिति तथा सत्येव प्रजानां राज्ञश्च सुखमिति भावः । अनेन राजानं लोकं प्रति चाशीः कृता । कवीन् प्रत्याह सरस्वतीति । प्रवर्ततामित्यनुषज्यते । सरस्वती काव्यात्मिका । श्रुतिमहिता श्रोत्रेन्द्रियपूजिता चमत्कारकारिणीति यावत् । महीयसां महाकवीनाम् । अथात्मानं प्रत्याह ममापीति । क्षपयतु नाशयतु । नीललोहितो वामे नीलः दक्षिणे लोहितश्च । अत्र हेतुमाह परीति । परिगता मिलिता देहार्द्धतादात्म्यमापन्नेति यावत् । शक्तिः शिवा यस्य । यथाह "वामे मरतकश्यामा दक्षिणे विद्रुमारुणा । देवता दम्पतिमयी सा मे कामदुघा भवे"दिति । विशेषणाभ्यामुपास्यस्वरूपं दर्शितम् । आत्मभूः परमेश्वरः । अत्र परिगतशक्तिरित्यनेन शक्तिसेवाद्वारा पुनर्जन्मनिवृत्तिरिति आत्मभूरित्यनेन शक्तिस्तदायत्तेति च द्योत्यत इत्यप्याहुः ।

अत्र समुच्चयालङ्कारः। परमेश्वरविषयकरतिश्च भावः। अत्र पारमेश्वरेण कविपरमेश्वरेणोपक्रमोपसंहारयोरेकरूपं मङ्गलमनुष्ठितं पद्येनानेन स्वाशंसापि प्रकाशिता। सरस्वती स्वकविता महीयसां श्रुतिमहिता सती प्रवर्ततां प्रकर्षेण सर्वोत्कर्षेण वर्ततामिति द्वितीयपादार्थः। अत्रेदमत्रधेयम्। त्रीणि किल परमात्मनो रूपाणि; सकळं सकळनिष्कळं निष्कळं चेति। तत्र सकळं त्रिलोचनत्वनीलकण्ठत्ववामार्द्धविग्रहत्वादिविशिष्टमुपासकानामपगतपापमले हृदयकमले प्रकाशमानं जीवन्मुक्तैः श्रीनारदादिभिश्चक्षुषा चापीयमानम्। मूलकारणमायासंबद्धा विकाररहिता मूर्तिः सकळनिष्कळा यामाश्रित्यैव सर्वस्यास्य जगतः स्थितिः। कालाद्यनवच्छिन्नं सच्चिदानन्दात्मकं निर्गुणं रूपमेव तृतीयम्। सर्वमिदं श्रीसूतसंहिताप्रथमश्लोकद्वयव्याख्यानावसरे विद्यारण्यस्वामिभिः स्फुटीकृतम्। एतानि त्रीण्यपि पारमेश्वराणि रूपाणि परमभागवतो महाकविरत्र नीललोहितः परिगतशक्तिः आत्मभूः इति पदत्रयेण क्रमेणानुसंदधाति। नीललोहित इति सकळस्य, शक्तिशब्दस्य मायावाचित्वात् परिगतशक्तिरिति सकळनिष्कळस्य, आत्मा चासौ भूश्चेति कर्मधारयाश्रयणेनात्मभूरिति देशानवच्छिन्नसत्तारूपनिर्गुणब्रह्मणश्च प्रतिपादनात्। एतादृशपारमेश्वररूपप्रतिसंधानं च प्रकृते पुनर्भवक्षपणप्रार्थनायामत्यन्तोपयोगि। प्रेक्षावतामप्यतिसुन्दरमपवर्गमार्गं करुणानिधिः कालिदास आविष्करोति। आद्यपद्येनेशस्याष्टविग्रहस्वीकाररूपं सर्गं स्थापनया नाटकेन च संसरतः पुषस्यातिकृच्छ्रेण परविद्यालाभं च प्रतिपाद्यान्ते पुनर्भवाभावरूपकैवल्यस्य परमप्रार्थनीयतां जगदीश्वरप्रसादैकलभ्यतां च प्रकटीकरोति कविसार्वभौम इत्यहो परा काष्ठा औचित्यस्येति सर्वमवदातम्॥

गीर्नः सदोषापि भवेन्मनोज्ञा

शाकुन्तलव्याकृतितामवाप्य।

भानोः कठोरापि मरीचिरिन्दोः
संपर्कतः सौम्यतरत्वमेति ॥

गम्भीरं नाटकं केदं क वयं चाल्पबुद्धयः ।
सहन्तामेतदस्माकं साहसं सुधियो जनाः ॥

सन्तः संशोधयन्त्वेतां विवृतिं नो विमत्सराः ।
स्खलनं विषमे मार्गे सुदृशामपि संभवेत् ॥

विद्यां नित्यं नु कोलम्बो विना यं देवमर्पिता ।
तत्पदे दीपिकैषार्थान् दर्शयन्ती चिरं जयेत् ॥

इति श्रीरामवर्मरामविरचितायां सारार्थदीपिकाख्यायां
शाकुन्तलव्याख्यायां सप्तमोऽङ्कः ॥

॥ शुभम् ॥



